3, 24–29

नारी विकेशी भुजगैर्निबद्धा
चौरैररण्ये मुषितासिताङ्गी ।
चौराद्द्रुतं धावति सा विनग्ना
कीटे ऽपरा क्रन्दति रौद्रमुख्यैः ॥२४॥
हिंस्रो नरः कांचनवर्मधारी
बिले निधानेष्टतिकर्मठश्च ।
भग्नव्रतेच्छो ऽस्त्रविदष्टमे ऽन्त्यः
सन्तप्यते स्वैर्मुषितः सहायैः ॥२५॥
व्याकृष्टचापो हयचण्डवेगो
रथास्त्रशिक्षः कृतभाण्डधारी ।
आढ्यो नरः कांचनदंशिताङ्गो
धनुर्धरे कांचनकुण्डलार्चिः ॥२६॥
नारी विलासार्पितचारुशोभा
भद्रासनस्था कनकांशुगौरी ।
रत्नाकरे हेममयं समुद्ग-
⟨मुद्ग⟩माहृत्य दाने ऽभिरता द्वितीया ॥२७॥
कूर्ची नरः श्यामतनुर्विलासी
कौशेयवासा मदनातुरात्मा ।
केयूरमुक्तागुणलम्बवक्षा
गान्धर्वगन्धप्रणयी तृतीयः ॥२८॥
नीलांजनाभो मकरोग्रदंष्ट्रो
दण्डायुधः कालकृतान्तकर्मा ।
f. 11 मर⟨ध्यो⟩श्मशाने गुरुलोमवर्मा
स्थितो मृगास्ये ऽकृशमूर्तिराढ्यः ॥२९॥

Apparatus

24c चोराद्द्रुतं corr. to चोरद्द्रुतं N    विलग्ना N
24d चोचमख्यैः N    25c नग्न° N    26b °शिक्षा N
27b °कांशसौरी N    27d °माहृ N    द्वितीये N
28a कुर्ची N    29d कृतमूर्ति° N

3,30–35

दीप्तद्युतिर्नीलपिशाचदन्तः
प्रबद्धवर्मासिशिरो वपुष्मान् ।
कुर्वन्नदीबन्धतडागवाहान्
मृगे द्वितीयः परिचंचरीति ॥३०॥
त्रस्ताग्रकेशी प्रविदारितास्या
लम्बोदरी रक्तकृशायताङ्गी ।
पाशाग्रहस्ता मृतचैलधात्री
हिंसाभिरामा मकरे तृतीया ॥३१॥
दंष्ट्राकरालो विटिलेन्द्रजालो
नीलाम्बुदाभो मलिनोर्ध्वकेशः ।
निस्त्रिंशकर्माजिनचीरवासा
सद्रुद्रभावः प्रथमो नृकुम्भे ॥३२॥
प्रदीप्तशस्त्रः कपिलोर्ध्वकेशः
कपालमालाकुलबद्धचर्मा ।
सन्ध्याघनाभो ऽपसृतोग्रदंष्ट्रो
वृतश्च पाशादिगणैर्द्वितीयः ॥३३॥
नानायुधः कांचनचन्द्रमाली
नरो वराहाकृतिघोरमूर्तिः ।
रत्नान् प्रकुर्वन् मलये तपस्वी
कुम्भे तृतीयः कपिपिङ्गकेशः ॥३४॥
नारी सुकाया विपुलायताक्षी
कौशेयचामीकरभूषिताङ्गी ।
पोतेन सन्तीर्णमहार्णवस्था
रत्नाकरार्थे च झषद्वयाद्या ॥३५॥

Apparatus

30b प्रबृद्ध° N   31a सस्त्राग्र° N   °रितास्य N   32a °तेन्द्रिजालो N   32b मलिनार्ध्व° N, corr. Ingalls   32d अलुद्र° N   33a कपिलार्ध्व° N, corr. Ingalls   35b कौशेयवासी° N   35d रत्नाकरङ्गा वि N

3,36–41

कलौ कराला प्रमुखी प्रचण्डा
नारी विवस्त्रा सितलोहकाली ।
प्रणष्टवस्त्राभरणा विरौति
वस्त्रार्थिनी मीनयुगे द्वितीया ॥३६॥
आ(भी)रसिहाभरणा विकेशी
नारी विरावं प्रकरोति भीता ।
सृगालमार्जारवराहरूपै-
र्विभूषिता भूतगणैर्जलस्था ॥३७॥
एते निरुक्ता यवनैर्महद्भि-
र्होरार्थधर्मश्रु(ति)विद्भिराद्यैः ।
द्रेक्काभिधानां भवनत्रिभागा-
श्चिन्ताश्रयैः स्वप्रकृ(ला)नुबन्धैः ॥३८॥
अंशेश्वरांशग्रहदर्शयोगा
विकल्पनादिन्द्रियदृष्टिरेषा ।
जगत्यनेकाकृतिभावंलिङ्गै-
र्निदर्शनाकारणतो यथार्था ॥३९॥
क्षेत्रांशकाले गदिता विशेषा
ग्रहस्य ये वा करणस्वभावाः ।
f. 11v तेषां | फलं कृत्स्नमनूनशक्तं
तथैव सर्वार्थपरिक्रियासु ॥४०॥
ग्रहस्य राशेश्च यदीरितं प्रा-
ग्रूपं स्वभावो गुणलक्षणं च ।
अन्योन्यसंयोगविकारजं तु
रूपं विधार्यं विदुषा क्रमेण ॥४१॥

Apparatus

36a कली N 37a भिकेशी N 37b निरावं N
38d °श्रयस्व° N 39c °भागलिङ्गैः° N 40c–d
°शक्तमेषेव N 41a रासेस्व N 41d विधर्मं N

3,42

गृहग्रहांशैर्विविधैर्विकारै-
र्नवांशकस्याकृतिलिङ्गमाहुः।
राशेः स्वराशिक्रमसंनिवेशात्
बद्धातिशक्तं यवनां(शा)माहुः॥४२॥
यवनजातके द्रेक्काणस्वरूपस्तृतीयः॥

Apparatus
42c राशेः] राशि° N    42d बद्धा] बन्धा° N, corr. Ingalls    यवनां(शा)माहुः: Ingalls

4,1–6

अनेकलिङ्गप्रकृतीनि यानि
  द्रव्याणि भूव्योमजलाश्रयाणि ।
भवर्गभागप्रभवानि तानि
  वक्ष्ये यथायोगविधिक्रमेण ॥१॥
भूम्यग्न्यसृक्छस्त्रसुवर्णताम्र-
  धात्वग्निजीवाहवमन्त्रकानाम् ।
कुमारबालव्यजनात(प)त्र-
  शक्तिध्वजस्तेनचमूपतीनाम् ॥२॥
अजाविकारीबुकटुद्रुमाद्रि-
  सङ्केत(ट)ग्धाग्रहितव्रतानाम् ।
मनःशिलागैरिकरक्तपुष्प-
  द्रव्याधिकस्य विहितो ऽजराशिः ॥३॥
क्रीडाविहारस्रगपत्यनारी-
  वीथीवनोद्यानसभाप्रपानाम् ।
सर्पिर्दधिक्षीररसशष्पपुष्प-
  संस्थानगोलाङ्गलकर्षकानाम् ॥४॥
गोसुक्रशम्याशकटाक्षचक्र-
  गन्धोक्ष(स)त्विड्महिषर्षभाणाम् ।
सौभाग्यकर्मप्रियमण्डनानां
  विभुर्वृषः कोशगृहाश्रयाणाम् ॥५॥
पुंस्त्रीरतिद्यूतविहारशिल्प-
  गान्धर्वगीतस्मितवादितानि ।
व्यायामचित्रायुधलेख्ययोधा-
  संवादसन्मन्त्रितपुस्तकानि ॥६॥

Apparatus

1b द्राव्याणि N   2a भूम्यग्निसृक्छस्त्र° N   2b °मन्त्रमाला: N   2c °नान(म)न्त्र° N   3a °कानीबु° N   3b °वकेत्र(ट)ग्धा° N   3d °धिकं च N   4d °सन्थान° N   5b °गन्धाक्षत्विड्म° N   6c °योध्य° N

4,7–11

द्युतार्थयोगास्त्र(धना)नौषधानि
ज्ञानोपदेशव्यवहारधीराः।
नैपुण्यवैहारिकहस्तजीवा
राशेस्तृतीयस्य नटाः सधूर्ताः ॥७॥
नारीतपस्विश्रुतिवृद्धविप्राः
सरित्सिताख्याः कुमुदोत्पलानि।
द्रव्याणि शीतानि मृदुद्रवाणि
स्वादूनि संजीवनदर्पणानि ॥८॥
नक्राः समण्डूककुलीरकूर्मा-
f. 12 शोकाः सशष्पाणि च वारिजानि।
श्वेताः शकुन्ताः पलजीविनश्च
राशेश्चतुर्थस्य परिग्रहाः स्युः ॥९॥
शैलाटवीदुर्गविषास्थिकाष्ठ-
त्वग्मांसरोमाजिनतन्त्रकाणाम्।
अरण्यजानां नखिदन्तिशृङ्गि-
चतुष्परूक्षौष्ठरसौषधीनाम् ॥१०॥
व्याधेषुवृद्धिप्रतिसुख्यभूतां
म्लेच्छासिशस्त्रौर्णिककांचनानाम्।
हग्निद्विषन्मन्त्रभृद्द्रुग्वतां च
सिंहो निरुक्तो विधुरौजसानाम् ॥११॥

Apparatus

7a °योगास्त्रि° N  7b ज्ञानार्थदेश° N, corr. Ingalls °वहारहाराः N  7c °कदस्तजीवा N, corr. Ingalls 8b सरीस्सिताप्या N  8d स्वाप्यूति N  9a नक्त्राः N  10b °तन्त्वानाम् N  10c नखि° N  10d °चतुष्ट° N  11a °रूढं N  11b म्लेच्छाग्निशास्त्रार्णिक° N, corr. Ingalls  11c °द्रुग्वतानां N  11d शिंहा N

4,12–16

कन्यारतिप्रार्थितसङ्गतह्री-
    चलन्नितम्बद्रवधूमधूपाः ।
मुख्यौष्ठरा(गां)जनमात्रभूषा-
    स्त्रीक्रीडनादर्शसमुद्गकानि ॥१२॥
प्रदीपिकानौशिबिकौत्तरीया-
    स्त्रीशिल्पकाव्यश्रु(ति)पत्रलेखाः ।
निरागबाणीमणिरत्नधूप-
    संख्यानगीतादिकलाश्च षष्ठे ॥१३॥
तुलादिमानाकषपण्यवीथी-
    हिरण्यरत्नाम्बरमौक्तिकानाम् ।
उद्घोषिकोद्देशिकसार्थवाह-
    विक्रेतृनैर्याणि(क)मूर्तिकानाम् ॥१४॥
विटाद्यधूर्तानृतहस्तजीवि-
    दौत्यार्थकृत्यश्रुतिपण्डितानाम् ।
षाड्गुण्यमेयादिकलावराणां
    तुलाधरः सम्पठितोऽधिकश्च ॥१५॥
श्वभ्राहिवल्मीकविषाश्मशस्त्र-
    प्रणष्टदुष्टज्वर(लगा)हृताश्च ।
सरीसृपा वृश्चिकबभ्रुगोधाः
    सर्पादयो रन्ध्रविचारिणोऽन्ये ॥१६॥

Apparatus

12b °दूम्यधूपाः N    12c °रा(गां)जन° Ingalls    12d समुद्गवानि N, corr. Ingalls    13c विरागवानौमनि° N    14c उद्योषिको° N    15a °नृतदस्त° N, corr. Ingalls    15c सद्गुण्य° N, corr. Ingalls    16a श्वभ्राग्नि° N, corr. Ingalls    16b °हृतानाम् N

4,17-21

वधारिपातोपहतप्रदुष्ट-
    दीनान्यभार्याश्रवपत्न्यनिष्टाः ।
मांसोदरावस्थनृगुह्यभाण्ड-
    साङ्ग्रामभस्मादि च वृश्चिके स्युः ॥१७॥
हयद्विपस्यन्दनचक्रचाप-
    वर्मास्त्रयोधायुधमन्त्रबाणाः ।
वेदारणीमन्त्रकहव्यभाण्ड-
    देवर्त्विगाचार्यहविर्द्विजाश्च ॥१८॥
ज्ञानोपदेशागमवाग्वरिष्ठ-
    काव्यस्मृतिव्याकृतमङ्गलार्थाः ।
राष्ट्राण्यमात्याः पुरमन्त्रिपौरा
    जलद्विजाश्चे कृमिशैलपाताः ॥१९॥
f. 12v |अन्ये मृगा वृक्षलवङ्ग|वाता ।
    दृष्टा वित्रस्ता मकरो⟨रगाः⟩ स्युः
    ससीसलोहायसधातुपाशाः ॥२०॥
कुसस्यधान्याकरनीचदास-
    सेतुप्लवारण्यसरित्सरांसि ।
नौवारिजीवा मृगपक्षिनिघ्ना
    मृगाश्रया यच्च जलाधिवासि ॥२१॥

Apparatus

17a वधादि° N 17b °दीनात्रभार्याश्रवयस्त्वनिष्टाः N 17c मासोर्करावस्थरगुह्य° N 17d स्युः] न्ये N 18c वेदारुण-त्रकत्रहव्य° N 18d देवार्तिगा° N 19c राष्काण्य° N 19d °द्विजाश्वकृमि° N 20a अंन्या N वक्षलबन्धुवाता N for 20b N repeats 19d: जलद्विजाश्वकृमिशैलवाताः 20c दृष्टा N विस्रष्टा N मकरोप्र x स्य N 21a °करणीच° N 21d मृगाश्रये N

4,22-26

तडागकूपप्रतिबन्धबाधा-
    प्रेष्याश्च भीताः शबलाङ्किताङ्गाः ।
कुसस्यलोहायसकृष्णसीस-
    सपाक|×चित्रर| बद्धवृद्धाः ॥२२॥
नपुंसकप्रव्रजिताधमस्त्री-
    प्रत्यर(ायि)णो मौष्टिकदुष्टधूर्ताः ।
सुरासवाद्यम्बुधरावकाद्या
    घटादयः कुम्भभृताश्रयाः स्युः ॥२३॥
गम्भीरतोयोदधितीर्थतीर-
    नौपोर(त)वाहास्तिमिजातिशंखाः ।
नारीस्वरागारजलोपजीवि-
    स्नानाम्बरप्रेक्षणतर्पणा(नि) ॥२४॥
यज्ञद्विजेष्टामणिमुक्तिशंख-
    प्रवालतोयानि विभूषणानि ।
पुराणवेदव्रतनीतिधर्म-
    द्रव्याणि मीनद्वयसंश्रयाणि ॥२५॥
ग्राम्यस्थलारण्यजलस्वभावं
    वाय्वग्निभूम्यङ्गजलाश्रयं यत् ।
द्रव्यं गृहं तादृशमेव यद्यत्
    तत्तस्य विद्वान् परिकल्पयेत ॥२६॥

Apparatus

22b तीतत्सबला° N    22c कुसश्च° N    °कृष्टसासु° N, corr. Ingalls    22d बद्धबृन्धाः N    23b °प्रत्यर(ायि)णो Ingalls    °दस्तपूर्ताः N    23c स्वरास° N    24b नौपीनाहा° N    °स्तिमृजानसंस्थः N, corr. Ingalls    24d °प्रेहन° N    25a °ष्टामनि° N    25b प्रवालतमानि N    26b स्वाम्यान्त्यभूम्य° N    26c गृहस्तासृतमेव N    26d °कल्पयीत N, corr. Ingalls

4, 27–31

द्रव्याण्यनेकाकृतिलक्षणानि
    ग्राह्याणि राशिग्रहभैर्विकारैः।
ग्रहस्य यद्यस्य समानभावं
    द्रव्यं पृथक् तस्य हि संनिधास्ये॥२७॥
नृपाटवीशैलसुवर्णताम्र-
    सिंहानलव्यालविषौर्णिकानाम्।
सिंहासनक्रव्यमरूष्टकाष्ठ-
    द्रव्याकराणां प्रभुरुच्यतेऽर्कः॥२८॥
स्त्रीमित्रनिद्रारतिभोज्यपेय-
    शीतद्रवस्वादुरसौषधीनाम्।
स्रग्वस्त्रभूमेर्मणिमौक्तिकानां
    प्रभुः शशाङ्को लवणाम्बुजानाम्॥२९॥
माङ्गल्यपद्मद्विजदेवयज्ञ-
    धान्याकरस्थानगृहात्मजानाम्।
f.13 सुवर्णयानासनपौष्टिकानां
    प्रभुर्गुरुर्मन्त्रिमहत्तराणाम्॥३०॥
वज्रादिरत्नाकरगोसुतस्त्री-
    विवाहगन्धाम्बरभूषणानाम्।
सौभाग्यसौरभ्यसुमण्डपानां
    प्रभुर्निधीनां धनिनां च शुक्रः॥३१॥

Testimonia

With 28–34 compare *Sārāvalī* 7,7–13.

Apparatus

27a द्रव्याणि एकाकृति° N    27b ग्रामाणि N    28b °व्यात्र° N, व्याल K    28c °क्रव्यकटूष्ट° N    °कव° N, काष्ठ K    30b °गृहात्मकानाम् N, पुत्र K    30c °द्रौष्टिकानां N, पौष्टिक K    30d °महत्पराणाम् N, महत्व . . . पुर K    31a वद्रा° N, वज्रा K    31c °सौरभ्यप्रतिमण्डपानां N    31d प्रभुर्नैधीनां N

4,32-35

चमूनृपस्तेनहृताहृतानां
विषाग्निशस्त्रक्षतजाक्षतानाम् ।
सुवर्णधात्वाकरपुष्पजाति-
चामीकराणां क्षितिसूनुरीशः ॥३२॥
नानापणद्रव्यवियुक्तियुक्ति-
नैपुण्यशिल्पश्रुतिवैद्यकानाम् ।
प्रहासमन्त्रार्थविशब्दितानां
प्रभुर्बुधश्चैत्यवनस्पतीनाम् ॥३३॥
मृतान्तबद्धाहवबृद्धनीच-
कुस्त्रीकषण्ढालसटीक्षितानाम् ।
(विटीनदास्यांजनशीतलानां
कृत्स्नाधमानां प्रभुरर्कसूनुः ॥३४॥
यस्य स्वराशिप्रभवं हि यद्यद्
द्रव्यं ग्रहस्येदं हि<तं> †××लम्†)।
वाच्यं च तत्स्थानबलक्रमेण
क्रियादिसंसिद्धिफलेषु वाच्यम् ॥३५॥
यवनजातके <गृह>ग्रहद्रव्यविधिः ॥

Apparatus

32a °नृपतेन° N, चोर K   32b °जाक्षितीनां N   33a नानासुण° N, corr. Ingalls   33b °वैशमानां N, वैद्यक K   33c प्रहास्य° N   °द्विशब्दितानां N   33d प्रभुर्बुधः चैत्यवतस्पतीनाम् N, स्यातिवनस्पति K, corr. Ingalls   34b कुस्तीकषण्डा° N   34c विटभान॰ N, टीन K   °शीथलाटा N   34d °धमशानां N

5, 1-5

सूर्यात्मकं हि प्रवदन्ति पुंस्त्वं
    यत्सर्वभूताकरदेहबीजम् ।
नार्यात्मकं चान्द्रमसं तु दृष्ट-
    माधारसाध्यं वरणं च तस्य ॥१॥
स्त्रीगर्भशय्यापतितात्तु शुक्रा-
    दस्थीनि सूर्याश्रयणांशकात् स्युः ।
त्वङ्मांसमेदस्तु भवत्यसृक्त-
    श्चन्द्रांशसंस्थानवशादसृक् च ॥२॥
नानाविधं मांसवतां मितार्कः
    शरीरिणां देहनिषेककाले ।
प्रमाणतोऽह्रस्वनिकृष्टमध्या-
    न्यस्थीनि देहेषु समादधाति ॥३॥
स्थित्यंशकत्वात्मवशादपीन्दु-
    स्त्वग्वर्णमांसोपचयं करोति ।
शेषास्तु भागस्थितिजैः स्वभावैः
    स्वान् स्वान् यथोक्तेषु गुणान् विदध्युः ॥४॥
कालेऽथ पुंस्त्रीरतिसंप्रयोगे
    यद्यर्कचन्द्रावनिसूनुशुक्राः ।
स्ववर्गगाः स्निग्धवपुर्धराः स्यु-
    र्गर्भान् स्वशय्यासु समादधी‹रन्› ॥५॥

Apparatus

1c नार्यार्हवं N   चन्द्रमहं N, corr. Ingalls   1d °सध्याम्बरणं N, corr. Ingalls   2a °पतितं तु N   2b °शाका स्युः N   2c त्वग्मांसमेदोस्थि N   3a नानाविधो मांसवताक्रतो र्कः N   3d °न्यास्थीनि N   4a °शकस्त्वात्म° N   °दपीन्द्र° N   4c °स्थितिज्ञाः N   5c स्ववर्गभागाः N   5d स्वशय्यांस्तु N   समादधीरन् N

5, 6–9

तत्रार्कशुक्रावुपकारिभस्थौ
पुंसंज्ञकोत्पत्तिकरौ भवेताम्।
स्वमूलगाविन्दुदिवाकरौ तु
स्त्रीसंज्ञकं ग(र्भ)मुपादधाते ॥६॥
एतैरनिष्टापचयारिभस्थैः
शेषैरपि त्विष्टगृहोपविष्टैः।
f.13v | प्रणष्टबीजप्रसवा निषेका
भवेयुरप्यत्र गुरोर्विलग्नात् ॥७॥
जन्मन्यनिष्टा!श्रितपीडितांश-
नीचारिगाः क्षामविवर्णरूक्षाः।
उल्बान् विनिघ्नन्ति परिक्रमेण
व्यतिक्रमं वातिसृजन्ति योनौ ॥८॥
कुजास्फुजिज्जीवरवीन्दुसौर-
शशाङ्कलग्नेन्दुदिवाकराणाम्।
मासाधिप[त्य]प्रभवा दशैषां
जयोपघातैर्ग्रहवद्भवन्ति ॥९॥

Testimonia

9–12b are quoted by Utpala on Bṛhajjātaka 4, 16 and by Balabhadra.

Apparatus

6c स्वमूलभादिन्दु° N  7b °पदिष्टैः N  7d भवेयुरण्यत्र N  8a जन्मादनिष्टा!स्त्रत° N  8b नीचारिभागा N  8c जक्वान् N, corr. Ingalls  विनिर्यून्ति N  8d यौतौ N  9a कुजास्फबिज्जीव° N  9b °शशाङ्क° NBU  9c मासानिह×प्रसवाद्दशैषा N, मासाधिपत्यप्रभवो न चैषां BU  9d °वद्ब्रुवन्ति B

5, 10–15

आद्ये तु मासे कललं द्वितीये
पेशिस्तृतीये प्रभवन्ति शाखाः।
अस्थीन्यतः [स्ना]युशिराश्चतुर्थे
मज्जा तु चर्माण्यपि पंचमे तु ॥१०॥
षष्ठे त्वसृग्रोमनखो यकृच्च
चेतःस्थिताः सप्तममासचेष्टाः।
तृष्णाशनास्वादनमष्टमे स्यात्
स्पर्शोपबोधौ नवमे रतिश्च ॥११॥
श्रोतोभिरुद्घातितपूर्णदेहो
गर्भोऽर्कमासे दशमे प्रसूतः।
एवं तु विप्रादिषु गर्भसंस्थाः
सर्वेषु वाच्या दशभिन्नकालाः ॥१२॥
स्वकालसम्पद्गुणपुष्टिकारा-
स्त्वेते वपुर्वीर्यबलैरुपेताः।
पापग्रहोत्पीडितभग्नवीर्याः
स्वान् स्वान् विनिघ्नन्ति शुभार्वगाश्च ॥१३॥
त्रिंशल्लवो यादृगुपस्थितोऽर्क-
स्तादृक्स्वभावो विहितोऽन्तरात्मा।
प्राग्ल(ग्न)संस्थान्नवमांशकाच्च
चन्द्राश्रिताद्वा बलिनो वपुश्च ॥१४॥
ताभ्यां च मूर्तिः शशिसङ्गताद्वा
द्रेकाभिधानाद्रविसङ्गताद्वा।
तत्कालयोगादिबलाद् ग्रहाद्वा
बीजप्रसेकप्रभवेषु वाच्यः ॥१५॥

Apparatus

10b शिरस्तृतीये B  पि भवन्ति U  10c अस्थीन्यथ NB  10d तु] च B  चर्माण्यभा N  11b °मासमेत्यत् N  11c कृष्टासमास्वादन° N  11d पूर्वापराभौ BU  12b प्रसूते NU  12c विप्राणिषु N, corr. Ingalls  14c °संस्था नवमां° N  15d वाच्यम् N

5, 16-20

लग्नाद्यो देहविभागयोगे
    शीर्षादिषु द्वादशसंनियुक्ताः।
तत्स्थग्रहां(शा)ग्रहदृक्क्रमाण-
    मङ्गेषु नीचोत्तममध्यमानम् ॥१६॥
पापा ह्यनिष्टांशगताः प्रचण्डै-
    र्हतास्तदाघातकरा भवन्ति।
तदङ्गशोभाः शुभदास्तु सौम्या
    बलाधिका जन्मनिषेकयोस्तु ॥१७॥
जामित्रषष्ठाष्टमगास्तु रौद्रा
    हिंसन्ति गर्भं शशिलग्नभाभ्याम्।
f. 14 एकर्क्षे अर्कप्रभृति त्वनिष्टा
    गात्रेषु वैकृत्यकरा भवन्ति ॥१८॥
यत् क्षेत्रसंज्ञं नवमं शशाङ्का-
    च्चारक्रमेणोपगतान्निषेके।
तत्क्षेत्रसम्पत्प्रसवे शशी स्या-
    ल्लग्नांशकाद्प्यतिवीर्यभाजः ॥१९॥
ओजेषु युक्ताः पुरुषांशकेषु
    पुंसंज्ञका लग्नगते तदंशे।
चन्द्रार्कवर्गे पुरुषां(शा)कस्थे
    पुंस्त्वात्मकं स्यात् पुरुषाश्रयात्तु ॥२०॥

Apparatus

16d °मानाम् N    18c एकत्रमर्कस्तु प्रभृति N    19a क्षेत्रसंज्ञा N    19a-b ससाङ्काच्चार° N    19b °गतो निषेके N    19d °दप्यिति N, corr. Ingalls    °भाजाः N    20b पुंसंज्ञके N    तदाङ्गे N    20c °कस्थः N    20d पुंज्ञात्मकं N

5, 21–26

युग्मर्क्षनार्यांशगतास्त्वथैवं
स्त्रीसंज्ञका लग्नमुपाश्रिता वा।
स्त्र्याख्यास्तु जाता ह्यबलाः पुमांसः
स्त्र्यंशा विलग्ने जनयन्ति नारीम् ॥२१॥
आदित्यजीवौ रविवर्गसंस्थौ
बलाधिकौ पुंप्रभवाय दृष्टौ।
शशाङ्कवर्गे शशिशुक्रभौमाः
स्त्रीजन्म कुर्वन्त्यबले शशाङ्के ॥२२॥
ओजर्क्षवर्गे पुरुषाख्य एकः
पुंस्त्वांशके चन्द्रगतो बलीयान्।
दृष्टश्च पुंसा पुरुषं प्रसूते
स्वोच्चे ऽपि वा केन्द्रगतिप्रपन्नः ॥२३॥
एको ऽपि युग्मे प्रथमांशसंस्थः
स्त्रीसंज्ञकृत् स्वांशगतो ऽधिवीर्यः।
स्त्रीजन्मकृत् स्वोच्चगतो ऽपि वा स्याद्
बलाधिकारादपि लिङ्गकृत् स्यात् ॥२४॥
पुंसंज्ञकः स्वोच्चगतो विलग्ने
पुंसा बलीयान् बलवश्च दृष्टः।
पुंजन्मकृत् सम्पठितो ग्रहः सः
स्त्रीसंज्ञकः स्त्रीजनको ऽत्र योगे ॥२५॥
स्वांशे बुधो भास्करनन्दनश्च
प्राग्लग्नकेन्द्रं समुपागतौ वा।
नपुंसकोत्पत्तिकरौ प्रदिष्टौ
लग्नेन्दुभांशे तदवेक्षितौ वा ॥२६॥

Apparatus

21b स्त्रीसंज्ञके N  21c स्त्र्याख्येषु N  21d स्त्र्यंस N
22d शसङ्के N  23b प्यान्संशके N  25a विलग्नः N
25b बलीयाद्बल° N  26d लग्नेन्दुगोंशस्ततवेक्षितौ N

5, 27–32

पुंसंज्ञकस्थानगतौ सुवाते
नपुंसकं पुंसमरूपतत्त्वम् ।
त<था>त्र योषित्प्रतिकर्मशीलं
स्त्र्याख्याश्रितौ स्त्रीसदृशं सुवाते ॥२७॥
नपुंसकाख्ये शशिलग्नयुक्ते
नपुंसकाख्यैरवलोकितांशे ।
नपुंसकं विद्धि नपुंसरूपं
f. 14v बीजे ऽस्ति संस्थास्वथवा | प्रसूतौ ॥२८॥
द्विमूर्तिसंज्ञोपगते बुधांशे
बलाधिके केन्द्रमभिप्रपन्ने ।
लग्नेन्द्वधस्थे <य>मलांश(के) च
प्राहुर्निषेकं यमलोद्भवानाम् ॥२९॥
पश्यन्नपि स्फीतबलो द्विमूर्तिं
संस्थो विलग्ने यमलाख्यमंशम् ।
चन्द्रोपवर्गे च शशाङ्कसूनुः
कुर्यात् प्रसूतिं नियतं यमानाम् ॥३०॥
प्राग्लग्नसंस्थो ह्यनवेक्षितो वै
बुधो यमांशे यमजं प्रसूते ।
पुंस्त्रीविधानेष्वपि योनिरुक्तो
य<मो>द्भवानां य<म>लांशकेषु ॥३१॥
जीवस्तु बौधे यमलाख्यकें ऽशे
स्थितो ऽधिवीर्यो बुधसङ्गतश्च ।
स्वांशोपविष्टेन्दुसुतेक्षितो वा
यमोद्भवाय प्रथितस्तदापि ॥३२॥

Apparatus

27a °स्थानमितो N 27b पुंसामरूपतेत्त्वम् N 28c विद्धि नपुंसकानां N 30a स्फीटबलो N 30b यमलस्य° N 31a ह्यनवीक्षितो N 32c स्वंसोपटि-ष्टेन्दु° N 32d प्रथितस्य यापि N, corr. Ingalls

5,33–37

सर्वे यदा लग्नमधिप्रपन्ना
द्विमूर्तिभागेषु बुधाश्रयेषु।
बुधेन दृष्टा बलिनः स्ववर्गा-
स्तदा त्रिपिण्डप्रसवं वदन्ति॥३३॥
आधानयोगैर्हि स चेत् समानो
न स्युर्ग्रहाः स्थानविशेषयोगाः।
तदा तु भूयोऽपि फलं पुरस्तात्
विकल्प्यते तत्प्रभवोद्भवं च॥३४॥
दिवा पितार्कौ ऽर्कसुतश्च रात्रौ
शुक्रं दिवा मातरमाहुराद्याः।
माता च चन्द्रो निशि संप्रधार्यौ
निषेकगर्भप्रसवेषु नित्यम्॥३५॥
श्रेष्ठाधमस्थाननिरीक्षणाद्यै-
रन्योन्यसंयोगबलाबलैश्च।
संस्थानयोर्वर्णगुणैश्च विद्या-
च्चिह्नानि मातापितृसंश्रयाणि॥३६॥
प्रशस्तमोजेषु पितुर्विशेषं
युग्मेषु मातुर्भवनेषु विन्द्यात्।
संस्थानयोगाच्च गुरोर्विधार्यो
गुरुर्निशाह्नोरपि वर्णजातिः॥३७॥
यव(न)जातक आधानविधिः॥

Apparatus
33c बलिना N   33d त्रिपिण्डीप्रसवं N   34c दि फलं N   34d °द्भवेन N   37c गुरुर्वि° N   37d वर्णज्ञानाः N   col. यवजातके N

6,1-5

अनीक्ष्यमाणे तु विलग्नमिन्द्वा-
वसंनिधौ त्वात्मपितुः प्रसूतः ।
दिगादिभिस्सत्त्वं भुवनस्वभावाद्
विन्द्याद् ग्रहाणां च यथा क्रमेण ॥१॥
f. 15 गृहे तु दिग्द्वारविधिर्ग्रहेभ्यः
केन्द्रोपगेभ्यो बलवच्च वाच्यः ।
नीचोच्चसंस्थाभिरनस्थितिस्तु
मातुर्ग्रहाणां व्यसनं च मातुः ॥२॥
अजीवभागे ऽप्यनवेक्षिते वा
जीवेन चन्द्रे ऽथ विलग्नभे वा ।
जातं परोद्भूतमिति ब्रुवन्ति
वाच्यो जनेनाधिबलाबलोकात् ॥३॥
स्वक्षेत्रगे केन्द्रगृहोपगे तु
स्ववर्गगे वा स्वगृहे प्रसूतः ।
स्थानाच्च लग्नेन्दुगृहाधिपानां
वा यद्गृहं तद्गुणतश्च सूतः ॥४॥
ग्रहो गृहस्थानमुपाश्रितो वा
यस्तत्स्वभावाच्च वदेद्गृहं तत् ।
नीचोच्चतोयास्तमयाचरस्थैः
कार्या गृहाणामविकल्पना च ॥५॥

Testimonia

3 is quoted by Utpala on Bṛhajjātaka 5,6

Apparatus

1a-b °मिन्द्वौ च सं° N  1b त्यात्मविभुः प्रसूते N  1d गुरूणां N  2a गृहेषु दिग्वार° N  °र्ग्रहेषु N  2b ग्रहवच्च N  2d °र्गृहाङ्गो N  3a °भागेष्वभवे° N, °भागे ऽप्यनवी° U  3b जीवे ऽथ U  चन्द्रेण NU  3d जनेनाद्य U  4a स्वक्षेत्रगा N  4c °पाभ्यां N  4d सूतो N  5b वदेद् गृहं N  5c °मयाच्चरस्थैः N  5d °कल्पने च N

6,6–10

नभोबले वायति तद्गृहं तु
क्षेत्रे परोक्षालयजातमाहुः ।
परे विलग्नास्तबले ऽपरर्क्षे
स्वके जलस्थानबले गृहस्थे ॥६॥
नवं तु जीवेन परीक्ष्यमाणे
संवर्धिता चन्द्रमसोपलिप्तम् ।
पुराणमर्केण कुजेन दग्धं
शुक्रेण चित्रोपगतं नवं च ॥७॥
बुधेन तार्णं बहुवक्रमाहुः
सौरेण जीर्णं परिशीर्यमाणम् ।
परस्परक्षेत्रबलैश्च वाच्या
गुणागुणावस्थि(त)या गृहेषु ॥८॥
गुरौ स्वभागे गृहकण्टकस्थे
स्यात् कोष्ठके सावरणे प्रसूतः ।
भौमे तु जातो ऽग्निगृ(हा)न्तभूमौ
बुधे तु दर्भे पतितः क्षितौ वा ॥९॥
शुक्रे जलाधारगृहे जले वा
सौरे तु तार्णे भृशशीतवाते ।
शीताम्भसीन्दौ स्वगृहांशकस्थे
धानागृहे ऽर्के तु पितुर्गृहस्य ॥१०॥

Testimonia

7b is quoted by Utpala on Bṛhajjātaka 5,19 and by Balabhadra

Apparatus

6a नभोबलैरायति N 6b क्षेत्रं N 6c पराद्विलग्ने N परर्क्षं N 6d °बलैर्गृहस्थैः N 7a °माणं N 7d °गतेन्द्रवं N 9a °कर्णकस्थे N 9b नावरणे N 9c न जीव्यग्नि° N 10b तीर्णे तृषशीत° N 10c श्लिष्टास्तमीन्दौ N 10d पितागहस्य N

6,11–15

युग्मे जलाख्यांशगते जलस्थे
    शीताम्बुतोयाधिकमाहुरिन्दौ ।
तद्वद्गुरौ चन्द्रनिरीक्षिते वा-
    प्यन्यत्र सूर्यावनिजावलोकात् ॥११॥
होराशशाङ्कैर्भवने ऽभिक्रान्तै-
    र्गृहे प्रमाणानि गृहाश्र⟨याणाम्⟩ ।
तेषां गृहस्थानवशात् स्वभावा-
    द्रूपक्रियावर्णवपूंसि विद्यात् ॥१२॥
पापग्रहावेक्षणसङ्गमाद्यै-
    श्चन्द्रो ऽपि सङ्गी न वि(ब)धितश्च ।
f. 15v कुर्वीत मातुस्तनयस्य हानिं
    पीडास्ति राशीश्वरजैर्विकारैः ॥१३॥
सौरांशकस्थे शशिनि प्रलग्ने
    जले जलाख्यांशकमाश्रिते वा ।
स्वांशस्थिते केन्द्रगते ऽर्कजे वा
    [जा]तस्तमिस्रे यदि नार्कदृष्टः ॥१४॥
श्रुतिश्रुताचाररताः कृतज्ञाः
    सुरद्विजोपासनधर्मशीलाः ।
विशुद्धमाल्याम्बरचारुभूषा-
    स्तेजस्विनः सौम्यबलाद् भवन्ति ॥१५॥

Testimonia

14 is quoted by Utpala on Bṛhajjātaka 5,17 and by Balabhadra

Apparatus

11a जलास्येश° N 11b शीतांस्ततोस्नाधिवमा° N 12a °शशाङ्को तु रतेविक्रान्तै° N 12b °र्गेहैः N 12c तासां N 12d °वयांसि N 13b निःसङ्गिरव(वं)द्धितश्च N 13c °स्तनयान N 13d प्रीणाति N 14a होरांश° N, सौरांश° BU 14b कुजे N, जले BU जलास्यंस° N 14d तस्वमित्रे N, जातस्तमिस्रे BU 15b °पद्मशीलाः N

6, 16–18

शठाः कृतघ्नाः पिशुना नृशंसा
    लुब्धाः परद्रव्यहरा विकायाः ।
साधुद्विषः क्रोधतमोभि⟨रा⟩र्ताः
    पापग्रहस्थानबलाद् भवन्ति ॥१६॥
स्वांशेषु स्वोच्चे स्वगृहे(षु) लग्ने
    स्वमूलमित्रोपचयर्क्षगाश्च ।
चतुष्टयेष्विन्दुविलग्नभेशा
    जन्मप्रदाः स्युः पुरुषोत्तमानाम् ॥१७॥
आरोग्यकीर्त्यृद्धिवतां प्रसूतिं
    लग्नाधिपः स्फीतबलः करोति ।
महाधनाभोगपरिग्रहाणां
    जन्माधिपः स्फीतयशोगुणानाम् ॥१८॥
यवनजातके सूतिकविधिः ॥

Apparatus

17a सूच्चाः N  लग्नाः N  17b °यर्क्षशाश्च N  18a °कीत्यृद्धिगतां N  col. सूतिको विधिः N

7,1-5

मृष्टाशनाच्छादनभूषणाढ्यं
स्वोच्चे हिमांशुः पुरुषं प्रसूते ।
विख्यातशब्दं नृपपूज्यमार्यं
विद्वांसमुच्चे गुरुरिष्टधर्मम् ॥१॥
तेजस्विनं गर्वितमग्र्यशूरं
स्वोच्चे कुजो दुःप्रसहं प्रसूते ।
विलासहासश्रुतिगीतवृत्तं
भृग्वात्मजः स्त्रीसुभगं सुवेशम् ॥२॥
नैपुण्यवाक्यं प्रवरं कलाढ्यं
मेधाविनं <स्वो>च्चमुपेत्य सौम्यः ।
महान्तमत्युग्रमनेकचिन्तं
सूर्यो नृपाल्लब्धनियोगमार्किः ॥३॥
यवनजातक उच्चविधिः ॥
आत्मत्रिकोणे धनिनं कुलेन
धोत्कारमिन्दुर्दिनकृच्च मुख्यम् ।
महत्तरं देवगुरुर्नियुक्तं
महीसुतस्तस्करवृत्तमुख्यम् ॥४॥
भृगुः पुरग्रामवरिष्ठमाढ्यं
विवादशीलं जयिनं च सौम्यः ।
शनैश्चरस्त्वात्मवदर्थतृप्तं
शूरं कुले ज्येष्ठतमं प्रसूते ॥५॥

Testimonia

With this chapter compare Sārāvalī 44,1-21bis.

Apparatus

1a °भूषणाद्यं N   1d °मुच्चैर्गुरु° N   2b कुजे N   2c °गीतनृत्तं N   3a कलाद्यं N   3d °मर्किः N   col. यवनजातके N   4a कुजेन N   5a °ष्टमाद्यं N   5b विनोदशील K   5c °दर्थदृष्टं N, धनतृप्त K   5d जेष्ठतमं N

7, 6–10

यवनजातके मूलत्रिकोणविधिः ॥
मनस्विनं तु प्रियदर्शिनं च
    स्वर्क्षे शशी धर्मरतं प्रसूते ।
ताम्रं कुकर्माणममर्षमुग्रं
f. 16    सूर्यो बुधो वल्गुकथं बुधं च ॥६॥
काव्यश्रुतिज्ञं गुरुरिष्टचेष्ट-
    माढ्यं प्रचण्डं चपलं च भौमः ।
कृषीवलं स्फीतधनं च शुक्रः
    शनैश्चरो मान्यमदुःखभाजम् ॥७॥
यवनजातके स्वक्षेत्रविधिः ॥
यतस्ततो लब्धसुखं शशाङ्कः
    प्रख्यातमर्कः स्थिरसौहृदं च ।
पूज्यं सतां देवगुरुर्बुधस्तु
    चातुर्यहास्योपगृहीतवाक्यम् ॥८॥
सुहृद्धनारक्षणसत्कुमारः
    सुहृत्प्रियं मन्त्रधनं च शुक्रः ।
प्रभुं परान्नाशनमर्कसूनु-
    र्मित्रर्क्षसंस्थो मनुजं प्रसूते ॥९॥
यवनजातके मित्रक्षेत्रविधिः ॥
नीचे शशी रोगिनमल्पपुण्यं
    भौमस्त्वनर्थं व्यसनोपतप्तम् ।
प्राप्तापमानं मलिनं गुरुस्तु
    प्रेष्यं रविर्बन्धुजनावधूतम् ॥१०॥

Apparatus

6c नम्रं N    अत्युग्रकर्माण K    7a °श्रुत° N, श्रुति K
7b °मध्यं N, आढ्य K    7d मान्यमदुःख K    9a °मत्त
N    9c प्रकृम् परान्नाशिन° N    10c प्राप्तावमान K
मतत N, मलिन K

7, 11–13

प्रणष्टदारं भृगुरस्वतन्त्रं
मूर्खं बुधो ज्ञातिनिबन्धवैरम् ।
विगर्हिताचारमनर्थमार्कि-
र्नरं प्रसूते च वि(पन्न)शीलम् ॥११॥
यवनजातके नीचक्षेत्रविधिः ॥
हृद्रोगिणं शत्रुगृहे शशाङ्कः
सूर्यो दरिद्रं विषपीडितं च ।
बद्धारिभाजं विकलं कुजो वा
क्लीबं गुरुर्मूर्खमनार्यवृत्तम् ॥१२॥
विहीनमज्ञानमनेकदास्यं
बुधो भृगुः स्त्रीभृतकं कुतन्त्रम् ।
व्याध्यादिशोकैरुपतप्तदेहं
प्रत्यादधात्यर्कसुतो मनुष्यम् ॥१३॥
यवनजातके शत्रुक्षेत्रविधिः ॥

Apparatus

11a °रंचतन्त्रं N, अस्वतन्त्र K   11b मूर्त्यं N   स्वज्ञाति-
बन्धवैर K   11c °मनार्थ° N   11d प्रसूयेन N
विमन्नशील K   12b विषयपीडित K   12c बन्धारि-
भङ्गभाज K   13a वार्यहीनं N, अतिविहीन K
°दास्यं N   13c व्याधयधय° N, व्याध्यादि K
13d मृत्यादयत्य° N, corr. Ingalls

8,1–4

स्वेषूच्चभागेषु फलं समग्रं
    त्रिकोणवत् स्यात् फलमंशकेषु ।
स्वक्षेत्रवत् स्याद्भवनांशकेषु
    नीचारिभागेषु जघन्यमेव ॥१॥
एष्वेव तु व्यस्तबलैरुदारै-
    र्वर्गोत्तमांशेषु फलैर्भवन्ति ।
उन्मन्त्रयन्तीष्टनिरीक्षितास्तु
    मङ्गल्यमापद्य यथाबलोकैः ॥२॥
ए<को> निरुद्दिष्टफलं तथोच्चे
    द्वौ कीर्तिमन्तं धनिनं सुवाते ।
त्रयः पुरो रक्षकमीश्वरं वा
    चमूपतिं स्वप्रतिभागमार्यम् ॥३॥
चत्वार आढ्यं नृपमाप्तकीर्तिं
    स्वधर्मशीलं ज(न)यन्त्युदारम् ।
f.16v पंच त्वनेकर्द्धि वि<वृद्धकोशं>
    ख्यातं नृपं श्रेष्ठतमं च कुर्युः ॥४॥

Testimonia

1 equals Sārāvalī 44,22 and Jātakasāradīpa 53, 49. With 3–5 compare Sārāvalī 44,23–26.

Apparatus

1a स्वेषूच्चहोरासु N   1c स्वक्षेत्रतुल्यं भव° J °नात्मकेषु N   2b °मांशैः प्रफलै° N   2d °मापत्र्य N   3a निरुद्दिष्ट° N   3d ष्यप्रतिभागमर्थ्यः N   4a साद्यं N, आढ्य K   4b मधर्म° N   4c अनेकविधवृद्धकोशा K   4d नृपद्वेष्टतमं N

8,5-9

षड्राजराजर्द्धिबलोपकर्ष-
प्रदानमानेष्वभिजातशक्तिम् ।
समुद्रपर्यन्तमहीतलेशं
स्वोच्चर्क्षसंस्था जनयन्ति सप्त ॥५॥
एको ऽप्यभिख्यातबलप्रतापं
स्वोच्चर्क्षसंस्थो नृपतिं प्रसूते ।
संस्थानकालादिबलैः सुहृद्भि-
र्निरीक्षितः स्याद्बहुमित्रपक्षम् ॥६॥
〈द्वा〉भ्यां ग्रहाभ्यां स्वत्रिकोणगाभ्यां
भवेत् कुटुम्बी जलभूधरो ऽन्यः ।
प्रख्यातकीर्ति(स्त्रि)भिरेव वैश्यो
महाधनो ग्रामगणप्रधानः ॥७॥
॥८॥
स्वाचारधर्मो बलसत्त्वयुक्तः
षड्भिः स्वराज्यप्रतिमास्ति राजा ।
राज्ञो वपुःस्त्रीबलभृन्नरेन्द्रः
स्यात् सप्तभिः स्वात्मत्रिकोणसंस्थैः ॥९॥

Testimonia

5a-b is quoted by Utpala on Bṛhajjātaka 7, 8.
With 7-21 compare Sārāvalī 44, 27-45.

Apparatus

5a °राजाधिबलो° N, °राजधिबलो° U   6c स्वहृद्भि° N   6d स्वाद्बहु° N   7a द्वाभ्यां K   7b जलधूधर N   7c °कीर्त्ति(स्मि)तिरव्यवंसो N   8 no space in N   9a °धर्मबल° N   9c राज्ञं N   वपुस्त्री° N, वसुस्त्री° K

8, 10–15

कुलप्रधानं स्वजनाभिमान्यं
    द्वौ स्वर्क्षसंस्थौ पुरुषं सुवाते ।
नानागमं स्फीतधनं यशस्कं
    ग्रहास्त्रयो वंशकरं च कुर्युः ॥१०॥
ख्यातं पुरश्रेणिगणाभिमान्यं
    कुर्वन्ति चत्वार उदारवेशम् ।
पंचावनीभुक्प्रतिमं विघुष्टं
    प्रभूतभोगाश्वसुतं गणाढ्यम् ॥११॥
षट् तु स्वराज्यप्रभवं नरेन्द्रं
    प्रवृद्धशब्दं द्युतिभृत्यकोशम् ।
राजाधिराजं विजितारिपक्षं
    स्वर्क्षोपपन्नाश्च जयन्ति सप्त ॥१२॥
द्वाभ्यां सुहृत्क्षेत्रसमाश्रिताभ्यां
    भवेत् सुहृत्संश्रयणाप्तवृत्तिः ।
त्रिभिः सुहृद्बन्धुजनोपकर्ता
    ग्रहैर्विशिष्टो गुणशब्दितश्च ॥१३॥
सुरद्विजाचार्यपरः कृतज्ञ-
    श्चतुर्भिराचारधुरन्धरश्च ।
नृपोपसेवी प्रणताभिरक्षी
    स्यात् पंचभिः प्राप्तधनो यशस्वी ॥१४॥
विस्तीर्णभोगाश्ववपुश्च षड्भि-
    र्मित्रर्क्षगैः पार्थिवतुल्यकर्मा ।
स्यात् सप्तभिः स्फीतगजाश्वभृत्यो
    ग्रहैर्नरेन्द्रः स्थितसारकोशः ॥१५॥

Apparatus

10c नानागगं N    11b उदारवेषः N, विशिष्टचेष्ट K
12d स्वर्क्षोपपन्नं च N    14a °द्विजावाच्यपरः N.
15a विस्तीर्णभोगवाहनवसुमान् K

8,16–20

नीचर्क्षसंस्थौ पुरुषं सुवाते
f. 17 द्वौ नीचकर्माणमृणोपतप्तम् ।
अनिष्ठितानेकनिवासशीलं
ग्रहास्त्रयोऽध्वानुचरं दरिद्रम् ॥१६॥
मूर्खं परप्रेष्यमपास्तधर्मं
चत्वार आलस्यविपन्नचेष्टम् ।
भृतं तु पंचागृहवित्तदारं
दासं षडाध्वातपश्रमार्तम् ॥१७॥
निःस्वाधमत्वामबहिर्गृहाणा-
मुत्सृष्टशिल्पाशनभैक्षकानाम् ।
सप्त स्वनीचर्क्षगताः प्रसूतिं
कुर्वन्ति दिक्चीरल्वाम्बराणाम् ॥१८॥
द्वौ शत्रुभस्थौ बहुविग्रहाणां
क्लिष्टात्मनां जन्मकरौ भवेताम् ।
त्रयः श्रमोत्पन्नविपन्नवित्त-
दुःखाहतानां विविधव्ययानाम् ॥१९॥
चत्वार इष्टात्मजयोषिदर्थ-
प्रणाशजाधिश्रमपी(डि)तानाम् ।
पंच स्वबन्धुव्यसनाभिघात-
तप्तात्मनां गर्हितकर्मणां च ॥२०॥

Apparatus

17a °प्रेष्यमुपास्त° N, corr. Ingalls   17c पंचेग्रह° N, अगृह K   18a निस्वाटम° N   18b °शिल्पासन-तैक्षकाणां N, corr. Ingalls   18c प्रसूती N   18d दिक्चिरविधृताम्बर K   19c त्रयसमान्पन्न° N, त्रयः श्रमोत्पन्ननष्टवित्त K   20a चत्वाररिष्टा° N, इष्ट K   20b °प्रणाजगाधि° N, विनाशजाधि K

8, 21–25

अनार्यरुक्पीडितदुःस्वतानां
कुर्वन्ति जन्मारिगृहाश्रिताः षट् ।
वैकल्यबीभत्सकुलावराणां
सप्ताशनाच्छादनवंचितानाम् ॥२१॥
एते यथा वीर्यबलैः फलानि
दद्युः फलस्थानगता नराणाम् ।
एषां तु होरांशकसंस्थितिभ्यो
विकल्पनान्योन्यनिरीक्षितैश्च ॥२२॥
वर्गोत्तमांशे ऽपि विलग्नसंस्थे
तस्याधिपे च प्रतिपूर्णवीर्ये ।
इष्टैर्ग्रहैस्त्रिप्रभृति प्रदृष्टे
राज्ञां प्रसूतिर्यवनैर्निरुक्ता ॥२३॥
दिक्स्थानकालादिबलैरुदारा
वपुर्धराः केन्द्रमुपागताश्च ।
कुर्वन्त्यनिष्टैरविमिश्रचाराः
पृथ्वीभुजां त्रिप्रभृति प्रसूतिम् ॥२४॥
सूर्यांशकं वा शशिनि प्रपन्ने
चतुष्टयस्थेषु च सद्ग्रहेषु ।
राज्ञां प्रसूतिर्विहिता वरिष्ठैः
पापेष्वसन्भ्यर्कमुपागतेषु ॥२५॥

Testimonia
24 equals Sārāvalī 35, 123.

Apparatus
21a °रुक्कीर्तित° N  21c °कुलवराणां N, corr. Ingalls
22a वीर्यवसौ N  23c प्रदिष्टै N  23d राज्ञं N
24a संस्थान° N, दिक्स्थान° K  °कालाधिभ° N,
°कालादि° K  24b शुभाः पुनः K  24c कुर्वन्ति
पापै° K  °विमिश्र° N  24d °भुजं K  ग्रहेन्द्राः
K  25d °संपर्कम्° N

8, 26–31

विनारि(नी)चर्क्षमनूनवीर्याः
    स्वात्मांशकस्था वपुरुद्वहन्ति।
अदुर्बले चन्द्रमसीष्टदृष्टा
    राज्ञां प्रदास्त्रिप्रभृतिग्रहाः स्युः ॥२६॥
स्वोच्चांशके लग्नगतः शशाङ्क-
    स्तस्याधिपेनातिबलेन दृष्टः।
नृपं प्रसूते प्रतिपूर्णमूर्ति-
f. 17v |रापोक्लिमस्थेष्वशुभग्रहेषु ॥२७॥
वर्गोत्तमांशोपगतं शशाङ्क-
    मेकोऽपि यद्युच्चमुपेत्य पश्येत्।
सुराज्यभुग्जन्मकरो ग्रहः स्या-
    ल्लग्नेषु पापैरनधिष्ठितेषु ॥२८॥
जले शशी वारिचरांशकस्थः
    पूर्णः शुभो लग्नगतः स्ववर्गे।
तत्रापि राज्ञां विहिता प्रसूति-
    श्चतुष्टयं यद्यशुभैरयुक्तम् ॥२९॥
सूर्यांशके लग्नगते ऽर्कदृष्टे
    पूर्णे शशाङ्के स्वगृहांशकस्थे।
केन्द्रे गुरुर्भार्गवदृष्टमूर्ति-
    र्महीभुजां जन्म समादधाति ॥३०॥
शीर्षोदयक्षेत्रगताश्च सर्वे
    विनारिनीचर्क्षमनूनवीर्याः।
लग्ने च दृष्टे शशिनि प्रपूर्णे
    स्विष्टैर्नरिष्टैर्नृपजन्मदाः स्युः ॥३१॥

Apparatus

26a °चर्क्षमनात्मकें ऽशो N, corr. from 31b   26b स्वास्सात्मकस्था N   26d राज्ञं N   29b पूर्वं N, corr. Ingalls   शुभे N   29c राज्ञं N   30b °शकस्थैः N   30d °भुजं N   31c लग्नेन N   31d दृष्टै° N

8,32-37

वर्गोत्तमांशोपगतः स्वराशा-
वेकोऽप्यविक्षीणवपुर्बलीयान्।
ग्रहैः सुहृद्भिस्त्रिभिरीक्ष्यमाणः
समृद्धं राज्यभुजां करोति॥३२॥
जन्मर्क्षभुक् तूपचयर्क्षसंस्थः
केन्द्रे शुभे स्विष्टगृहांशके वा।
रौद्रेष्वविक्षीणबलेषु सृष्टिं
प्रभोः प्रजानां महतः करोति॥३३॥
सुहृद्गृहे मूर्तिपतिर्बलीयां-
श्चतुष्टयस्थः सुहृदीक्षितश्च।
प्रख्यातमुर्वीश्वरकल्पमीड्यं
सूते नृपं तूदयति प्रधाने॥३४॥
मूर्तीन्दुनाथौ च चतुष्टयस्था-
वनर्दिताविष्टनिरीक्षितौ च।
क्षितीश्वराणां कुरुतः प्रसूति-
मात्मांशकाभ्यामुदयेन्दुगाभ्याम्॥३५॥
स्वोच्चर्क्षभागे तु सुहृत्स्वभागे
तिष्ठन् ग्रहः केन्द्रमुपाश्रितो यः।
यः स्वोच्चभे प्रागुदयप्रयाते
दृष्टः शुभैरीश्वरजन्मकृत् स्यात्॥३६॥
गुरुर्विलग्ने गृहभुक् त्रिकोणे
स्वोच्चेश्वरः केन्द्रमुपागतश्च।
योगेन्द्रराजं नृपतिं प्रसूते
पश्यन्ति यद्युच्चबला न पापाः॥३७॥

Apparatus

33c दृष्टः N 35a मूर्तीश्वरौवाश्च N 35b °विष्टनि° N 37b °गताश्च N 37d °बलान्न N

8,38–40

लग्नेन्दुयद्राशिभुजौ बलस्थौ
सुहृद्गृहे केन्द्रमभिप्रपन्नौ ।
चन्द्रे ऽम्बुजास्यर्क्षगते जलस्थे
क्षितीश्वराणां कुरुतः प्रसूतिम् ॥३८॥
f. 18 त्रिकोणगावप्यवनीभुजं तौ
श्रेष्ठं सुवाते स्थिरमत्र योगे ।
सौम्यो यदा केन्द्रगतः स्ववर्गे
ऽभवेद्विलग्ने च गृहेश्वरांशः ॥३९॥
एवंविधानीश्वरजातकेषु
योगाननन्तानपि संप्रधार्य ।
कालस्थितिप्रेक्षणसम्पदश्च
प्रेक्ष्य ग्रहाणां फलमादधाति ॥४०॥
यवनजातके राजजन्म ॥

Apparatus

38a लग्ने तु यद्राशि° N   38b केन्द्रमविप्र° N   39b °मन्त्रयोगे N   39c सौम्योदयः N   40c °संप्रदश्च N   40d °दधीत N

9,1–4

ख्यातान् गुणैर्धर्मभृतः सुवृत्तान्
  योगेषु सौम्या जनयन्ति नित्यम्।
रौद्रोग्रकर्मान् पतितस्वभावान्
  निर्मुक्तधर्मान् न शुभांश्च रौद्राः ॥१॥
स्वोच्चेषु स्वोच्चान् परिगृह्य भागान्
  तिष्ठ(त्)सु सर्वेषु बलाधिकेषु।
लग्ने शुभे पूर्णवपुष्मतीन्दौ
  त्रैलोक्यराज्याधिपतिं प्रसूते ॥२॥
वर्गोत्तमांशेषु तु सर्व एव
  स्थिताः स्वराशिष्वतिदीप्तभासः।
केन्द्रस्थ इष्टे जनयन्ति नाथं
  पृथ्व्याश्चतुर्द्वीपजलाकरायाः ॥३॥
स्वांशेषु सर्वे स्वसुहृद्गृहस्थाः
  स्वर्क्षस्थिता वा सुहृदंशकेषु।
स्वभूमिषु प्राप्तबलं चतुर्षु
  द्वीपेष्ववन्यां जनयन्ति नाथम् ॥४॥

Testimonia

2 is quoted by Utpala on Bṛhajjātaka 1,13 and by Balabhadra

Apparatus

1c °कर्मा N  1d °धर्मं N  2a सूच्चान् N, सर्वान् U, स्वोच्चान् B  भांशं N, भागं U, भागान् B  2b त्रिष्व(त्त)सु N  2d °राज्ञाधि° N  °पतिः प्रसूतः BU  3b °दीप्तिभासः N  3d °जनाकरायाः N, corr. Ingalls  4a सर्वेषु स्वसद्गृह° N  4c °बलाश्चतु° N  4d दीपे° N

9,5-10

सर्वे शुभर्क्षेषु शुभांशकस्था
रौद्रेष्वदीप्तेष्वविलग्नगेषु।
लग्नस्थिता योगभृतां प्रसूतिं
कुर्वन्ति दिव्यर्द्धिदृशां मुनीनाम् ॥५॥
योगे शुभा यद्यपि केन्द्रसंस्थाः
स्युरत्र लग्नेष्वशुभाश्च दीप्ताः।
तदा स्वबुद्ध्या सुविवर्जितारि-
रीड्यो महीमण्डलभुक् प्रसूतः ॥६॥
सर्वे यदा स्वोच्चगृहर्क्षसंस्थाः
पश्यन्ति होरां स्वगृहांशकेषु।
तत्रापि राजा दृढवीर्यसत्त्वो
नाथः पृथिव्याः प्रथितः प्रसूतः ॥७॥
स्यादात्मभागेषु यदा तु सर्वे
स्वोच्चर्क्षगाः स्फीतबला भवेयुः।
तदा सशास्त्राधिबलः प्रजानां
सूतः पृथिव्यामधिकारिताढ्यः ॥८॥
बलावलोकैर्भवनांशकानां
सुहृद्गृहोद्वीक्षणसङ्गमैश्च।
निहीनवंशप्रभवानपी<शा>न्
f. 18v <नृपा>न् यथा स्थानबलान् प्रसूते ॥९॥
सर्वग्रहेषूद्गमुपागतेषु
पश्यत्सु होरामधिवीर्यवत्सु।
सम्पूर्णरश्मौ शशिनि प्रसूतः
पतिः पृथिव्यां चतुरर्णवायाम् ॥१०॥

Apparatus

5a सर्वेषु भर्क्षेषु N 6b दीपाः N 6c स्वबुद्धा N 6d प्रसूते N 7b °शकेभ्यः N 7d प्रसूते N 8d सूते N °धिसारिताढ्यः N 9b °द्वीक्षिण° N 9c °नपि × नृ N, corr. Ingalls 9d °बलाष्प्रसूते N 10a सर्वे N °द्गतोगतेषु N 10b °वीर्यवत्स N 10c सम्पूर्णरमौ N प्रसूते N 10d चतुरार्णवायाम् N

९, 11–15

एकोच्चगेनापि भुनक्ति राज्ञा
नृपश्रियं भूतलसप्तभागे।
एषामसामग्र्यवशाद्भवेयु-
र्भूम्यङ्कभागप्रभवा नरेन्द्राः॥११॥
योगांशयोगेष्वबलप्रभावा-
स्ते नायकामात्यपरोहिताः स्युः।
गृहग्रहादिप्रभवैर्विशेषैः
प्रमाणसम्पत्सु वदेत् फलानि॥१२॥
यवनजातके राजजन्म॥
चन्द्रो विलग्नोपचयर्क्षसंस्थो
दृष्टः शुभैरीश्वरजन्मकृत् स्यात्।
अधीश्वरोत्पत्तिकरश्च दृष्टो
बलीयसा क्षेत्रभुजा शशाङ्कः॥१३॥
लग्ने शशाङ्कोपचयर्क्षमीक्ष्य
लग्नाधिपस्तत्सुहृदो ग्रहो वा।
चमूपुरग्रामगणाधिपानां
कुर्वन्ति जन्मात्मसमैर्विकारैः॥१४॥
स्वांशे शशी भार्गवदृष्टमूर्ति-
र्निशीश्वरोत्पत्तिकरः प्रदिष्टः।
तद्वत्तमोद्भूतिकरः स तु स्याद्
दृष्टो दिवा देवपुरोहितेन॥१५॥

Testimonia

15 is quoted by Utpala on Bṛhajjātaka 13,1.

Apparatus

11c °वशाद्भवेषु N   11d °भावाप्रभवा N   12a no space in N   13d बलीयना N   14c °गुणा° N   15b प्रदृष्टः N

9,16–21

एतेन योगेन शशी प्रसूते
मित्रांशकस्थोऽपि नरान् वरिष्ठान् ।
त्रिभिर्निशाह्नोरपि दृश्यमानो
मित्रैः शशी मित्रभृतः प्रसूते ॥१६॥
सौम्यर्क्षगस्तूडुपतिर्विलग्नात्
सौम्येषु केन्द्रोपगतेषु कुर्यात् ।
महाधनानां विदुषां प्रसूतिं
सत्यव्रताचारपरिग्रहाणाम् ॥१७॥
यवनजातक ईश्वरजन्म ॥
चन्द्रः शुभक्षेत्रशुभांशकस्थो
दृष्टः शुभैरेव त्रिभिर्विनान्यात् ।
विज्ञानशास्त्रप्रतिपूर्णमार्यं
नरं प्रसूतेऽग्र्यतमं त्रिशुक्रैः ॥१८॥
पापर्क्षसंस्थोऽधिवीर्यदृष्टः
शशी यदा भार्गवसौम्यजीवैः ।
क्रूरावलोकं परिहृत्य जन्म
प्रधानवाग्ज्ञानवतां करोति ॥१९॥
सौम्येषु लग्नेषु सुहृ<द्दृष्टे च
पापैस्त्रिधर्मायगतैस्तु चन्द्रः> ।
f. 19 सद्वृत्तविद्वज्जनजन्मकृत् स्यात्
तपस्विनः क्षीणवपुः प्रसूते ॥२०॥
सौम्याः स्ववर्गेषु चतुष्टयस्थाः
सौम्यग्रहक्षेत्रगतः शशाङ्कः ।
तपस्विनां योगपरायणानां
गुणाधिकानां जनका भवन्ति ॥२१॥

Apparatus

16c दृष्टमानो N 18d ग्र्यतम-त्रशुक्रैः N, corr. Ingalls.

9,22-26

सौम्यां(शो)कस्थाः शशिनि प्रपूर्णे
    सौम्याः शुभार्थेषु चतुष्टयस्थाः ।
सौम्यांशके लग्नगते प्रसूतिं
    कुर्वन्ति धर्मश्रुतितत्पराणाम् ॥२२॥
यवनजातके साधुराजजन्म॥
क्रूरा ग्रहाः क्रूरगृहे विलग्नाः
    कुर्वन्ति सौम्येषु तु केन्द्रगेषु।
समुद्भवं चौरगणाधिपानां
    क्षुद्रोग्रकर्मार्जितसंचयानाम् ॥२३॥
सौम्येषु लग्नेषु चतुष्टयस्थाः
    क्रूराश्चमूदुर्गपतिं बलस्थम् ।
धीरं न भूपं सुवते नयज्ञं
    सौम्यैर्हि युक्तांस्त्रिभिरुग्रभावम् ॥२४॥
एको ऽपि कालादिबलेन युक्तो
    योगान्निरुक्तान् परिगृह्य कुर्यात् ।
प्रधानपुंजन्म विलग्नसंस्थ
    इष्टेक्षितः केन्द्रमुपाश्रितो वा ॥२५॥
अनिष्टसंदर्शनसंप्रयुक्तो
    विगर्हितस्थानगतः शुभो ऽपि ।
नीचाल्पवित्तातुरजन्मकृत् स्यात्
    पापास्तृतीयांशफलोत्तराः स्युः ॥२६॥

Apparatus

22a सौम्य(शो)कस्थाः N    22d धर्माश्रुति° N    col. यकणजातके N    23a क्रूरग्रहे N    24b बलस्थान् N    24c धीरेन्तसुप्र सुवते N    24d सौम्यैर्ह्रि N    °रौद्रभावम् N    25b योगान्नि° N    25c °संस्था N    25d इष्टेक्षिते N    26d °स्तृतीयाय° N, corr. Ingalls

9,27-29

पापांशकस्थे शशिनि प्रलग्ना:
क्रूरा: शुभेष्वप्यशुभर्क्षगेषु।
प्रक्षीणवीर्येष्वधमात्मचेष्टान्
लोकावगीतान् जनयन्त्यसंख्यान् ॥२७॥
एवंप्रकारान् प्रसमीक्ष्य योगान्
क्षेत्रांशकालोकवशाद् ग्रहेभ्य:।
प्रधानमध्यान्त्यनराधमाना-
मुत्पत्तिसन्तान(मभिप्रो)दध्यात् ॥२८॥
प्रधानजन्मस्वभिकीर्तिता ये
योगा: शुभस्थानगतिक्रमेण।
त एव दुष्टप्रसवेषु वाच्या
विपर्ययेणाशुभसंप्रयोगै: ॥२९॥
यवनजातके चौर(राज)जन्माध्याय:॥

Apparatus
27b स्वभेष्व° N    29c दृष्ट° N

10,1-5

चन्द्रात् कुटुम्बोपगते ग्रहे तु
योगाग्रहास्ते सुनफां वदन्ति।
चन्द्रप्रमुक्ते ऽनफरेति योगं
f. 19v तयोभयोर्दौरुधुरं वदन्ति ॥१॥
चन्द्रे तु योगा यदि न स्युरेते
चतुष्टयं च ग्रहवर्जितं स्यात्।
केमद्रुमेत्यन्त्यफलस्य योगः
सर्वग्रहावेक्षणविप्रयुक्तः ॥२॥
विद्वांसमोजस्विनमुग्रवृत्तं
स्वाधीनवृत्तं भुवि लब्धशब्दम्।
श्रीमन्तमालङ्कृतमिष्टधर्मं
कान्तं च विन्द्यात् सुनफाभिजातम् ॥३॥
यशस्विनं वाग्मिनमर्थशौण्डं
भोक्तारमक्लिष्टविशिष्टचेष्टम्।
चन्द्रः प्रसूते ऽनफ(रा)मुपेत्य
समाहितोदारगुणं मनुष्यम् ॥४॥
विशिष्टभोज्याम्बरमाढ्यमीशं
स्वतन्त्रमालम्बितसाधुवृत्तम्।
वाग्बुद्धिशौर्यादिभिरात्तशब्दं
विद्यान्नरं दौरुधुरे धुरिस्थम् ॥५॥

Testimonia

With this chapter compare Sārāvalī 13,1-23

Apparatus

1d °योधौरिधुरं N 2d सर्वे N 3a °मोजास्विन-मुख्यवृत्तं N 3c श्रीमान्तणाल° N 4a यसस्विनां N 5a °भोक्या° N 5c वाग्वृद्धि° N, वाग्बुद्धि K 5d दौरुधुरं N

10,6–11

कुटुम्बयोषिद्गृहभोजनाना-
मभाजनं गर्हितकर्मशीलम्।
नीचं परप्रेष्यमनेकयोगं
केमद्रुमासम्भवमाहुराद्याः॥६॥
इति स्वसैश्चाप्रतिशब्दितेषु
प्रोक्तानि योगेषु फलानि सम्यक्।
पृथक् पृथक् स्वग्रहसंप्रयोगै-
र्योगानिमान् विस्तरतः प्रवक्ष्ये॥७॥
अनेकविद्याप्रतिबद्धबुद्धिं
ख्यातं नृपं वा नृपतुल्यवृत्तिम्।
कुटुम्बिनं वातिधनं प्रकाशं
गुरुः प्रसूते सुनफामुपेत्य॥८॥
नारीगृहक्षेत्रचतुष्पदानां
प्रभुं सुवेशं नृपसत्कृतं च।
सौभाग्यकान्तिस्थितिशौर्ययुक्तं
शुक्रः प्रसूते सुनफोपपन्नः॥९॥
गान्धर्वगीतश्रुतिशास्त्रवित्तो
वाग्मी कविः सत्त्वहितो मनस्वी।
समृद्धकीर्तिद्रविणः सुवृत्तिः
स्यात् सौम्ययोगे सुनफाप्रसूतः॥१०॥
सङ्ग्रामचौर्यप्रचुरं प्रचण्ड-
मोजस्विनं डिम्बविरोधशीलम्।
चमूगणज्येष्ठमनल्पवित्तं
हिंस्रं च विद्यात् कुजसौनफेयम्॥११॥

Apparatus

6a °योषिद्ग्रह° N   6d केमद्रुमा° N   7d प्रवक्ष्येत् N
8a °प्रतिबद्धिबुद्धिभा N   10b सर्वहित N   10c सुवीर्त्तिः N

10, 12–17

क्रियासु गुप्तं निपुणं समृद्धं
　　पूज्यं पुरग्राममहत्तरं वा ।
अरुक्तं लुब्धमशुद्धशीलं
　　ज्ञातं वदेत् सूर्यजसौनफेयम् ॥१२॥
f. 20 | अतस्तु जीवे ऽनफरां गते स्यान्
　　नरः कुटुम्बी बहुवित्तकर्मा ।
गाम्भीर्यमेधास्थितिसत्त्वयुक्तः
　　कविर्द्विजो मन्त्रवपुर्धरो वा ॥१३॥
रतिप्रियः स्त्रीसुभगो वपुष्मान्
　　सम्पन्नगोभूमिहिरण्यपण्यः ।
प्रियप्रदानः प्रणयी (य)शस्वी
　　भूपश्च शुक्रानफरोद्भवः स्यात् ॥१४॥
आलेख्यलेख्यादिपटुः प्रवक्ता
　　गान्धर्वसेवारतिकर्मशीलः ।
प्रसिद्धकर्मा कविराप्तविद्यो
　　बुधे शशाङ्कानफरागते स्यात् ॥१५॥
रणोत्कटश्चौरग(ण)प्रधानो
　　दृप्तावमानी प्रचुरः प्रगल्भः ।
ईर्ष्युः प्रसन्नद्युतिरात्मवश्यः
　　श्लाघी च भौमानफरोद्भ(वः) स्यात् ॥१६॥
विस्तीर्णभूलोहचतुष्पदाढ्यो
　　गृहीतवाक्यो महितो गणानाम् ।
बह्वात्मजो दुर्वनितापतिश्च
　　क्लीबो ऽर्कपुत्रानफरोद्भवः स्यात् ॥१७॥

Apparatus

12a गुक्तं N, गुप्त K　13a अवस्त N　13b वकुवित्त° N, corr. Ingalls　13c °मेवस्थिति° N　13d कविद्विजो N　14b सम्पन्मन्नगो° N　14d भूपुश्च N　15a प्रयुक्ता N, प्रवक्ता K　15b °शीला: N　15d °गतेन्यो N　16a रणोत्कटाश्चौर° N　16d °रोर्भ(वः) N

10,18–24

प्रख्यातमेधाधृतिशौर्यसत्त्व-
मीशं बलानां बहुसंचयं च।
सूते वणिक्छ्रेष्ठिनमुत्तमं वा
मध्ये (तु) जीवोशनसोः शशाङ्कः ॥१८॥
विज्ञानशास्त्रश्रुतिधर्मशिल्पं
विशारदं वाक्प्रचुरं कविं च।
योगे शशी कृत्यकरं प्रसूते
मध्ये स्थितो जीवशशाङ्कसून्वोः ॥१९॥
प्रख्यातकर्माणममर्षिणं च
प्रभूतवित्तं बहुविग्रहं च।
आरब्धकं दौरुधुरे प्रसूते
योगे शशाङ्को गुरुभूमिसून्वोः ॥२०॥
योगे शशी दौरुधुरे प्रसिद्धं
विद्वांसमीड्यं सुखिनं यशस्कम्।
कान्तं नयज्ञानविशारदं च
शान्तं च गुर्वर्कजयोः प्रसूते ॥२१॥
मध्ये तु शुक्रेन्दुजयोः शशाङ्को
योगे स्थितो वाग्मधुरं प्रसूते।
विवादगीताभिनयज्ञमाढ्य-
मिष्टान्नमाच्छादनभोजनं च ॥२२॥
कान्तं परस्त्रीसुभगं समर्थं
व्यायामशौर्यास्त्रविवादशीलम्।
शुक्रारयोर्मध्यगतः शशाङ्को
जयैषिणं दानरतं प्रसूते ॥२३॥
शुक्रार्कसून्वोरपि मध्यसंस्थ-
श्चन्द्रः पटुस्थं पुरुषं प्रसूते।
f.20v मान्यं समृद्धं निपुणं कुलाग्र्यं
वृद्धासतीस्त्रीरतिवल्लभं च ॥२४॥

Apparatus

19a °शिल्वं N 21a दौरुधुरं N 21b नयस्कं N 22b वाक्मधुरं N 22b °मिष्टामृतान्छा° N 24d वद्धा° N, वृद्धा° K

10,25–30

लुब्धः <शठो> बह्वनृतप्रलापी
गणाधिको भूमिधनाकरो वा ।
भवेन्नरो भूमिशशाङ्कसून्वो-
र्योगं गते दौरुधुरं <शो>शाङ्के ॥२५॥
देशाटनो वित्तपरोऽल्पवित्तः
पूज्यः परेषां स्वजनैर्विरुद्धः ।
मध्ये बुधार्क्योः शशिनि स्थिते स्या-
दन्यार्थनोत्थानपटुर्मनुष्यः ॥२६॥
क्रोधी बहुद्विट् पिशुनः प्रलापी
बह्वागमार्थश्चलसंचयश्च ।
शनैश्चराङ्गारकमध्यसंस्थे
सोमे नरः स्याद् व्यसनप्रतप्तः ॥२७॥
एष्वेव योगेष्वशुभा निविष्टाः
स्वमूलभांशे निधनारिभेषु ।
हिंसन्ति नीचारिगृहे जिता वा
राश्यंशभागक्रमसंश्रयं यत् ॥२८॥
स्वोच्चादिभस्थानविवृद्धवीर्य-
मिष्टग्रहं केन्द्रगमिष्टदृष्टम् ।
एष्वेव योगेषु गुणैर्महद्भि-
र्लोकोत्तरोत्सूतिकरं वदन्ति ॥२९॥
एकर्क्षयोगोपगतस्तु चन्द्रः
शुभाशुभैस्तुल्यफलो निरुक्तः ।
यच्चन्द्रचाराभिहितं पुरस्तात्
तच्चोपधार्यं शशिसङ्गतेभ्यः ॥३०॥
यवनजातके चन्द्रयोगविधिः ॥

Apparatus

25a अतिशठ K   25b गुणा° N   25d no space in N   26d °त् अन्येर्थनोस्थान° N   27d योगे N   28b °भेत्यो N   28d भागंशभाग° N   29b केन्द्रगदृष्टिदृष्टम् N   29d °त्तरांसूति° N   30a °योगोपगुरुस्तु N   30c यद्वन्द्र° N

11, 1–4

सूर्याद् द्वितीयं ग्रहयुक्तमृक्षं
    वेशीति संज्ञा विहिता पुराणैः।
वाशीति सूर्यात् प्रतिनिर्गतं यत्
    तत्सम्भवांल्लक्षणतोऽभिधास्ये ॥१॥
(अभीरवाक्यः परिभूतकर्मा)
    मन्दद्विदृग् दुःखपरिश्रमश्च।
अधोनिरीक्षी विनतोर्ध्वकायो
    जातो भवेद्वेशिगृहे मनुष्यः ॥२॥
उद्दिष्टवाक् स्तब्धविवृद्धगात्री
    प्रोत्थानसत्त्वस्मृतिशीलयुक्तः।
व्यस्तोर्ध्वदृष्टिः पृथुपूर्वकायो
    भवेन्नरो वाशिगृहे प्रसूतः ॥३॥
विशिष्टमित्रं बहुसंचयज्ञं
    गुरुर्नरं वेशिगृहे प्रसूते।
कार्यावसन्नं भृगुजोऽल्पमेधं
    भीरुं पराज्ञावशवर्तिनं च ॥४॥

Testimonia

With this chapter compare Sārāvalī 14. 4–7 (in the order: 5c, 4b, 5a–b, 4a, 5d, 4c–d, 7b, 7a, 6a–d, and 7c–d) equal Jātakasāradīpa 51, 3–4 and 6–7.

Apparatus

1b वेषीति N  1c वोषीति N, वाशि K  2a आभीर° N  2b मन्दद्वित्तद्विगूपरिग्र × सं च N, मन्ददृशा ··· परिभूत-परिश्रम K  2c विनतोर्द्ध° N  2d गृहेद्वेषिगृहे N  3a उदिष्ट° N, उत्सृष्ट K  °वाक्तब्धविवृद्धगामी N, corr. Ingalls  3c पृथि° N, पृथुल K  3d वोषिगृहे N  4b वेषिगृहे N, येशिगृहे J  4c भृगुभे N  4d °वयवर्तिनं N

11,5-8

बुधो विनीतं मृदुमल्पसारं
ह्रीविक्लवं मन्दमतिं प्रगल्भम् ।
f. 21 कुजः पराज्ञाकरमाघृणिं च
शठं गुरुद्वेषिनमर्कसूनुः ॥५॥
वाग्बुद्धिकारं धृतिसत्त्वयुक्तं
सूते गुरुर्वाश्यभिधानयोगे ।
शुक्रः प्रकाशर्द्धिनमूर्जितं वा
क्रियापरिख्यातगुणं यशस्कम् ॥६॥
बुधः पराज्ञावहितं सुवाक्यं
भौमो रणख्यातमनन्यबाहुम् ।
निस्त्रिंशचेष्टं पिशुनं च सौरः
स्या(ना)त्मकैर्भावगुणैश्च वाच्यम् ॥७॥
अन्योन्यराश्यंशकसंप्रयोगै-
रन्योन्यसन्दर्शनसङ्गमैश्च ।
कुर्वन्ति देहानितरेतरेषु
स्थानेषु कालक्रमचारयुक्ताः ॥८॥

Testimonia

8a-b is quoted by Utpala on Bṛhajjātaka 19,9

Apparatus

5a बुधो J   बुधमल्प° J   5b ह्रीविक्लवं N, सलज्ज K
5c कुजाः N   °माघ्ननिघ्नं N, °मार्त्तमायं J, घृणी K
5d सुहृद्द्वेषिणकर्मसूनुः J   6a मांगृद्धिसारं J   6b
गुरुर्वोस्यनि° N, गुरुर्वोश्यभि° J   6c प्रकामं धन-
वर्जितं J   6d °ख्यातयशस्करं च J   7a° विहितं J
7b रसख्यातमनन्यबाहुं J   7c निश्वासचेष्टं J
पशुनं J   7d °गुणैः सुवाक्यं J

11,९

यतो जगद्वर्णविकारसारं
    रूपादिनानागुणचिह्नलिङ्गम् ।
ततो भवत्युत्तममध्यमान्त्यं
    दृष्टं ग्रहस्थानकृतैर्विकल्पैः ॥९॥
यवनजातके सूर्ययोगविधानः ॥

Apparatus
९c ततो] सर्वो N    ९d कृष्टं N    गृह॰ N

12,1-4

मेषं गतोऽर्कः समरप्रचण्ड-
    मुत्युक्रमुद्वृत्तबलप्रधानम्।
शास्त्रार्थवाक्कर्मसु लब्धशब्दं
    जयैषिणं पक्षिणमुग्रवृत्तम्॥१॥
व्याधिप्रियं साहसकर्मशीलं
    दृढास्थिबन्धं द्युतिमन्तमग्र्यम्।
पित्तासृगुत्कम्पतनुं प्रसूते
    स्वे तुङ्गभागे क्षितिभृग्वरिष्ठम्॥२॥
वृषं गतोऽर्कः प्रियगन्धमाल्य-
    मिष्टासनाच्छादनमल्पधैर्यम्।
सङ्गीतवाद्यादिरतं रतिज्ञं
    कृशं महौजस्विनमम्बुभीरुम्॥३॥
भोक्तारमाढ्यं व्यवहारशीलं
    बन्ध्याङ्गनाद्वेषिणमूर्जितं च।
मुखाक्षिरोगोपहतं दुरन्त-
    मल्पात्मजं क्लेशसहं च कुर्यात्॥४॥

Testimonia

With this chapter compare Sārāvalī 22.

1, 3, 2a, and 4c equal Vṛddhayavanajātaka 17,1-3b

Apparatus

1a समवि° N, समर° M    1b नरं प्रसूते धनवीर्ययुक्तं M
1c शास्त्रास्त्रवाक्कर्मसु N, शास्त्रार्थताकर्मसु M, शास्त्रार्थ-
कृतिकलाभिः ख्यातः K    1d मक्षिकम्° N, साधितम्° M,
corr. Ingalls    2a व्याधिभि° N, बन्धुा° M, corr. Ingalls
2c पित्तासृरुत्क° N, पित्तासृग्व्याधिभि K    3b °मिष्टामयच्छा°
N    °दनलब्धसौख्यं M    3c °वाद्यादि° N, °विद्याभि°
M    3d नरं सुवाते बहुमित्रयुक्तं M    4b °द्वेषिणि° N
4c द्युरन्त° N, सपाप° M

12,5–9

तिष्ठन् तृतीये दिनकृत् प्रसूते
    नरं शुभाचारगुणैः समेतम् ।
मेधाविनं वाङ्मधुरं विनीतं
    नैपुण्यवात्सल्यगुणैरुपेतम् ॥५॥
द्विमातृकं मध्यमरूपशोभं
    विज्ञानशास्त्रज्ञमुदारचेष्टम् ।
कान्तं रतिद्वेषिणमिष्टधर्मं
    ख्यातं नृपाणां स्वगुणैरुदारैः ॥६॥
तिष्ठन् रविः कर्कटके मनुष्यं
    स्वपक्षविद्वेषिणमन्यवश्यम् ।
अनिश्चितं कर्म(णि) दुःप्रलापं
f. 21v    नैकस्थितं पानरतं प्रसूते ॥७॥
बहुश्रमाधिव्यसनोपतप्तं
    स्व(बा)क्यदिग्देशविकारिणं च ।
पितृद्विषं स्त्रीरतिदुर्भगं च
    नित्यावसन्नं कफपित्तरोगैः ॥८॥
सिंहे तु सूर्यो जनयत्यरिघ्नं
    नरं भृशक्रोधमुदारचेष्टम् ।
उद्युक्तकर्माणममर्षणं च
    प्रख्यातमारण्यकमग्र्यशूरम् ॥९॥

Testimonia

5, 7a–b, and 9 equal Vṛddhayavanajātaka 17, 3c–5

Apparatus

5b सुताम्भोरमनैरवृत्तम् N, शुभाचारगुणैः समेतं M, श्रुताचार K   7b नानाविधसौख्यभावं M   °मद्यवश्यं N   7c दुष्प्यलापं N   7d नैकस्पिकम्वनरपं N   8b स्वा! x क्यदिग्देश° N, वरवाक्यदेशदिग्वेत्ता K   9c–d सत्त्वाधिकं शौर्यविलब्धकीर्ति-
    मुत्साहयुक्तं सततं बलं च । M

12,10–13

गाम्भीर्यसत्त्वस्थिति⟨धैर्यव⟩न्तं
तेजस्विनं वा धृतशस्त्रबाहुम् ।
रौद्रोग्रकर्माणमसाधुवृत्तं
प्रियामिषं दुर्गवनाटनं च ॥१०॥
कन्याश्रितो दुर्बलमल्पसत्त्वं
रविः प्रसूते मृदुदीनवाक्यम् ।
स्त्रीतुल्यमूर्तिं पुरुषं लिपिज्ञं
संवाहनोद्व⟨र्त⟩नकर्मठं च ॥११॥
शुश्रूषकं देवगुरुद्विजानां
ह्रीसत्त्वमिष्टश्रुतगी(त)वाद्यम् ।
मेधाविनं वल्गुकथं बुधं च
कर्मान्तनैपुण्यपरायणं च ॥१२॥
तुलाधरस्थः सविता प्रसूते
नरं विदेशान्तरमार्गशीलम् ।
²भङ्गक्षयार्तिव्ययशोकतप्तं
प्रद्विष्टनीचोपहतप्रमेहम् ॥१३॥

Testimonia

11 and 13c–d equal Vṛddhayavanajātaka 17,6–7b.

Apparatus

10a गम्भीर° N, corr. Ingalls   10b वाकृतिशास्त्र-बाहुं N   11a °सत्यं M   11b मृदुनीचवाक्यम् N, मृदुदीनसत्त्वं M, मृदुदीनवाक्य K   11c °तुल्यवीर्यं M, °तुल्यतनु K   कृपणस्वभावं M   11d निन्दानुरक्तं सततं गुरूणां M   सम्वाहनोर्द्धनकर्मठं N, संवाहनादिकर्मसु दक्ष K   12a शुश्रापकं N, सुश्रूषक K   12b ह्रीसत्त्व° N   12c °कथमुधं N   12d कर्मार्थ° N   °परापरं N   13c ²भृत्यक्षया° M   13d प्रकृष्ट° M   °प्रदिष्टं M   after 13d M adds:

तुलाधरस्थो दिनकृन्मनुष्यं
करोति नीचं व्यसनाभिभूतम् ।

12, 14–17

हिरण्यलोहायसधातुपण्य-
क्रियासु चाभिप्रयतं प्रगल्भम् ।
रणेष्टमर्थश्रुतिधर्मशीलं
प्रणष्टदुष्टप्रथमाङ्गनं च ॥१४॥
सूर्यो ऽष्टमर्क्षे तु गतो नृशंसं
क्रूरं भृशक्रोधमसत्यवृत्तम् ।
कुस्त्रीविधेयं जनयेन्मनुष्यं
लोभाभ्यसूयानृतवादिनं च ॥१५॥
मूर्खं मृजाचारगुणैर्विहीनं
प्रधृष्टशीलं प्रियविग्रहं च ।
विषाग्न्यसृक्शस्त्रपरिक्षताङ्गं
पितुर्जनन्या विकृतोपचारम् ॥१६॥
धनुर्धरस्थो जनयेन्मनुष्यं
सूर्यो नरेन्द्राभिमतं महान्तम् ।
शास्त्रार्थशिक्षानिपुणं विघुष्टं
प्राज्ञं सुनीतं व्यवहारयोग्यम् ॥१७॥

Testimonia

15 and 17 equal Vṛddhayavanajātaka 17, 8–9

Apparatus

14a °पश्य° N, पण्य K for 15 M has:
नित्यं प्रसूते स्मृतिधर्मशीलं
सूर्यो ऽलिसंस्थो वनितास्वभीष्टम् ।
नानार्थयुक्तं सुभगं मनुष्यं
नृपप्रसादाप्तसुखं जितारिम् ॥
15b असद्वृत्त K 16c °क्षस्तङ्गं N 17a धातुधरस्थो N 17c शास्त्रास्त्र° NK, शास्त्रार्थ° M निघृष्टं M
17d व्यवहारदक्षं M

12, 18–21

सुरद्विजातिथ्यकरं प्रशान्तं
पूज्यं सतां बन्धुहितारतं च।
द्रव्यान्वितं वीरमुदारसत्त्वं
विस्तीर्णपीनोन्नतकान्तदेहम्॥१८॥
मृगाभिधाने सविता निविष्टो
विपन्नशीलं जनयेन्मनुष्यम्।
अनल्पकार्योरतमल्पसत्त्वं
f. 22 स्वपक्षविक्षोभविपन्नवित्तम्॥१९॥
लुब्धं कुयोषिद्रतिसक्तभावं
कुकर्मसंवर्धितसंचयं च।
हृद्रोगिणं बह्वटनं शठं च
सतामवज्ञातमधर्मवन्तम्॥२०॥
तिष्ठन् रविः कुम्भधरे प्रसूते
नरं दृढद्वेषविरोधरोषम्।
अनिश्चितं कर्मसु दुःप्रलापं
योषित्स्वनार्यास्वतिवल्लभं च॥२१॥

Testimonia

19 and 21 equal Vṛddhayavanajātaka 17, 10–11.

Apparatus

18b °हितं रतं N   19b विबन्धशीलं N, विपन्नशीलं M, विहीनबन्धु K   for 19c–d M has:
अनिष्टकार्येषु सदानुरक्तं
मनोज्ञविद्वेषिणमल्पसत्त्वम्॥
19c अनल्पकार्यरत° N, बहुकार्यरत K   19d °क्षोभपिपन्न° N   21b °रोधम् M   21d व्ययान्वितं पापपरं कृतघ्नं M

12, 22–24

दुःखान्वितं मन्दधनं कुवेशं
मूर्खं नृशंसीकृतसौहृदं च ।
कुवृत्तमज्ञानमनार्यसाध्यं
सत्पुत्रसक्तैरुपलब्धकीर्तिम् ॥२२॥
मीनद्वयस्थो रविरात्तपुण्यं
कुर्यान्मनुष्यं बहुशत्रुपक्षम् ।
जलाश्रयैर्लब्धधनं पणैश्च
क्षयोदयं द्रव्यशरीरकीर्तिम् ॥२३॥
स्त्रीपीडहेतोरतिलब्धदुःखं
प्राज्ञं बहुभ्रातरमूर्जितं च ।
सुहृद्गुरुप्रीतिकरं सुवाक्य-
मिष्टश्रमं गुह्यरुगर्दितं च ॥२४॥
यवनजातके सूर्यराशिफलम् ॥

Testimonia

23a–b and 24c–d equal Vṛddhayavanajātaka 17, 12.

Apparatus

22b मर्त्यं N, शठ K   नृशंसीकृत° N, चलित K   22c °मनय्यसाध्यं N   23a मीनादिसंस्थाने सविता सुपुण्यं M   23b हृतशत्रुपक्षं M, बहुशत्रुघ्न K   23c °र्लम्बधनं समैश्च N, जलपण्यधन K   24d प्रसन्नशीलं बहुधर्मवित्तं M   °मिष्टश्रजं N

13,1–4

मेषं गतस्त्विन्दुसुतो मनुष्यं
    कुर्यात् कृशं बह्वशनं शठं च ।
मिथ्याप्रलापं प्रियनिग्रहास्त्रं
    भूरिश्रमोत्पन्ननिपन्नवित्तम् ॥१॥
रतिप्रियं कूटकरं सशिल्पं
    चलस्थितिं बह्वृणबन्धनं च ।
द्यूताभिरामं विटधूर्तचेष्टं
    सङ्गीतनृत्ताभिरतं लिपिज्ञम् ॥२॥
वृषं गतस्तु प्रसवेत कान्तं
    बुधो नरं त्यागिनमिष्टचारम् ।
गान्धर्वलीलारतिहास्यशीलं
    दक्षं प्रगल्भं प्रियवल्गुवाक्यम् ॥३॥
व्यायाममाल्याम्बरभूषणोच्चं
    ख्यातं स्थितं स्फीतधनाङ्गनं च ।
गृहीतवाक्यं सुहृदां वरिष्ठं
    विज्ञानशास्त्रश्रुतिपण्डितं च ॥४॥

Testimonia

With this chapter compare Sārāvalī 26. 1 and 3 equal Vṛddhayavanajātaka 20,1-2.

Apparatus

1b बह्वटनं M, बह्वाशी K 1c °ग्रहास्यं N, °ग्रहास्त्रं M, ग्रहस्तु K 2b चलस्थिरं N 2c धुता° N 3a पृथुबीनकान्तं M 3b °मिष्टदारं M 3c °लीलगति° N 3d दस्युं N, दक्ष KM 4b स्थिरप्रकृति K

13,5-9

बुधः प्रसूते मिथुने सुवाक्यं
नरं प्रियाभाषिणमिष्टवेषम् ।
शिल्पश्रुतिज्ञा(न)कलाविधिज्ञं
विकत्थनं मानिनमूर्जितं च ॥५॥
प्रख्यातबुद्धिं सुखिनं स्वतन्त्रं
कविं (वि)वादेष्वनिवारितं च ।
द्विस्त्रीसुतं कर्मठमुग्रशीलं
प्रियप्रदानं बहुमित्रपक्षम् ॥६॥
चतुर्थराशौ तु शशाङ्कसूनु-
f. 22v स्तिष्ठन् विदेशाभिरतं प्रसूते ।
प्राज्ञं कविं स्त्रीरतिगेयवित्तं
बहुक्रियासक्तमनिश्चितं च ॥७॥
स्वबन्धुविद्वेषविवादशीलं
बहुप्रलापं चपलं कुशीलम् ।
द्विड्ग्रहाद् व्यस्तविपन्नवित्तं
स्ववंशकीर्त्या भुवि विश्रुतं च ॥८॥
बुधो नरं सिंहमुपेत्य कुर्या-
दल्पस्मृतिं ज्ञानकलावियुक्तम् ।
उत्साहसत्त्वस्थितिवृत्तिहीनं
जगत्य(व)ज्ञातमसत्यवाक्यम् ॥९॥

Testimonia

5, 7, and 9 equal Vṛddhayavanajātaka 20,3-5

Apparatus

5b °भषिण° N, °भाषण° M, °भाषी K  °वेशं N, °केशं M, °वेष K  5c °वला° N  5d °मालिन° N, मानिन° M, मानी K  7b °स्तिष्ठान् N  7d °शक्ति° N  °मनस्विनं M  8c °ग्रहाद्विस्त° N  स्त्रीवैरान्नदृष्टान K  9c °वृत्तहीनं N, °वित्तहीनं M  9d जगत्यतिज्ञात° M, लोकख्यात K, corr. Ingalls

13,10-14

स्त्रीदुर्भगं प्रेष्यकमस्वतन्त्रं
    स्त्रीरूपतुल्याकृतिमप्रजं च ।
जघन्यकर्माभिरतं नृपाणां
    कुलेष्वसद्वृत्त(ज)नाभिरामम् ॥१०॥
कन्यामुपेत्य प्रवरं प्रसूते
    धर्मप्रियं वाग्मिनमिन्दुसूनुः ।
आलेख्यलेख्यश्रुति(काव्य)वित्तं
    विज्ञानशिल्पादिविनिश्चितं च ॥११॥
स्त्रीष्वल्पवीर्यं मधुरं विनीतं
    दासोपचारादरमान्ययुक्तम् ।
ज्ञेतारमीड्यं सुहृदां श्रुतं च
    ख्यातं गुणैरप्रतितुल्यवीर्यम् ॥१२॥
तुलाधरे शिल्पविवादशीलं
    बुधो नरं वाक्यचतुरं प्रसूते ।
शठप्रचारं कृतकोपचारं
    पण्यक्रयोपायविधानदक्षम् ॥१३॥
अनेकदिक्पण्यनिविष्टचित्तं
    बहुव्ययानर्थपरिक्षयं च ।
गुरुद्विजार्याविधिजातभक्तिं
    तत्संमतं देवपरायणं च ॥१४॥

Testimonia

11 and 13 equal Vṛddhayavanajātaka 20,6-7.

Apparatus

11a प्रचुरं NM, चतुर K, प्रचुरगुण V  12b दासावचारा° N
12c सुतं N  13a °विवादवन्तं M  13b बुधो विधत्ते
चपलं प्रसूते M  14a नानादिक्पण्यरति K  °दिक्पुण्य°
N

13,15–19

बुधो नरं वृश्चिकमेत्य कुर्या-
दनर्थदुःखश्रमशोकतप्तम् ।
विद्विष्टकर्माणमसाधुशीलं
पारुष्यदण्डं छलनिश्चितं च ॥१५॥
लुब्धं परादानपरं विरुद्धं
सद्द्वेषिणं दुर्वनितापतिं च ।
नीचान्त्यमानर्द्धिमृणाभियुक्तं
मूर्खं स्वमुक्तस्थितिधर्मलज्जम् ॥१६॥
धनुर्धरस्थस्तु बुधो मनुष्यं
विख्यातशब्दं जनयत्युदारम् ।
शास्त्रार्थशिल्पश्रुतिशौर्ययुक्तं
मेधाविनं वाक्यविशारदं च ॥१७॥
यज्ञव्रताराधनदानशीलं
पुरोहितं पार्थिवसाक्षिणं वा ।
कुलप्रधानं लिपिलेख्यवित्तं
पटुं क्रियायोगविनिश्चयेषु ॥१८॥
f. 23 बुधो मृगस्थो जनयत्यनर्थं
नीचं परप्रेष्यमसत्यचेष्टम् ।
मूर्खं कलाशिल्पगुणैर्विहीनं
निरुद्धपुंस्त्वं पिशुनस्वभावम् ॥१९॥

Testimonia

15, 17, and 19 equal Vṛddhayavanajātaka 20,8–10.

Apparatus

15a विश्चिक° N, वृश्चिक° M  15c विधिष्ट° N, विद्विष्ट KM  15d °दं डूच्छल° N, °दं पुंश्चल° M, दण्ड ··· छल K  16a शुब्धं N, लुब्धा K  16c °मोहाहार्द्धिमृणा° N नीचानुरुचि K  16d मूख्यं N, मूर्खे K  17a धान्वधार° N, धनुर्धर° M  18b °सक्षिणं N, मन्त्री K  19b नीचा N, नीच MK  19d निरुद्धामस्थं M, षण्ढ K

13, 20–24

सुसंस्थितात्मानमनेकदुःखं
    क्रियालसं बन्धुभिरुज्झितं स्वैः।
मलीमसं स्वप्नविहारशीलं
    जगत्यनिष्टं भयशङ्कितं च ॥२०॥
कुम्भे तु सौम्यः शुचिशीलहीनं
    नरं प्रसूते परिभूतमज्ञम्।
वाग्बुद्धिकर्मोपहतं हृताशं
    प्रहीनलज्जं रतिदुर्भगं च ॥२१॥
स्वसाधुदारद्विषमाविभागं
    भीरुं परेषां मलिनं विधेयम्।
विमुक्तधर्मं विफलं श्रमार्तं
    क्लीबं बहिर्माल्यविभूषणं च ॥२२॥
मीनद्वयस्थस्तु बुधो मनुष्य-
    माचारशौचाभिरतं प्रसूते।
देशानुगं वाग्मतिकर्मसाधुं
    दरिद्रमल्पप्रजमिष्टचारम् ॥२३॥
सतामनत्यर्हितमात्मधर्मं
    बहुश्रुतिज्ञानकलावियुक्तम्।
सूच्यादिकर्मप्रचुरं प्रकीर्ण-
    मारब्धिकं वा परसंचयानाम् ॥२४॥
यवनजातके बुधराशिफलम् ॥

Testimonia

21 and 23 equal Vṛddhayavanajātaka 20, 11–12

Apparatus

20b °विरुज्झितं N, °विमुक्त K 20d जयत्य° N °शाङ्कृतं N 21b °भूति° N 21c हृतंशं N, हताश्रं M 22a °माद्धिभाजं N, विवाग् K 22b मलिनां N 22c श्रमात्रं N 22d हविर्माल्य° N 23a मीनद्वय° N 23b °शुचा° N, °शोभा° M, शौच K 23c वाङ्मित° N 23d दरिप्रगल्भ° N, दरिद्र-मिष्ट° M, अप्रज . . . दरिद्र K °मल्पमिष्टं M

14, 1–5

मेषे तु शुक्रो जनयत्यशान्तं
    नरं बहुक्रोधविरोधशीलम् ।
धृष्टं परस्त्रीहरणप्रयुक्त-
    मीर्ष्यं वनारण्यविचारिणं च ॥१॥
स्त्रीहेतुजातव्ययबन्धभाजं
    जगत्यविश्वासमसौहृदं च ।
चमूपुरश्रेणिगणाधिपानां
    पुरस्कृतं शूरमतिप्रगल्भम् ॥२॥
वृषे ब(हु)स्त्रीसुतरत्नमाढ्यं
    ख्यातं प्रसूते भृगुजः सुमूर्तिम् ।
स्वबन्धुभर्तारमनेकवित्तं
    कृषीवलं गोकुलजीवनं वा ॥३॥
दाता(र)मिष्टाम्बरगन्धमाल्यं
    बहुप्रजं सत्त्वहितं महान्तम् ।
गुणैः परानुग्रहकृद्भिरग्र्यै-
    रुपेतमात्म(प्र)तिमोदनैश्च ॥४॥
निषेवमानं मिथुने प्रसूते
    शुक्रो नरं वाग्मिनमूर्जितं च ।
सुरद्विजातिथ्यकरं कृतज्ञं
    विज्ञानशास्त्रार्थकलारतिं च ॥५॥

Testimonia

With this chapter compare Sārāvalī 28. 1, 3, and 5 equal Vṛddhayavanajātaka 22, 1–3.

Apparatus

1b बहुव्रोध° M, बहुदोष K 1c °प्रसक्तं M 1d °मीर्षं N, सेर्ष्यं M °विचारणं M 2d पुरास्कृतं N 3c °भक्ता° N, °भर्ता KM °वीर्यं M 3d च M 4b °हितां N 4d °रूपत्यमा° N 5c °तिथ्यपरं M 5d °कथारतं M, कला K

14,6–10

प्रियाभिमानं प्रणयप्रधानं
संरूढसौहार्दसुहृज्जनाढ्यम् ।
आलेख्यलेख्यस्मृतिगीतनृत्त-
f. 23v गान्धर्वचित्रार्थरतं रतिज्ञम् ॥६॥
चतुर्थराशावपि षोडशार्चि-
स्तिष्ठन् प्रसूते रतिधर्मशीलम् ।
प्राज्ञं श्रुतिज्ञानवतां वरिष्ठं
मृदुस्वभावं प्रियदर्शनं च ॥७॥
स्त्रीपानदोषप्रभवैरथैव
व्याध्यादिभिर्दूषकलिप्रमोहैः ।
प्रपीडितं वंशसमुद्भवैः स्वैः
प्रकांचितैराप्तसखं धनैश्च ॥८॥
सिंहाश्रितस्तु प्रियबन्धुपक्षं
शुक्रः प्रसूते नरमल्पसत्त्वम् ।
विचित्रसौख्यव्यसनं सुरूपं
गुरुद्विजाचारपरायणं च ॥९॥
योषिज्जनोपासनसंप्रयोगै-
रवाप्तसौख्यं द्रविणप्रमोदम् ।
स्वबुद्धिचिन्तास्वनभिप्रयोगं
परोपदेशं व्यवहारिणं च ॥१०॥

Testimonia

7 and 9 equal Vṛddhayavanajātaka 22,4–5.

Apparatus

6b °नाद्यं N, जनाढ्य K  6c °स्मृत° N  6d °गन्धर्वचित्रास्त्ररतं N  7a °राशौ यदि M षोढषार्चि° N  7c प्राज्ञा N श्रत° N, श्रुति° M °ज्ञानविदां M  8a °रथैवौः N  8b °प्रमोदैः N  10b °प्रमोद्वयं N, प्रमोद K

14,11-15

कन्यां गतो मार्दवमल्पवित्तं
शुक्रः परोपासनजीविनं च ।
स्त्रीभूषणज्ञं रतिगेयवित्तं
कलालिपिज्ञं मधुरं च कुर्यात् ॥११॥
प्रमेयगण्यार्थकृतप्रयत्नं
क्रियोपधायां नियुतप्रयोगम् ।
नारीषु दृष्टप्रणयोपचार-
माहिण्डिकं तीर्थसमाश्रयाणाम् ॥१२॥
तुलाधरस्थो भृगुसूनुराढ्यं
नरं प्रसूते रुचिरार्थपण्यम् ।
विचित्रमाल्याम्बरमात्मवश्यं
बहुप्रवासं श्रमलब्धवित्तम् ॥१३॥
देवद्विजाभ्यर्चनलब्धकीर्तिं
शूरं सतामाश्रयमाप्तविद्यम् ।
सुनिश्चितं कर्मसु दुःसहेषु
नैपुण्यसंलब्धितसङ्ग्रहेषु ॥१४॥
शुक्रोऽष्ट(म)क्षेत्रगतो नृशंसं
विद्वेषशीलं जनयत्यधर्मम् ।
प्रद्विष्टनष्टं प्रतिलोमभार्यं
शठं परस्त्रीष्वनयप्रपंचम् ॥१५॥

Testimonia

11, 13, and 15 equal Vṛddhayavanajātaka 22,6-8.

Apparatus

11c-d स्त्रीसंभाषणमधुर K 11c °गेयकाव्यं M 12b क्रियोपधूपान्वि° N 12c दृष्टप्रचयोपचार° N, दृष्टरतिषु प्रणयी K 12d °माहीण्डिकं N, पण्डित K 13b ऽर्थविराजपण्यं M, रुचिरसुपुण्य K 14a द्वैव° N 14c सदुष्करेषु K 14d °संलक्षण° N 15b °धन्यं M 15c प्रद्विष्टदुष्टं M 15d °त्रपं च N, °प्रपंचं M

14,16–20

विमुक्तधर्मं सहृज्जैर्विरक्तं
   निगर्हितं शीलपरिक्रियाभिः ।
हिंसापरं बहृणशापशोकं
   विकत्थनं गुह्यरुजाभिपूर्णम् ॥१६॥
धनुर्धरस्थो ऽपि गतार्थविद्यं
   शुक्रः प्रसूते भुवि लब्धशब्दम् ।
सद्धर्मकामार्थफलैरुपेतं
   जगत्प्रियं कान्तमलङ्करिष्णुम् ॥१७॥
पीनोन्नतोदारशरीरमार्यं
   पूज्यं सतां वृत्तपुरस्कृतं च ।
सद्वृत्तदारं सु(भगं व)रिष्ठं
f. 24   कविं नृपामात्यमहत्तरं वा ॥१८॥
कुर्वीत राशौ दशमे मनुष्यं
   शुक्रो बहुक्लेशभय[श्र]मार्तम् ।
पैशून्यलोभानृतवंचनानां
   प्रयोगिनं क्लीबविपन्नचेष्टम् ॥१९॥
वृद्धाङ्गनासेवितमध्वशीलं
   परार्थचेष्टास्खलितदुःखभाजम् ।
हृद्रोगिनं दुर्बलदेहयन्त्रं
   मूढस्मृतिं देहपरिश्रमं च ॥२०॥

Testimonia

17 and 19 equal Vṛddhayavanajātaka 22,9–10.

Apparatus

16a सहृज्जामरक्तं N, सहृज्जविरक्त K   16c °शून्यशोकं N   16d °रुगाभिपर्ण्णं N, सुगुह्यगद K   17a विगतार्थनिन्द्यं M   17b ऽतिनिलवशब्दं M, कुलब्ध-शब्द K   17d °मनल्पसौख्यं M   19b °भयव्याप्तं N, °भयश्रमार्तं M   19c पैशून्य° N °लोभानृत° N, °लोभाश्रित° M, लोभानृत K   20c हृद्रोगी K   20d देहपरिग्रहं N, क्लेशसह K

14, 21-24

शुक्रश्चरन् कुम्भधरे मनुष्य-
मुद्वेगरोगव्यसनोपतप्तम् ।
कर्मस्वसम्पन्नफलेषु सक्तं
कुर्याद्विरुद्धं गुरुभिः सुतैश्च ॥२१॥
विमुक्तधर्मत्रपमङ्गनासु
द्यूतप्रियं पानपरायणं च ।
स्नानोपभोगाहरणादिबाह्यं
पराङ्गनोपासनकर्मशीलम् ॥२२॥
मीनद्वयस्थो जनयत्युदारं
शुक्रः शुभिज्ञानरतं मनुष्यम् ।
वाग्बुद्धिकर्मप्रचुरं सुरूपं
नृपाश्रितं सज्जनलब्धमानम् ॥२३॥
दाक्षिण्यदानादिगुणैरुपेतं
महाधनं विद्रुतशत्रुपक्षम् ।
लोके परिख्यातविशिष्टचेष्टं
साध्वङ्गनावंशधरं वरिष्ठम् ॥२४॥
यवनजातके शुक्रराशिफलम् ॥

Testimonia

20 and 23 equal Vṛddhayavanajātaka 22, 11-12

Apparatus

21b °मुद्योग° M, उद्वेग K 22d वरङ्गनो° N 23a मीनद्वयस्थो N 23b श्रुतिज्ञान° M 23c दिग्बुद्धि° M, वाग्बुद्धि K 23d नृपास्मृतं N, नृपप्रियं M, नृपतिदयित K 23d सज्जनमानलब्धं M, सज्जनपरिलब्धाभिधवमान K

15,1–4

मेषे तु भौमो रभसं प्रचण्डं
    शूरं महासाहसकर्मशीलम् ।
तेजस्विनं सात्त्विकमप्रधृष्यं
    दुर्मर्षिणं दानरतं प्रसूते ॥१॥
प्रभूतगोऽजाविहिरण्यधान्यं
    बह्वङ्गनानन्दनभृत्यवर्गम् ।
नृपं रणश्लाघिनमूर्जितं वा
    चमूपुरग्रामगणाधिपं वा ॥२॥
वृषे तु बन्धुप्रतिबद्धवैरं
    भौमः कुलोत्साहकरं प्रसूते ।
सङ्गीतवित्तं बहुदुःप्रलापं
    प्रभञ्जणं मन्दधनात्मजं च ॥३॥
पराङ्गनासङ्गमसक्तभावं
    साध्वीव्रतघ्नं वसुधारिणं च ।
द्वेष्यं जगत्युद्धतवेषचेष्टं
    विश्रम्भसत्यस्थितिधर्महीनम् ॥४॥

Testimonia

With this chapter compare Sārāvalī 25. 1 and 3 equal Vṛddhayavanajātaka 19,1–2.

Apparatus

1b नरं साहस° M  1d दुर्मर्षणं M  3a स्वबन्धु° M
3b कुलोत्सोदकरं N, पुलोत्साहकरं M, कुलोत्साटी K
3c सुदुष्टशीलं M  4a शूरं परा° N  4c द्वेषं N
जगत्स्युद्धत° N  4d विश्रस्त° N, विस्त्रम्भ K

15, 5–8

सन्तिष्ठमानो मिथुने प्रसूते
भौमो मनुष्यं बहुविप्रवासम् ।
नानार्थशिल्पास्त्रकलाविधिज्ञं
बहुश्रुतं काव्यविशारदं च ॥५॥
कान्तं श्रमक्लेशसहं विनीतं
f. 24v |धृत्यन्वितं धर्मपरायणं च ।
हितानुकूलं सुहृदां सतां च
नैपुण्ययुक्तं प्रचुरक्रियासु ॥६॥
स्थितः कुजः कर्कटके कृशार्थं
कुर्वीत वैकल्यरुगर्दिताङ्गम् ।
पुनः पुनर्वैधितविच्युतार्थं
नरं परावेश्मनिवासिनं च ॥७॥
बाल्ये परान्नाम्बरभोजनेप्सुं
मृदुं परान्नादनतत्परं च ।
ततः परस्तात् सलिलाश्रयाढ्यः
श्रमादवाप्तद्रविणं क्रियाढ्यः ॥८॥

Testimonia

5 and 7 equal Vṛddhayavanajātaka 19,3–4.

Apparatus

5a सन्तुष्टमानो M 5c °शिल्पासु कलासु दक्षं M 5d बहुष्युतं N, बहुश्रुत KM वाक्य° M, काव्य K 6b धृतान्वितं N 6c सुहृदात्मवां N, सुतेषु सुहृदां च K 7b °गर्दितं च M 7c °निःकृतार्थं M वृद्धिबेदनार्थं K 7d परावेशानविश्रुतं M, परगृह-निवासशील K 8a बाले N, बाल्ये K राज्यभोजन-वस्त्रेप्सु K 8c पुरस्तात् N °श्रयेढ्यः N

15, ९–13

अङ्गारकः सिंहमुपेत्य सूते
    नरं वपुष्मन्तमुदग्रसत्त्वम् ।
अमर्षणं शूरमतिप्रचण्डं
    परप्रहर्तारमसंचयं च ॥९॥
वनाटवीगोकुलसन्निवासं
    प्रियामिषं व्याडमृगोरगघ्नम् ।
अनात्मजं पूर्वविपन्नदारं
    क्रियोद्यतं धर्मफलव्यपेतम् ॥१०॥
कन्यां गतो लोहितमूर्तिराढ्यं
    पूज्यं सतां मार्दवमल्पशौर्यम् ।
प्रियप्रलाप̣ं र̣ति̣ग̣[ी]तवित्तं
    नरं प्रसूते विविधव्ययं च ॥११॥
अर्थार्जनोद्विजनभीतिवन्तं
    यज्वानमग्निप्रणतैकपार्श्वम् ।
स्मृतिश्रुताचार्यमनेकशिल्पं
    कान्तं प्रियस्नानविलेपनं च ॥१२॥
तुलाधरस्थस्तु कुजोऽध्वशीलं
    प्रसक्तवाक्यं जनयत्यभीष्टम् ।
विकत्थनं बह्वनृतं कुपुण्यं
    हीनाङ्गमु̣त्सादितपूर्वदारम् ॥१३॥

Testimonia

9, 11, and 13 equal Vṛddhayavanajātaka 19, 5–7.

Apparatus

९b वपुष्मन्तमदग्र° N   ९c अमर्षिणं M   ९d °संश्रयं M
10b व्याडसृगालगघ्नम् N, व्यालमृगोरगहन्ता K   11b मार्जव° M, मृदु K   11c र̣ति̣ग × तवृत्तं N, परगीतदत्तं M, रतिगीतधान K   12a अत̣ोर्जनोद्विजनभीतिवासं N   12b °प्रणितैक° N   12c °शिल्पं N   13b °त्यनिष्टं M   13c कृपणं N, कुपण्यं M, सुपण्य K   13d °मुत्साहित° M, नष्ट K   °मित्रं M, दार K

15,14–18

शठं परोपासनसङ्ग्रहेप्सुं
सुहृद्गुरुस्त्रीषु मनोत्सुकं च।
वेशाङ्गनाशौण्डिकसन्निवेशं
स्वावाप्तवित्तक्षयमस्वपक्षम्॥१४॥
भौमोऽष्ट(मे) पापमसत्यवृत्तं
कुर्यान्नरं बह्वपराधवैरम्।
शठं वधाद्द्रोहकृ(ता)नुबन्धा-
मा(चा)रसत्त्वश्रुतिधर्महीनम्॥१५॥
युद्धोत्सुकं चौरगणाधिपं च
क्रियापटुं दर्पितमुग्रसत्त्वम्।
प्रभूतगोभूमिवराङ्गनाढ्यं
विषाग्निशस्त्रव्रणपीडिताङ्गम्॥१६॥
चारागतो धन्विनि लोहिताङ्गो
बहुक्षतं क्षीणतनुं प्रसूते।
f. 25 शठं नरं निष्ठुरवाक्यशीलं
विपन्नदारात्मजमस्वतन्त्रम्॥१७॥
रथाश्वयानं रथविग्रहं वा
सैन्ये परेषामिषुधारिणं वा।
गुरुष्वसक्तं विफलश्रमान्त-
मन्योन्यवैरोपहृतात्मपक्षम्॥१८॥

Testimonia

15 and 17 equal Vṛddhayavanajātaka 19,8–9.

Apparatus

14d स्ववाप्त° N, corr. Ingalls 15a पापमतिं कुवृत्तं M 15d °(चा)र्यसत्त्व° N, °चारसत्य° M 16b °पिटुं N, °निपुण K 16c °स्वराङ्ग° N 16d °शास्त्र° N, शस्त्र K 18b परसैन्ये K 18c °सस्यं N, सक्त K 18d °हृतत्म° N °तन्त्रं N, corr. Ingalls

15,19-22

मृगे तु भौमो मक(रा)परार्धे
स्थितो नरं श्रेष्ठतमं प्रसूते ।
धन्यं धनोपार्जितदारमाढ्यं
चमूपतिं वा मनुजेश्वरं वा ॥१९॥
प्रख्यात(म)त्यन्तसुखोपभोगं
नेतारमारब्धिकमार्यदारम् ।
स्वबन्धुपक्षं विशदात्मवंशं
प्रधानशीलं विविधोपचारम् ॥२०॥
कुम्भे तु भौमो विकृतं कुवेशं
सूते नरं दुर्भगदर्शनं च ।
पैशुन्यसूयानृतवंचनं च
दोषैरजस्रोपहतं हृतार्थम् ॥२१॥
रोमांचितं दुःखपरीतवृत्तिं
पानप्रियं प्र[श्र]यशौचहीनम् ।
वृद्धाकृतिं दुर्गतिमन्त्यमन्ते
द्यूतादवाप्तार्थमसंचयं च ॥२२॥

Testimonia

19 and 21 equal Vṛddhayavanajātaka 19,10-11

Apparatus

19a सुस्थिनं सुकान्तं M  19b स्थितो परं N, निरन्तरं M  श्रेष्ठमति K  संप्रसूते N  19c °पार्जिततार° N, °पार्जनितं र° M  20b °मारात्विक° N, आरब्ध K  20c विषया° N  21a मनुष्यं M, कुवेष KN  21c पैशून्य° N  °वादमृण° M  मात्सर्यासूयानृत K  °वंचनादि M  21d मनुष्यं M, हृतार्थं K  22b प्रयशौच° N, प्रश्रयशौच K  22d द्यूताद्व्याहृत K  °सव्ययं N

15, 23-24

तिष्ठन् कुजो मीनयुगे रुगार्तं
प्रवासिनं मन्दसुतं प्रसूते।
बहुद्विषं वध्यनिवंचनाधि-
र्विपन्नसर्वस्वमतीक्ष्णशोकम् ॥२३॥
जिह्मं सदार्यस्थितिपुष्टिनाशं
गुरुद्विजावञ्चकमीप्सितघ्नम्।
प्रियश्रुतिघ्नानमनल्पबन्धुं
विवादिनं बन्धुजनावधृष्टम् ॥२४॥
यवनजातके भौमराशिफलम्॥

Testimonia

23 equals Vṛddhayavanajātaka 19,12.

Apparatus

23a मीनगतो M    23c बहुद्विडं N    बहुद्विजा-
ध्यर्थनिवंचनादि° M    23d °तक्ष्णशोकं N,
°तीक्ष्णरोगं M, अतितीक्ष्णशोक K    24a °युक्तनाशं
N    24b °मीहितघ्नं N, ईप्सितवेत्ता K    24c
°मनल्पनन्धुं N, स्वबन्धु . . . परिभूत K    24d
°धूतम् N

16,1-4

मेषे नरं देवगुरुः प्रसूते
    दुर्मर्षणं सत्त्वबलप्रधानम्।
विख्यातकर्माण[मि]तिप्रगल्भ-
    मोजस्विनं वादिगुणैरुपेतम् ॥१॥
दण्डाग्रनेतारमुदग्रमुग्रं
    प्रसन्नरत्नाभरणारतं च।
बहुव्ययार्थं समरप्रसक्तं
    क्षताङ्किताङ्गं बहुवैरिणं च ॥२॥
वृषे गुरुः पीनविशालदेहं
    नरं प्रसूते सुभगं सुवेशम्।
कान्तं स्वदाराभिरतं विनीतं
    देवद्विजाचार्यकृतोपचारम् ॥३॥
स्थिरस्वभावं कृषिगोधनाढ्य-
    मिष्टाम्बरं चारुविभूषणं च।
विशिष्टवाग्बुद्धिगुणं नयज्ञं
    भिषक्प्रयोगागतकौशलं च ॥४॥

Testimonia

1 and 3 equal Vṛddhayavanajātaka 21,1-2.
With this chapter compare Sārāvalī 27.

Apparatus

1a गुरुर्देवनरं M   1b शौर्यबलस्वभावं M, सत्त्वात्मजार्थबलयुक् K   1d वाद° N, बुद्धि° M, वादि K   2b °रत्ना° N, रत्ना K   2d °वैरणं N, शत्रु K   3a पाण्डुयशःप्रतारं M, पीनो विशालदेह K   4b °सृष्टाम्बरं N

16,5–9

तृतीयराशौ तु सुरेन्द्रसूरि-
नैपुण्यदाक्षिण्यरतं प्रसूते।
सुमेधसं वाग्मिनमाहितार्थं
f. 25v क्रिया(र)तं बुद्धिगुणान्वितं च ॥५॥
माङ्गल्यभूषारतिमाप्तशब्दं
मान्यं गुरूणां गुरुवत्सलं च।
सद्धर्मशीलं सुनयं प्रधानं
कविं बहुज्ञानविशारदं च ॥६॥
तिष्ठन् गुरुः कर्कटके सुरूपं
विद्वांसमार्यं बलशीलयुक्तम्।
प्राज्ञं प्रसूते प्रियधर्ममाढ्यं
यशस्विनं लोकपुरस्कृतं च ॥७॥
प्रभूतधान्याकरसंचयाढ्यं
स्थिरास्पदं सत्यसमाधियुक्तम्।
विशिष्टकर्माणमृजुं नृपं वा
सुहृज्जनानुग्रहकारिणं वा ॥८॥
सिंहाश्रितो देवगुरुः प्रवीरं
नरं प्रसूते स्थिरधीरसत्त्वम्।
विद्वांसमालव्यमुदारमग्र्यं
शूरं बहुस्निग्धसुहृज्जनं च ॥९॥

Testimonia

5, 7, and 9 equal Vṛddhayavanajātaka 21,3–5.

Apparatus

5a च M   सुरेन्द्रसौरि° N, सुरेज्यमन्त्री M   5d त्रिया x त N, कृपापरं M, क्रियारति K   6a मङ्गल्य° N, माङ्गल्य K   6c सधर्म° N   7b विद्वांसमोज्ञो° M °वीर्ययुक्तं M   7c °धर्मभाजं M   8c °मजं N   9a शिंहाश्रितु N, सिंहं गतो M   9c °मुग्रं M

16,10–14

आद्यं विशिष्टाभिजनं नृपं वा
    वपुर्धरं तत्समपौरुषं वा ।
अनर्थरोषापहृतारिपक्षं
    शूरं दृढं व्यस्तबृहच्छरीरम् ॥१०॥
षष्ठे क्रियाज्ञानविशुद्धबुद्धिं
    मेधाविनं धर्मकथाभिरामम् ।
शास्त्रार्थशिल्पश्रुतिकाव्यवित्तं
    सुदर्शनं देवगुरुः प्रसूते ॥११॥
विशुद्धशीलं प्रियगन्धमाल्यं
    नैपुण्यकृत्येष्वभिनिश्चितार्थम् ।
चित्राक्षरालेख्यकृतप्रयत्नं
    बह्वागमार्थं विविधव्ययं च ॥१२॥
तुलाधरस्थो गुरुरात्मवश्यं
    मेधाविनं सद्बहुमित्रपक्षम् ।
कान्तं शुभाचाररतं विनीतं
    प्राज्ञं वणिकसार्थमहत्तरं वा ॥१३॥
विदेशचर्यागतभूरिवित्तं
    सम्पूर्णवेदार्थरतं द्विजं वा ।
सुरातिथीज्यारतिमिष्टरूप-
    माकृष्टभावं कुनितम्बिनीभिः ॥१४॥

Testimonia

11 and 13 equal Vṛddhayavanajātaka 21,6–7.

Apparatus

11a °विशुद्ध° M   11c °चिन्त्यं M, धन K   12c चिता° N, चित्रा K   13 a–b in M:

तुल्ये विचित्रार्थबहुप्रलापं
    गुरूपसंख्यातधियं प्रसूते ।

13a–b मेधावी बहुपुत्र K   13c स्वभा° N, शुभा° M
13d व्यणक्कार्थ° N, वणिक्सार्थ° M, वणिज . . . सार्थ K
14c सुराभिथिक्या° N, सुरातिथीज्या K   14d कुनतेवट्टीभिः N

16,15–18

गुरुर्नरं वृश्चिकमभ्युपेत्य
लुब्धं प्रसूते बहुशत्रुपक्षम्।
सुहृच्छलं द्रोहरतं कुशीलं
प्रवंचकं हिंस्रमनिष्टदारम्॥१५॥
प्रसक्तदोषं गुरुबद्धगार्तं
श्रमातुरं कर्मसु निष्ठुरेषु।
जुगुप्सिताचारमधर्मशीलं
परैरवज्ञातमृणोपतप्तम्॥१६॥
धनुर्धरस्थस्तु गुरुः प्रसूते
प्रियोपचारं श्रुतिधर्मशीलम्।
यज्ञव्रताचार्यमसंशितार्थं
f. 26 दातारमार्यं बहुमित्रपक्षम्॥१७॥
अनेकदिग्देशनिवासशीलं
विविक्ततीर्थायतनारतं च।
शान्तं क्रियारम्भविमुक्तसङ्गं
माङ्गल्यशिक्षाश्रुतिविश्रुतार्थम्॥१८॥

Testimonia

15 and 17 equal Vṛddhayavanajātaka 21,8–9.

Apparatus

15a °भ्युपेत: M 15c सुहृद्बल° M 16a गुरुषद्ध-भागं N, व्याधयार्तं K 16b व्याधयातुरं N निष्ठलेषु N 17b प्रियोपहारं M, प्रियोपकार (°हार var.) K 17c यज्ञाप्रबाच्यरमसर्वितार्थं N, यज्ञव्रताचार्यमसंस्थितं M, आचार्यो व्रतदीक्षायज्ञादीनां स्थिरार्थश्च K 17d नातारमाद्य N, दातारमार्यं M, दाता K 18d मङ्गल्य° N, माण्डलिक K

16, 19–22

गुरुर्मृगे मार्दवमल्पवीर्यं
नीचक्रियाचाररतं दुरन्तम् ।
मूर्खं पराज्ञाकरमर्थहीनं
बहुश्रमक्लेशसहं प्रसूते ॥१९॥
†समान्   दृ †धर्मबाह्यं
स्वबन्धुवात्सल्यदयाविसक्तम् ।
विवादिनं दुर्बलदेहसत्त्वं
प्रवासिनं विग्रहविक्लवं च ॥२०॥
कुम्भे तु जीवः पिशुनं नृशंसं
विद्विष्टशीलं जनयत्यसत्यम् ।
कुशिल्पतोयाश्रयकर्म(ठं) च
मुख्यं गणानामतिनीचचेष्टम् ॥२१॥
लुब्धं स्ववाग्दोषपरं कृतार्थं
व्याध्यात्मकैर्मा(रि)भिरर्दिताङ्गम् ।
गुह्य(मयार्तं च) वियुक्तधर्मं
प्रज्ञादिभिश्चात्मगुणैर्विहीनम् ॥२२॥

Testimonia

19 and 21 equal Vṛddhayavanajātaka 21, 10–11.

Apparatus

19c मूर्द्वं N, मूर्खं KM   20b स्वबन्धुमाङ्गल्य° N,
माङ्गल्यदयाशौचस्वबन्धुवात्सल्यधर्मपरिहीन K
21b विद्विषशीलं M   21c कुशिल्पिनोपाश्रयकर्कशं M,
कुशिल्पतोयाश्रमेषु कर्मरत K   °कर्म(नं) N   21d
मुखं N, मुख्य KM   गताना° N, गण्णाना° M, गण K
22a सु° N, स्व° K   22b बाध्या° N

16, 23 – 24

मीनद्वयस्थो गुरुगौरवर्णं
गुरुर्नरं श्लाघ्यधनं प्रसूते।
हृष्टं स्थिरारम्भमहीनदर्पं
वेदार्थशास्त्रश्रुतिकाव्यवित्तम् ॥२३॥
राज्ञः सुनीतिव्यवहारशिक्षा-
प्रयोगयोगं (ज)गदार्यभूपम्।
ख्यातं वपुष्मन्तमशान्तचेष्टं
स्थितारमक्रोधन⟨वतां⟩ सतां च ॥२४॥
यवनजातके गुरुराशिफलम्॥

Testimonia

23 equals Vṛddhayavanajātaka 21, 12.

Apparatus

23a °गौरवर्त्तं M   23b श्लाघ्न° N, श्लाघ्य° KM   23c दृष्टं N, हृष्टं M   °मनिष्टदर्पं M   24a स्व° N, सु K   24b °दर्मिविधान्न N   24c °मशान्तवेशं N, प्रशान्तचेष्ट K

17,1-4

मेषे ऽर्कसूनुर्जनयत्यनार्यं
    कुबेशमाधिव्यसनश्रमार्तम् ।
प्रपंचकं निष्ठुरदुष्टबाक्यं
    बिगर्हितं निर्धनमिष्टबैरम् ॥१॥
असूयकं नैकृतिकं नृशंसं
    सुरोषणं पापकथाभिरामम् ।
जघन्यकर्माऽपि लब्धकोशं
    स्वबन्धुपक्षक्षयकारिणं च ॥२॥
बहुक्रियासङ्गतमर्थहीनं
    वृषे ऽर्कसूनुर्जनयेन्मनुष्यम् ।
असत्यकर्माणमयुक्तवाक्यं
    वृद्धाङ्गनानां हृदयानुगं च ॥३॥
कुवृत्तियोषिद्व्यसनापवृत्तं
    बहुव्रतं नैकृतिकास्पदं च ।
पराङ्गनाप्रेष्यमनात्मवन्तं
    †समावृशायुक्तनि(तम्बवृ)त्तिम् † ॥४॥

Testimonia

With this chapter compare Sārāvalī 29. 1 and 3 equal Vṛddhayavanajātaka 23,1-2.

Apparatus

1a °नार्थं N, °नार्यं M    1c गतश्रियं M, प्रचण्ड (प्रपंच var.) शील K    1d बिग्राहृत N, विगर्हित KM    2a नृकृतिकं N, नैकृतिक K    2c जयन्यकस्मा° N, जघन्यकर्मा K    °दोषं N    2d °वाड़िणं N, corr. Ingalls    3a °सङ्गति° M, सङ्गत K    3c अनर्थ° M, न सत्य K    3d हृदयानुरागं M

17,5-8

f. 26v क्रमागतोऽर्किर्मिथु[ने] प्रसूते
श्रमातरं [बो]हृणबन्धनार्तम् ।
शठप्रयोगं छलकूटमन्त्रं
दुष्टक्रियं दाम्भिकमन्त्रिणं च ॥५॥
कुशिल्पिनं शाठ्यगुणेष्वयोग्यं
ह्रीसत्त्वबाह्यं † श्यिनं च † ।
असत्सुहृन्मित्रविहारसक्तं
सदैव पङ्कह्यरतिप्रियं वा ॥६॥
शनैश्चरः कर्कटके प्रसूते
नरं दरिद्रं सुभगाभिमानम् ।
[सदा] रुगा[र्तं] जननीवियुक्तं
मृदुं विशिष्टप्रियमातुरं च ॥७॥
स्वबन्धुवृद्धप्रतिकूलकृत्यं
स्वधर्मदत्त्वं परबाधकं च ।
पराङ्गनाभोगविवर्धितं प्राक्
पश्चात् स्वपत्नीसुभगं हृतार्थम् ॥८॥

Testimonia

5 and 7 equal Vṛddhayavanajātaka 23,3-4.

Apparatus

5a क्रमाद्गतो M 5c °कूटमेव M 5d दीप्तिकरान्त्रगं N, दाम्भिकमन्त्रिणं M, दाम्भिको ऽनुमन्त्री K 6a शाठ्य K 6b बाह्यक्रीडानुग K 7c सदा M, बाल्ये K 7d विशिष्टक्रियमाचरं M, विशिष्टनिरत . . . आतुर K 8b परिबाधकं N, परबाधक K 8d केश्चात्स्वयतैरुपेते २ृतार्थम् N

17,9–12

सिंहाश्रितो ऽर्किर्जनयत्यशीलं
विगर्हिताचारगुणं मनुष्यम्।
प्रवृद्धदोषं लिपिपाठ्यवाक्ये
क्रियासु नीचासु सदाभियुक्तम् ॥९॥
मनोरथैर्भ्रान्तमनाहितार्थ-
मुत्सृष्टदारं भृतिजीविनं च।
स्वपक्षमुत्सृज्य सदाविसक्तं
सदाध्वभाराश्रमजीर्णदेहम् ॥१०॥
शनैश्चरः षष्ठमुपेत्य राशिं
नपुंसकाकारतनुं प्रसूते।
परान्नवेश्यारतमस्वतन्त्रं
शठं शिशुस्त्रीजनदूषकं च ॥११॥
स्वकृत्यचेष्टालसमश्रुतार्थं
परोपकारिष्वशठं क्रियासु।
कृतश्रमं शिल्पकलाविधाने-
ष्वनिश्चितावेक्षितकारिणं च ॥१२॥

Testimonia

9 and 11 equal Vṛddhayavanajātaka 23,5–6.

Apparatus

9a सिंहस्थितो M 9c °दोषं M, रोष KN निम्नलोकवाक्यं M, लिपिपाठ्यपर K 9d सदाभिसक्तं M, सुदाविसक्तं N (cf. 10c), सुदाहीन K 10a मनोरथोंभ्रा° N, मनोरथैर्दा° K 10b भृतजीवनं N, भृतिजीवी K 10c °मुत्सृक्य N, रहित K 10d सदाध्वभारश्रम° N, भाराध्वश्रम K 11c °वेश्याभिरतं गतस्वं M, वेश्यारतो ऽल्पमन्त्र K 11d °दूषणं M, दूषक K 12c शिल्पकथा K °विधारे° N

17, 13–18

तुलाधरस्थस्तु शनिः प्रधान-
  मुत्पादयत्यर्थपरं मनुष्यम्।
धनार्थदेशाटनलब्धमानं
  वपुःप्रकर्षोपकृतास्पदं च ॥१३॥
सभागणज्येष्ठमुदारवाक्यं
  वृद्धक्षितीशं क्षितिगोपमेव।
स्वपक्षगुप्तिस्थिरकोशमू⟨लं
  नटी⟩विटस्त्रीकुलटाभिरामम् ॥१४॥
सौरोऽष्टमक्षेत्रगतो मनुष्यं
  विद्वेषवैषम्यरतं प्रसूते।
[धर्मादपेतं विषशस्त्रदग्धं
  प्रचण्डकोपं निरयप्रपंचम्]॥१५॥
॥१६॥
[धनुर्धरस्थो मृदुमल्पवाक्यं
  स्वधर्मकृत्याभिरतं प्रसूते]।
श्रुतार्थबोधव्यवहारशिक्षा-
  क्रियाभिधानक्रमनल्पसंचम् ॥१७॥
परात्मजानां विविधैरुदारै-
  र्गुणैर्भुवि ख्यातमवाप्तमानम्।
f. 27 प्र⟨ाक्⟩ हृष्टणप्रत्ययसाधुशीलै-
  रन्त्ये वयस्यागमितश्रियं च ॥१८॥

Testimonia

13, 15, and 17 equal Vṛddhayavanajātaka 23, 7–9.

Apparatus

13a °स्त्वसितः M  13c सुराष्ट्रदेशा° M  विदेशाटनाप्त-मानधन K  14b °मवा N  14d कुलटानटीविट-स्त्रीरमण K  15a शनैश्चरो वृश्चिकगो M  15c–17b no space in N  17c °वाक्य° M, °बोध्य° KN  17d °भिधीय° M, °भान° N, अभिधा K  °सौख्यं M, संच K  18c प्रहृष्ट° N  18d °रन्तै N, अन्त्ये K

17, 19–22

स्थितोऽर्कसूनुर्जनयेन्मृगास्ये
    नरं स्ववंशोद्भवपूज्यमग्र्यम् ।
क्रियाकथाचार्यमनेकशिल्पं
    प्रवासिनं वृन्दपुरस्कृतं च ॥१९॥
प्रभुं परक्षेत्रगृहाङ्गनानां
    रतं रतिस्नानविभू(ष)णेषु ।
प्रदानशौर्याभिजनोपचार-
    श्रुतिव्ययस्थानगुणैः स़मे़तम् ॥२०॥
शनैश्चरः कुम्भधरं प्रपन्नः
    कुर्यान्न(रं) बहुनृतं महान्तम् ।
सदा मदस्त्रीव्यसनप्रसक्तं
    कुसौहृदं धूर्तकवंचनं वा ॥२१॥
बहुक्रियारम्भपटुं दृढार्यं
    पराङ्गनार्थद्रविणारतिं च ।
श्रुतिस्मृतिज्ञानकथासु बाह्यं
    वपुस्यृजौ कर्कशभाषिणं च ॥२२॥

Testimonia

19 and 21 equal Vṛddhayavanajātaka 23, 10–11.

Apparatus

19d प्रवशिनं N, प्रवासशील K, प्रवासिनं M    20d °गुय़स़मे़द N    21b सत्यधानं सुवाक्यं M, बहुनृतः सुमहान् K    21c–d in M:

आरोग्यकायं वरयानसक्तं
    शूरं नृपैः पूजितमल्पपापं ।

21c–d मद्यस्त्रीव्यसनसंप्रसक्त ... धूर्त (धूर्तक var.) वंचनशील ... कुसौहृद K    22b पराङ्गपान्त° N, पराङ्गनार्थ K    °द्रविनं गतं N    22d वपुसृज्ञा N कर्कशभाषिणं N, सुकर्कशभाषी K

17, 23–27

शनैश्चरो मीनसुगे प्रसूते
स्वबन्धुसम्बन्धिसुहृद्दरिद्रम्।
प्रशान्तमभ्यर्चितमिष्टयत्नं
विद्यासु शिल्पेष्वभिजातयत्नम्॥२३॥
सुनीतधर्मव्यवहारसत्यं
रत्नप्रकारादिपरीक्षकं च।
विनीतमत्यन्तगुणोपपन्नं
विवर्धितार्थं विपदं च पश्चात्॥२४॥
इति ग्रहस्थानगुणस्वभावै-
स्तदीशकालादिबलात्मकैश्च।
कुर्वन्ति नानागुणलिङ्गरूपान्
नरान् विचित्रक्रमवृत्तिभागान्॥२५॥
यथैव राशिग्रहसन्निवेशै-
र्विदर्शिता क्लृप्तिरियं ग्रहाणाम्।
तथैव भागांशकसंस्थितेषु
स्वभावज्ञो योगविधिर्विधार्यः॥२६॥
केन्द्रे स्ववर्गांशलवोपगस्तु
ग्रहो यथोद्दिष्टफलप्रदः स्यात्।
अन्योन्यगास्तुङ्गकभागभेद-
स्थिता विपर्यस्तफलाकुलाः स्युः॥२७॥
यवनजातके ग्रहराशिस्वभावफलम्॥

Testimonia
23 equals Vṛddhayavanajātaka 23, 12.

Apparatus
23c प्रशान्तसत्यान्वित M   23d °भिजातशिल्पं M, कृतयत्न K   24b रत्नाप्रकारा° N   24d विसुदं N, पश्चाद्ग्राबास्पदं K   26b क्लिप्ति° N   27c °गस्तुङ्ग° N

18, 1–5

अतः परं राशिषु चन्द्रयोगात्
    वक्ष्ये नराणां प्रकृतिस्वभावान्।
कुर्याच्छशी यानितरेतरेभ्यो
    बलाधिकक्षेत्रगतो बलीयान्॥१॥
मेषे तु चन्द्रः पुरुषं प्रसूते
f. 27v    बलान्वितं <शू>रमुदारसत्त्वम्।
ख्यातं बहुस्त्रीसुतभृत्यबन्धुं
    प्रभाक्षणं त्यागिनमूर्जितं च॥२॥
क्षिप्रोल्बणं क्रोधनमुग्रबाहुं
    चलप्रसादं चपलस्वभावम्।
मार्गाटनं स्त्रीप्रणयं प्रगल्भं
    नष्टानुजं पूर्वजबन्धुभीरुम्॥३॥
क्षयोदयं प्राप्तधनं सुवेशं
    यशस्यमाढ्यं स्फुटघुष्टवाक्यम्।
नृपप्रियं दुःप्रसहं प्रचण्डं
    दक्षं क्रियास्वस्थिरमित्रबन्धुम्॥४॥
गौरं महोजस्विनमुग्ररूपं
    मेषाकृतिं वृत्तशिरोमुखाक्षम्।
रोमांचिताङ्गं कृशगण्डपादं
    प्रस्रस्तकेशं विषमाक्षिदन्तम्॥५॥

Testimonia

2 equals Vṛddhayavanajātaka 18, 1.

Apparatus

1c योनिबरेतरेभ्यो N  1d बलाधिके क्षेत्रगते N
2b शूरं सुदारसत्त्वबलैरुपेतं M  2c °वर्गं M  2d
प्रभाविणं M  4a प्रायधनं N  5b प्रायशिरो-
मुखाक्षं N, वृत्तताम्रदृग् V, वर्तुलाकारनेत्र K  5c
°पादां N

18,6–10

अव्यङ्गलं निर्भयमाजिहृष्टं
स्त्रीष्वप्रशान्तं कुनखाङ्गुलिं वा।
दन्ताद्विरुक्छोणितमूत्रकृच्छ्रा-
विषाग्निवातक्षतकर्षिताङ्गम्॥६॥
पश्यन् धराजो नृपमुग्रदण्डं
रविश्च जीवो बहुभृत्यवित्तम्।
बुधो बुधं दैत्यगुरुः समृद्धं
सौरो दरिद्रं मनुजं प्रसूते॥७॥ <मेषः॥>
वृषे शशी गर्वितमिष्टदारं
स्मिताल्पभाषं सुभगं प्रसूते।
तेजस्विनं बह्वशनं सुवेशं
महाजनद्रव्यपरिग्रहं च॥८॥
स्थिरक्रियारम्भधनस्वभावं
विख्यातशब्दं दृढमित्रपक्षम्।
प्रदानशीलं गुरुदैवतज्ञं
शुश्रूषकं साधुजनानुकूलम्॥९॥
शुचिं क्षमासत्यरतं कृतज्ञं
मनस्विनं मन्दविलासगन्धम्।
शूरं बहुक्लेशसहं रतिज्ञं
नीचाङ्गनासङ्गमलोलुपं च॥१०॥

Testimonia

8 equals Vṛddhayavanajātaka 18,2.

Apparatus

6a अद्ध्यङ्गुलं N ॰जिह्रीष्टं N 6d ॰कार्शिताङ्गं N 7b रविश्य N ॰वित्यं N, धन K 7c समुर्द्धं N 10b ॰गं च N 10c सूत्रं N 10d नीचङ्गनासङ्गनासङ्गम-लोलपं N

18, 11–15

नृपप्रियं प्रा(र्थि)तपुत्रदारं
लब्धां धनारक्षणसङ्ग्रहेप्सुम् ।
प्रत्येकपीनोन्नतवृ(त्त)कायं
गम्भीरनादं कलपूर्वकं च ॥११॥
वृषाकृतिश्रोत्रपटान्वितवक्त्रं
श्यामं घनाकुञ्चितमूर्धजं च ।
नीचक्रियाच्छन्दविहारचेष्टं
भयप्रदं श्रेष्ठविवादिनं च ॥१२॥
पश्यन् रविर्धर्मधनं समृद्धं
गुरुर्बुधो ऽनेकमनोभिरामम् ।
शुक्रो नृपं तस्करमप्यमारः
f. 28 सूते पर(राणां)पतिमर्कसूनुः ॥१३॥ वृषः ॥
चन्द्रस्तृतीये मधुराभिधानं
काव्यार्थधीरं निपुणं प्रसूते ।
शूरं नरं वाग्मिनमाप्तकीर्तिं
मेधाविनं सद्बुहृमित्रमार्यम् ॥१४॥
विद्यानशास्त्रश्रुतिकाव्यशिल्प-
गान्धर्वसङ्गीतकलाभिरामम् ।
दाक्षिण्यसौहार्दविलासहास्य-
सौभाग्यमातुर्यगुणैरुपेतम् ॥१५॥

Testimonia
14 equals Vṛddhayavanajātaka 18,3.

Apparatus
11b धनालक्षण° N 11d कुलपूर्बुरं N 12d भयत्रणसेष्टविवादनं N 13b ल्मेकमनो° N 14b कार्याभिचारं M 14d °मार्यां N 15b °गान्धर्वसङ्गीतकाला° N

18, 16–20

स्त्रीवल्लभं कामवशस्वभावं
 कान्तं समव्यायतचारुदेहम् ।
स्निग्धायताक्षं रुचिरौष्ठदन्तं
 विहारिणं पुंसि रतिप्रियं च ॥१६॥
स्वाचारधर्मप्रचुरं प्रगल्भं
 सन्धानमन्त्रे (र)णपण्डितं च ।
देवद्विजेज्याभिनिविष्टधर्मं
 संसर्गतुल्यप्रकृतिं परेषु ॥१७॥
मिष्टान्नपानं प्रियगन्धमाल्यं
 सेवाविधिज्ञं कृतकोपचारम् ।
भोदस्य तु बाह्यमनुप्रभावं
 रुग्भोगिनं ख्यातगुणात्मकं च ॥१८॥
पश्यन् रविर्निधनमर्कजश्च
 स्तेनं कुजः पार्थिवमिन्दुसूनुः ।
शुक्रः कलावादितगीतवित्तं
 पूज्यं गुरुर्ध्यानरतं प्रसूते ॥१९॥ मिथुनः ॥
तिष्ठञ्छशी कर्किणि काव्यधीरं
 सुमेधसं वाग्वि[शदं] प्रसूते ।
प्रियप्रदानं प्रियदर्शनं च
 प्राज्ञं बहुस्थानविकीर्णबुद्धिम् ॥२०॥

Testimonia
20 equals Vṛddhayavanajātaka 18, 4.

Apparatus
16c रुचिरोष्ठदन्तं N 17a °धर्मपचरं प्रचुरप्रगल्भं N 17b no space in N 17c दैविझतोत्याभि° N 17d संसंगतुल्य° N 18a मिष्टान्नदानं N 18c °ग्राह्य° N 20a तिष्ठच्छशी N कार्यधीरं N 20b वाग्मि × × N 20d प्राज्ञां N

18,21-25

बहुश्रमक्लेशसहं सहिष्णुं
    दुर्मर्षणं वाणिषु लब्धमानम् ।
देवद्विजेज्याभिरतं विनीतं
    मनस्विनं स्त्रीसुभगं सुवेशम् ॥२१॥
मन्दांशकं संचयदेहयोश्च
    व्ययोदयाभ्यां बहुशः परीतम् ।
स्वमातृपक्षप्रियमिष्टबन्धुं
    प्रजासुहृद्भृत्यपरस्कृतं च ॥२२॥
स्त्रीक्रोधवश्यं पृथुपीनपादं
    सौहार्दमानप्रणयादरज्ञम् ।
गान्धर्वगीतप्रियमिष्टहास्यं
    जलाभिरामं दयितप्रजं च ॥२३॥
उव्यक्तमृद्धं जलसज्जनेप्सं
    प्रवासिनं धीरम(नैक)दारम् ।
नैकत्र वासाभिरतं य(श)स्कं
    कृतेष्वनेकेष्वभिनिश्चितं च ॥२४॥
सूर्योऽधनं रोगिनमर्कसूनु-
    स्तीक्ष्णं कुलस्यान्तकरं च भौमः ।
f. 28v गुरुर्नृपं ख्यातगुणं च शुक्रः
    पश्यन् बुधः कृत्यकरं प्रसूते ॥२५॥⟨कर्कटः॥⟩

Apparatus

21b दुर्मर्षणम्माणिषु N    21d स्ववेषं N    22a चन्द्राङ्गव N    22d °सुहृत्भृत्य° N    24a °सज्जिनेप्सुं N    25d कृत्यकरां N

18, 26–31

सिंहे शशी सत्त्वगुणोपपन्नं
    नृपं प्रसूते नृपलब्धमानम् ।
सिंहोन्नतांसं पृथुपीनकायं
    मांसप्रियं दुःप्रसहं क्षुधालुम् ॥२६॥
मातृप्रियं चण्डमदीर्घरोषं
    मन्दात्मजं त्यागिनमल्पहास्यम् ।
स्थिरक्रियार(म्भा)धानं मनुष्य-
    मग्नस्वभावं दृढसौहृदं च ॥२७॥
गम्भीरधीरप्रकृतिं नयज्ञं
    क्षमालसं धर्मसहं विघुष्टम् ।
दक्षं नदीशैलवनाभिरामं
    वाङ्निष्ठुरं बहुपवादिनं च ॥२८॥
विक्रान्तमल्पप्रणयोपचारं
    नारीषु संप्र(त्य)यसत्त्वयुक्तम् ।
अभिश्रुतार्थिं निपुणं कृतज्ञं
    शूरं महाभोगपरिग्रहं च ॥२९॥
परप्रहर्तारमदुःखशील-
    मुद्धृत्य दर्पं प्रणयानुकूलम् ।
द्युतिस्वभावान्वितमृद्वकोशं
    हृद्यं न रुक्त्वक्छ्रमपीडितं च ॥३०॥
सूर्यो नृपं मन्त्रिणमिन्दुसूरि-
    हिंस्रं कुजः स्फीतधनं च शुक्रः ।
विद्वांसमृद्धं च बुधो निरीक्ष्य
    सौरस्तु मूर्खं कृपणं प्रसूते ॥३१॥ सिंहः ॥

Testimonia

26 equals Vṛddhayavanajātaka 18,5.

Apparatus

26a सत्त्वबलो° M   26b नरं M   26c सिंहाननास्यं M   पृष्टपीन° N   28d वाक्नष्ठुरं N   30d रुत्याच्छ्रम° N, corr. Ingalls

18,32–38

कन्यां समाश्रित्य शशी प्रसूते
  नरं सुवाक्यं मधुरं विनीतम्।
स्त्रीलालसं वै सुकुमारमूर्तिं
  सुमेधसं सर्वजनाभिरामम्॥३२॥
सङ्गीतिगान्धर्वविलासहास्य-
  दाक्षिण्यदानप्रणयादरज्ञम्।
शस्त्रास्त्रबाह्यं समराध्वभीरुं
  पूज्यं बहुव्याजमदीर्घरोषम्॥३३॥
॥३४–३६c॥

  मालस्यसंसक्तमपेक्षकं च॥३६॥
बुधोऽवनीशं भृगुजो धनाढ्यं
  पुरोत्तमं देवगुरुः प्रसूते।
सूर्यो विदेशाट(न)मार्किर्व्यङ्गं
  नृशंसमारो बहुपित्तरोगम्॥३७॥ कन्या॥
तुलाधरस्थो जनयत्युदारं
  नरं शशी वाग्मिनमर्थयुक्तम्।
यशस्विनं कर्मठमर्थशीलं
  शुचिं विनीतं सुभगं सुरूपम्॥३८॥

Testimonia

32 and 38 equal Vṛddhayavanajātaka 18,6–7.

Apparatus

32c न N, वै M °कीर्तिं M 32d साधुजना° M 33c सस्त्रांश° N वरमध्व° N 34a–36c: no space in N 36d °पेक्षिकं N 37b पुरोपमं N 37c विदेशा-न×मा° N 38b शशी सदा वाङ्मतिसत्त्वयुक्तं M 38c मनस्विनं सात्त्विकमन्त्रशीलं M 38d स्वरूपं N

18, 39–43

सुरोपहारं स्वजनोपहारं
साधुद्विजाभ्यर्चनदानशीलम्।
रत्नादिपण्यक्रयविक्रयज्ञं
f. 29 स्थिरस्वभावं ⟨विट⟩|चंचलं च ॥३९॥
विलेपनाच्छादनभूषणज्ञं
विचित्रवेशं त्वरितोग्ररोषम्।
सुहृत्स्वदारं स्वजनोपपन्नं
समृद्धमत्यल्पसुखोपभोगम् ॥४०॥
संवर्द्धनोपायपटुं धनानां
प्रचिन्तकं कृत्यविनिश्चयज्ञम्।
पीनाततापाङ्गसुपल्लवार्तं
स्फुटाग्रघोणं विषमाङ्गभावम् ॥४१॥
आत्मप्रयत्नार्जितवित्तभोगं
स्त्रीभागिनं धर्मरतं श्रुतज्ञम्।
आपन्ननाथं निपुणं कृतज्ञं
स्त्रीणामभीष्टं दयितं सतां च ॥४२॥
जीवो वणिक्छ्रेष्ठिनमार्किशुक्रौ
नृपं बलस्थौ कु(रु)तः ⟨स⟩मृद्धम्।
नीचात्ममर्कः शशिजः सुवाक्यं
पश्यन् कुजो निर्धनबन्धुदारम् ॥४३॥ तुला ॥

Apparatus

40a–b °भूषणश्रकविचित्र° N   40c स्वहृत्स्वदारं N   40d °मध्यत्प° N   41a सम्पद्धनो° N   41c पानानत्रीतापाङ्ग° N   °ल्लवाह्नं N   43b ककु(रु)तम्मृद्धः N

18,44–48

निशाकरो वृश्चिकगः स[मृ]द्धं
शूरं नरं साहसिकं प्रसूते ।
ख्यातं सतामीश्वरलब्धमानं
क्रूरं पराध्यातरुचिं प्रचण्डम् ॥४४॥
मेधाविनं तीक्ष्णममर्षमीर्ष्यं
स्थिरं क्रियानिश्चितमात्मवश्यम् ।
शास्त्रार्थशिक्षाश्रुतिशिल्पसेवा-
धातुक्रियामन्त्रचिकित्सितज्ञम् ॥४५॥
बाल्ये रुगार्तं क्षतसंचयं च
प्रणष्टमातापितृपूर्वजं वा ।
स्तेयाभ्यसूयानृतशाठ्यदम्भ-
पारुष्यरोषाद्यविशुद्धदेहम् ॥४६॥
परोपजीव्यं चरितेषु मूढं
लब्धं परस्त्रीप्रणयप्रियं च ।
विषादिनं वृश्चिकतुल्यमूर्तिं
विशालपीनोपचिताङ्गयष्टिम् ॥४७॥
वपुर्धरं कृच्छ्रसहं यशस्कं
कृत्यप्रपंचं व्यवसायिनं च ।
क्षणप्रदानं क्षतकर्षिताङ्गं
गुणप्रधानाश्रयपूजकं च ॥४८॥

Testimonia

44 equals Vṛddhayavanajātaka 18,8.

Apparatus

44a सु x द्धं N  44c मनसीचर° N, सतामीश्वर° M
45c शास्त्रास्त्रशिक्षा° N  47c वृश्चिक° N  48b
कृत्यप्रपञ्चाद्धवसायिनं N

18,49-53

भौमो नृपं निर्धनमार्तमार्कि-
रर्कः समृद्धं भृगुसूनुराढ्यम्।
गुरुः स्वधर्मप्रियमैन्दवस्तु
दुष्टप्रजं दुःप्रकृतिं च सूते॥४९॥⟨वृश्चिकः॥⟩
धनुर्धरस्थो नृपलब्धमानं
चन्द्रः प्रसूते नरमुच्चवृत्तम्।
शूरं शुचिं सत्यपरं विनीतं
श्रीमन्तमाढ्यं गुरुदेवभक्तम्॥५०॥
प्रख्यातबन्धुवृद्धिगुणं यशस्कं
विक्रान्तकर्माणमृजुं कृतज्ञम्।
f. 29v स्वाचारसत्कीर्तिं स्थितिसत्त्वमेधा-
नैपुण्यमाङ्गल्यगुणैरुपेतम्॥५१॥
काव्यक्रियाशिल्पकथार्थशिक्षा-
यज्ञव्रतेज्यादिविधिप्रकृष्टम्।
धर्मप्रियं त्यागिनमप्रधृष्यं
स्वच्छन्दचेष्टं परदुःसहं च॥५२॥
माधुर्यवन्तं बलिनं कृपालुं
रक्षाप्रियं मानिनमुग्ररोषम्।
हयाकृतिं पीनबृहच्छिरं ⟨च⟩
ि–णामिष्टवेशाम्॥५३॥

Testimonia

50 equal Vṛddhayavanajātaka 18,9.

Apparatus

49a-b °मार्किः अर्कः N 49c °मैन्द्रवस्तु N 50b °वृत्तिं M 51a °बन्धुद्धिगुणं N 51c स्वोच्चास्य-कीर्तिं N 51d नैपुण्यवात्सल्य° N 52a °कथास्त्र° N 52b °यज्ञाव्रतेज्या° N 52d स्वच्छन्द्र° N 53a माधुर्यवश्यं N कृपालं N 53c °बृहिच्छर N

18,54-59

विमुक्तदारात्मजमुग्रहासं
पानप्रियं सङ्ग्रहसक्तचित्तम् ।
सत्त्वानुयोगक्षमदीर्णवाक्यं
संवेगशीलं दयिताङ्गनं च ॥५४॥
जीवो ऽवनीशं बहुवित्तशक्तिं
भृगुर्बुधो ज्ञानिनमग्र्यचेष्टम् ।
रविर्विनीतं ज(न)येद्धि हृष्टं
पापं कुजो ऽर्किर्धनिवर्धितं च ॥५५॥ धनुः ॥
तिष्ठन् प्रसूते मकरे शशाङ्को
नरं वनारण्यजलाभिरामम् ।
सङ्गीतहास्याभिरतं सुवेशं
ख्यातं परस्त्रीरतिलोलु(पं) च ॥५६॥
(स)द्धर्मशिल्पश्रुतिगन्धमाल्य-
स्नानोपभोगप्रियमूर्जितं च ।
प्रवासशीलं नटवाद्यसौख्यं
सर्वत्र संजातकुतूहलं च ॥५७॥
चलस्वभावं कितवप्रलापं
प्रभूतमित्रात्मजभृत्यवर्गम् ।
बहुस्थिरद्रव्यमदीर्घरोषं
यशोर्थिनं बन्धुधनप्रियं च ॥५८॥
शीतालुमार्याभिमतं सुमूर्तिं
रणाभिलाषं स्मितहृष्टवाक्यम् ।
मान्यं वपुःसत्त्वबलैरुदारैः
कान्तं सहिष्णुं श्रुतिपण्डितं च ॥५९॥

Testimonia

56 equals Vṛddhayavanajātaka 18,10.

Apparatus

54b पानाप्रियं सङ्ग्रहसिद्ध° N  54c सत्त्वानयोग° N
54d सम्मेग° N  55d र्की धन्व° N  57a (स)धर्मै°
N  57d संज्ञात° N  59b °वक्यं N  59d सहिष्ट N

18,60–64

हृद्रोगशीतज्वरवातमूर्छा-
कामक्षयायामरुगर्दनाद्यैः ।
तप्तं भूयो व्याधिभिरार्दितं च
रुग्व्याधिभिः श<ीतकृ>तैर्व्रणैश्च ॥६०॥
भौमो नृपं तत्प्रतितुल्यमार्कि-
राढ्यं गुरुर्वाग्मिनमिन्दुसूनुः ।
मान्यं धनाढ्यं भृगुसूनुरीड्यं-
मर्कस्तु निःस्वं विषमं प्रसूते ॥६१॥ मकरः ॥
कुम्भे शशी रोषणमल्पसौख्यं
सूते कृशं निर्धनमस्वतन्त्रम् ।
क्षीणार्जितार्थं परदारभार्यं
f. 30 परोद्भवानां मि<शनं> | कुवेशम् ॥६२॥
नीचाङ्गनाद्यूतपराभ्यसूया-
पैशुन्यमायाशवयानसक्तम् ।
बहुक्रियारम्भमज्ञातनाथं
प्रद्विष्टबन्धुं गुरुवंचकं च ॥६३॥
मेधाविनं धर्मफलापवृत्तं
जिह्मस्वभावं निभृतस्थितं च ।
लोकोपचारं प्रणयोपबाह्य-
मवांछितोच्छिन्नसुहृज्जनं वा ॥६४॥

Testimonia

62a-b and 63c-d equal Vṛddhayavanajātaka 18,11.

Apparatus

60b °क्षयं वासभगत्यैराद्यैः N   60c भूप N   °राधिविष्टं N   60d रुक्षाधिभिः शा xx वैप्रणैश्च N   61b आढयं N   62a रोषिण° M   62b दुर्भरमल्पवित्तं M   62d प्रि xx N   63a °द्यूक° N   63b °शवबान° N   63c °रम्भनजातनाथं N, °रम्भमज्ञातमिष्टं M   64b °स्थिरं N   64d °सन्धान्छितोच्छिन्न° N

18, 65–69

विषादिनं वत्सलसंप्रदायं
    कृतघ्नमुद्विग्नमनुत्सहिष्णुम् ।
क्षुद्रप्रयत्नं मृदुमन्दवाक्य-
    मुत्कर्णघोणं नृपनिन्दितं च ॥६५॥
हृद्रोगवातामयगुह्यरोगैः
    प्रपीडितं क्षुत्क्रमलब्धदुःखम् ।
रिपुप्रतिस्पर्धिनिनित्तनाशं
    मोहादिशोकोपहतं च नित्यम् ॥६६॥
सूर्यो रुगध्वान्तमनार्यदारं
    भृगुः कुजस्त्वर्थहरं परेषाम् ।
पश्यन् प्रसूते नृपमाढ्यमार्कि-
    र्जीवो महान्तं शशिनन्दनश्च ॥६७॥ कुम्भः ॥
मीनद्वये प्रत्ययसत्त्वसत्य-
    बुद्धिस्थितिख्यातिबलैरुपेतम् ।
ह्रीदानदाक्षिण्यपरं विनीतं
    नरं शशी वाग्मधुरं प्रसूते ॥६८॥
विज्ञानशास्त्रप्रचुरं प्रगल्भं
    विद्वद्गुरुत्वं सुगताभिरामम् ।
सुरद्विजेज्यारतिमिष्टदारं
    श्रीकान्तिसौभाग्यवपुर्धरं च ॥६९॥

Testimonia

68 equals Vṛddhayavanajātaka 18, 12.

Apparatus

65a °संप्रकार्यं N    65b °मनःसहिष्णुं N    65d नृप-विन्दितं N    66a °रोगं N    66b क्षुद्र° N    66c °स्पर्द्धिन° N    67b °स्त्यर्थहरं N    67d °नन्दनं च N    68a प्रत्ययितं सुसत्यं M    68b पाण्डित्यसामर्थ्यवरार्थसक्तं M    °ख्यात° N    68d वाक्मधुरं N    69b सुगताभि-भिरतं N, corr. to सुगताभिरामं N

18,70–75

मृष्टान्नपानं प्रियगन्धमाल्यं
　　व्यायामगान्धर्वकलाविधिज्ञम् ।
हिरण्यभूम्यौर्णकगोगृहस्त्री-
　　प्रभुं सुवेशं नृपसत्कृतं च ॥७०॥
पुराणवैद्यव्रतयज्ञशिल्पं
　　नदीसमुद्रादिप्रदिष्टचेष्टम् ।
क्रियाविधिज्ञं व्यवहारनीति-
　　संख्याननैपुण्यविनिर्णयेषु ॥७१॥
शुचिप्रियं शीघ्रगमल्पनिद्रं
　　सुदक्षमीषद्विरलद्विजं च ।
दयान्वितं बहुरिमित्रभार्य-
　　मद्युत्कमक्लीवमर्षणं च ॥७२॥
गुरुर्नृपमीश्वरपण्डितं च
　　शुक्रो बुधो हास्यकलाविधिज्ञम् ।
पापं कुजो ऽर्किर्दिनकृत् प्रचण्डं
　　पश्यन् प्रसूते बहुविग्रहं च ॥७३॥<मीनः॥>
f. 30v इत्येष उक्ताः प्रकृतिस्वभावाः
　　क्षेत्रेषु चन्द्रस्य बलान्नराणाम् ।
स्वस्वामिवीर्येक्षणयोगतस्तु
　　राशिर्यथोक्तं फलमादधाति ॥७४॥
स्वक्षेत्रमित्रोपचयोच्चगेषु
　　प्रवृद्धवीर्येक्षणसंप्रयोगैः ।
भवन्त्यनिष्टैरविमिश्रितानि
　　क्षेत्राणि जन्मस्वविगर्हितानि ॥७५॥

Apparatus

70c °भूम्यौरगगो° N　71a °शिल्पा N　72a शीघ्रगमं° N　72b मद्वक्षमीष° N

18,76-77

होरागृहं जन्मविधानमुक्तं
    नानागुणात्मप्रभवैः स्वभावम्।
प्राग्दर्शनाद्यैस्तु बलैर्यथा स्यु-
    स्तैस्तद्विधैरिव फलैर्विधार्याः॥७६॥
होरापतावप्यबले सदैव
    होरागुणान् स्वा(न्) लभते प्रसूतः।
आत्मेति भावेषु ततश्च नित्यं
    होरा ततोऽस्याः गुणत स्वभावान्॥७७॥
यवनजातके चन्द्रराशिग्र(ह)दृष्टिफलम्॥

Apparatus

76a होराष्टमं N    76c प्रोद्वर्षनाद्यैस्तु N    77a सद्धोरे N    col. °राशिगदृष्टि° N

19,1–5

होरागते प्राप्तबले तु मेषे
प्रचण्डकोपः पुरुषः प्रसूतः।
लुब्धो विदेशानुचरोऽल्पशीलः
कृशोऽल्पसौख्यः स्खलिताभिधायी ॥१॥
पित्तानिलाद्यामयतप्तदेहः
क्रियापटु(र्लोभा)नदृष्टधर्मः।
ईर्ष्युः परस्वेषु विकर्षकारी
भीरुर्विषादी चपलोऽल्पमेधाः ॥२॥
पित्रा जनन्या सहजेन वापि
वियुज्यते शीघ्रगतिः प्रभोक्ता।
मन्दात्मजः स्वैः सहजैः सुहृद्भि-
र्विरुद्धशीलो विविधार्थभाक् च ॥३॥
ख्यातः स्थिरस्फीतधनः कुबन्धुः
सद्वृत्तशीलः कुनखोऽजितारिः।
व्यङ्गां विशीलां कुकुलोद्गतां वा
प्राप्नोति भार्यां (स्व)जनैषिणीं वा ॥४॥
कुकर्मसंसिद्धिविवर्धितार्थः
व्ययापकर्षैरनुभूतसौख्यः।
रक्ताग्निशस्त्रैस्तनुपातनाद्वा
मृयेत रोगैर्विषपित्तजैर्वा ॥५॥
यवनजातके मेषलग्नफलम् ॥

Testimonia

With this chapter compare Sārāvalī 47.

Apparatus

1b प्रचण्डरोष K प्रसूते N 2a पित्तानिलोष्ठरोगैर-
भितप्ततनु K 2b क्रियापटु××दृष्टधर्मः N,
क्रियापटुर्भीरु . . . धर्मपर K 2c परस्वेष्ववि-
कृष्टकारी N, परार्थनाशकर K 4a स्थित° N 4b
सत्वृत्त° N 4c °गतां N, °द्गतां K 5d सृष्टेत N;
cf. 10d, 30d, 55d, and 60d

19, 6–10

वृषे ऽश्रमक्लेशसहो विलग्ने
शूरः सुखी संचयभाक् च बाल्ये ।
उत्पीनगण्डोष्ठललाटघोणः
पितुर्जनन्या बहुरोगकृच्च ॥६॥
f. 31 उद्युक्तकर्मा सुभगप्रदानः
शत्रुप्रमाथी विविधव्ययार्थः ।
श्लेष्मानिलात्मा स्वजनावमर्दी
कन्याप्रजो धर्मनिवृत्तबुद्धिः ॥७॥
दारप्रियो भोजनपानगृध्नु-
र्विचित्र(व)स्त्राभरणैर्वपुष्मान् ।
कुटुम्बसख्यां निभृतं स्मरंश्च
स्वभ्रात्ररिर्बन्धुजनातिरौद्रः ॥८॥
द्विष्टः कृ(त)घ्नश्चपलः शनिश्च
विश्वासयोनिर्विषमान्नभागी ।
श्रेणीश्वरो ऽम्ब्वधवबणिक्क्रियाभिः
संवर्धितार्थः पटुवीर्यकर्मा ॥९॥
क्लेशव्यथालस्यविपूर्णबुद्धिः
स्थिरक्रियास्वाश्रितहृष्यशस्वी ।
चतुष्पदाघातशरास्त्रपाश-
ज्वरैर्म्रियेतारिभिराहृतो वा ॥१०॥
यवनजातके वृषलग्नफलम् ॥

Apparatus

6a सम्मक्लेश° N 6b संचयवाक् N, संचययुक्त K
7b श्रत्रु° N 8a °गृद्धो N, °गृध्नु K 8c शर्वंश्च N
8d मं स्युभ्रातरोरो बन्धु° N 9a–b in N:
द्विष्टाः कृ(त)घ्नाश्चपलाः शनैश्च-
स्स्वाट्योनिर्विषमानभागाः ।
9c श्रुतास्वमम्बाधवबणिक्क्रियित्यः N 10a
°विपर्ण्णबद्धिः N 10b °स्वाशृतकृष्यशस्वी N
10c °शरास्त्त° N

19, 11–16

तृतीयराशौ तु विलग्नसंस्थे
    प्रियादरो भाषणदानशीलः।
गान्धा(र्वे)गीतश्रुतिहास्य⟨शिल्पा-⟩
    शास्त्रार्थकाव्यार्थविवृद्धबुद्धिः॥११॥
सौभाग्यभूषारतिकामवश्यः
    सत्यः सतां पूज्यतमो वचस्वी।
द्विमातृको द्विप्रकृतिर्विनीतो
    हीनाधिकाङ्गो विकृताक्षिपक्ष्मा॥१२॥
शुचिर्विनीतोऽभिमतो गुरूणा-
    मसंस्थितस्वद्कुटुम्बवित्तः।
दुर्मर्षणश्चार्यसमुद्धवक्षः
    कान्तः शठोऽनिष्टसुतोऽल्पबन्धुः॥१३॥
बह्वङ्गनः क्रूरविशालजाति-
    धर्मालसो दारुणशत्रुजेता।
रत्नक्रयोपायजलाध्वमन्त्र-
    प्रसिद्धिक(र्मा) प्रजहाति चार्थान्॥१४॥
भूम्यौर्णिकाजाविकहेमजा(नां)
    त्यागी नृपारोषसहोऽलसात्मा।
मृगाटवीव्याडजलाश्रयेभ्यः
    प्राप्नोति मृत्युं परितो जले वा॥१५॥
मिथुनलग्न⟨फलम्⟩॥
प्राग्लग्नसंस्थे तु च(तु)र्थराशौ
    भीरुर्घृणी नैकनिवासशीलः।
प्राज्ञश्चलोऽन्तर्विषमस्वभावो
    देवद्विजाभ्यर्चनदानशीलः॥१६॥

Apparatus

11b प्रियदार K   भूषण K   11c no space in N   11d शास्त्रास्त्र° N   12a °भूषारिति° N   12d °कङ्गो N, °काङ्ग K   °पर्बा N, पद्मा K   13c °णाचार्य° N   14a बह्वङ्गना N   15a भूम्यैर्णिका° N   15b नृपरोमसहो N   16c °लान्तर्द्विषण° N, अन्तर्विषम K

19,17–22

मेधान्वितो गुह्यरुगर्दितात्मा
पाषाणपण्याभिहितान् बिभर्ति ।
शीघ्रः परार्थव्ययकर्मभोगी
धर्मप्रवृत्तः कफमारुतात्मा ॥१७॥
f. 31v पूज्यो गणानां बहुवाक्यशीलः
कामी दृढग्राहरतः कुभार्यः ।
विगर्हितायुक्तकुटुम्बभार्यो
दुष्टाल्पपुत्रः व्रतशीलबन्धुः ॥१८॥
कन्यानुजो बह्वरिराजिवर्मा
विदेशगः साहसधीरकर्मा ।
अत्यन्तभागी महिषौषधस्त्री-
विभूषणाच्छादनवाहनानाम् ॥१९॥
खःश्वचण्डालमिश्राश्चनीच-
रज्ज्वस्थिभङ्गानिलमोषदोषैः ।
कफोदयाद्देह(नि)कर्तनाद्वा
मृत्युं समाप्नोति भगन्दराद्वा ॥२०॥
कर्कटलग्न〈फलम्〉॥
सिंहे विलग्ने कठिनात्मवाचः
सिंहोग्रसंस्थानमुखो महौजाः ।
प्रियामिषो राजसुलब्धमानो
गाम्भीर्यधैर्यस्थितिसत्त्वयुक्तः ॥२१॥
दृप्तो ऽल्पवाक्यो द्रविणानुचारी
लुब्धः पराध्यातरतः क्षुधालुः ।
सुरोषणो दुःप्रसहः प्रमादी
दृढः सुहृत्सु प्रणतेषु साधुः ॥२२॥

Apparatus
17b पाषानधान्या(भा)नहितान् N 19a °राज्यवर्मा N 20a रक्तःस्व° N 20c °देह(वि)कर्त° N 21c °सुलम्ब° N, लब्धा K 21d गम्भीर्य° N, गाम्भीर्य K 22a धृष्टो K पर्वतवनानुसारी K (i.e., अद्रि-वनानुचारी) 22b लुब्धोद्वा° N, लुब्धः पर° K

19,23-28

सुसंस्थितः सर्वकुटुम्बकार्यो
धर्मोद्युक्तः सुरतक्रियासु।
निहन्ति कामान् विविधस्वभावान्
रक्षन् वधाद्रोहरतांश्च बन्धून्॥२३॥
प्रख्यातपुत्रो निहतारिपक्षः
कृषादिकर्मोद्यतसंहितार्थः।
प्राप्नोति वृद्धा विविधाश्च भार्या
वेश्यानटीप्रव्रजिताङ्गना वा॥२४॥
व्यापारशीलो विविधव्ययार्थो
भवेच्च जातोऽत्र स दन्तरोगी।
क्षुच्छस्त्रपाशाम्बुविषैश्च मृत्युः
क्रो(धा)मयैर्वारिचरैश्च शश्वत्॥२५॥
सिंहलग्न⟨फलम्⟩॥
षष्ठे विलग्ने मृदुवल्गुभाषी
दानोपचारप्रणयानुरक्तः।
गान्धर्वशीलो व्यवहारकाव्य-
दाक्षिण्यमाधुर्यपटुर्दयावान्॥२६॥
कन्याविलासस्थितिसत्त्वदेहो
मानी परोपार्जितवित्तभोक्ता।
देशाटनो द्विप्रकृतिर्विनीतो
मन्दप्रजोऽन्तःकितवो यशोर्थी॥२७॥
कामी बलप्रीणनमण्डनेप्सुः
स्रस्तांसपक्षः सुभगः सुरूपः।
कान्तो गुरूणामृजुरिष्टधर्मः
शुचिः परद्विष्टचल(त्)कुटुम्बः॥२८॥

Apparatus

23b धर्मेद्युक्तः N, धर्मोद्द्युत K   23c विचय° N
23d रात्रन् N   24b °संहतार्थः N   24c वृद्धान् N   24d
स्वेश्यानटाप्रव्रजिताङ्गनां N   25c क्षुत्शस्त्र° N
25d सस्वे N   27c स्त्रीप्रकृति K   28a बलप्रीणनु-
मण्डनेप्सुः N, भूमण्डलवर्धनभाक् K

19,29–34

f.32 पापैरनार्यैः सहितैर्विरुद्धैः
स्वभ्यर्चितो ज्ञातिभिरार्यवृत्तैः ।
कन्याप्रजो वातरुजाभितप्तो
नीचारिविद्वेषविवृद्धरोषः ॥२९॥
सतीष्वपि स्यान्निरतो ऽङ्गनासु
कर्मस्वनेकेषु कृतप्रयत्नः ।
पित्ताग्निदाहज्वरचोरशस्त्रै-
श्चतुष्पदैर्वा मृयते विषैर्वा ॥३०॥
कन्यालग्नफलम् ॥
तुलाधरे लग्नगते प्रसूतो
देहानुचारी विषमाङ्गशीलः ।
कृशः कृतघ्नश्चपलो ऽलसात्मा
क्रियायशस्यो द्रविणप्रभुश्च ॥३१॥
कफानिलात्मा तनुदीर्घमूर्तिः
कलिप्रियो ऽधर्मरतिप्रसक्तः ।
परावमर्दी बहुदुःखभागी
मेधान्वितश्चारुघनासिताक्षः ॥३२॥
देवद्विजातिव्ययरतिः क्रियावान्
पटुर्गुरूपासनमाननेषु ।
पितात्मजानां विदुषां च पूज्यो
भ्रातृप्रियो ऽर्थी प्रयतः शुचिश्च ॥३३॥
पापोपचारोपहतः कुटुम्ब-
स्तस्याहितो बन्धुजनः सुतश्च ।
भार्या कुवृत्ता मृदवो ऽरयश्च
धर्मे (च) तर्कव्यवसायिनी धीः ॥३४॥

Apparatus

29a पापैरहार्यवृत्तैः सहजैश्च K   30b °केष्वकृत° N   col. कन्यलग्न N   31a प्रसूते N   31b देहानुसारी (var. कारी) K   31d °यशस्य N   32c °मद्री N, °मर्दी K   33c पितान्यभ्राजां K   34a °पहतं कुटुम्बं N   34b तस्मा° N   34d धर्मव्यवसायनीचमति K

19,35–39

अनिश्चितो ऽनेकविधेषु कर्म-
स्वर्थेषु रौद्रोग्रफलेषु सक्तः।
मृत्युः कफोद्रेकचतुष्पदस्त्री-
बन्धान्नपानौषधदोषतः स्यात् ॥३५॥
तुल(ा)लग्नफलम् ॥
स्याद् वृश्चिके पूर्वविल(ग्न)संस्थे
नरः पृथुव्यायतपीनदेहः।
गम्भीरपिङ्गोज्ज्वलदृङ्महाभ्रू-
र्निम्नोदरो मध्यविलग्नघोणः ॥३६॥
तीक्ष्णः स्थिरः साहसिकः प्रचण्डो
दुर्मर्षणो ऽन्तर्विषमस्वभावः।
असूयको मातुरभीष्टकर्ता
शूरो वधादानविधातकारी ॥३७॥
सुहृद्गुरुद्रोहरतः पराशी
पराङ्गनाकर्षणयत्नवांश्च।
कुटुम्बसम्पन्नधनोपपन्नः
प्रद्विष्टशीलैकजनीचबन्धुः ॥३८॥
विश्वासहा मित्तरुगात्मजाढ्यो
रन्ध्रोल्बणास्यः प्रयतो ऽर्थदश्च।
नृपोपसेवी विविधारिपक्षो
f.32v बहुङ्गनो धर्माभिमत्रपन्नः ॥३९॥

Apparatus
35b रौद्रेग° N 35c मृत्य: N °द्रेदश्चतुष्पदीस्त्री° N 35d °दोषदः N 36a साद् N no space in N 36c °दृक् महाभ्रा N, महाहनु K 37a स्तीक्ष्णः N 37c मातृरतिष्टकर्ता N, मातुरभीष्ट K 37d बधादानविषादकारी N; cf. 1,134c 39b दुन्द्रोल्बणेभ्यः N, बन्धोल्बणवक्त्र K 39d बहुन्गनो N

19,40–44

अजस्रकर्मस्वपि धर्मयुक्तः
    सेवाश्रयोपायधनादरस्य ।
शस्त्रप्रहारासवपानदोष-
    स्त्रीरागबन्धादिभिरेति मृत्युम् ॥४०॥
वृश्चिकलग्न(फलम्) ॥
धनुर्धरे पूर्वविलग्नसंस्थे
    स्यात् स्थूलदन्तो मलिनासितौष्ठः ।
उत्पीवरोरूदरबाहुवक्षा
    ह्रीमान् महा(क्षः) पृथुतुङ्गमूर्धा ॥४१॥
विज्ञानशास्त्रश्रुतिपूर्णबुद्धिः
    प्रत्यग्रमेधा धृतिसत्त्वयुक्तः ।
प्रत्युग्रकोपः प्रणतोपकारी
    प्रणामसाध्यो बलिनाममर्षी ॥४२॥
कुलाभिमुख्यः कुनखो जितारिः
    सहायशूरः सुनयप्रधानः ।
चलद्बहुच्छिद्रकुटुम्बभार्यः
    स्ववंशभा(ग) बन्धुजनानुकूलः ॥४३॥
भ्रातृप्रतापी बहुधीरपुत्रो
    मुखाक्षिकर्णाङ्घ्रिशिराहतो वा ।
कान्तोपचारः प्रवराङ्गनाढ्यः
    सद्धर्महासानृतवित्तहा च ॥४४॥

Apparatus

40a अजागृकर्मस्वन N   40b °धनाधनस्य N
41a स्याल° N, स्थूल K   41b मलिनासिकौष्ठः N,
मलिनासिकोष्ठ K   41c उब्पीवरोरूदरवाहवक्षा
N, अतिपीवरोरुजठर K   42c प्रत्यग्र° N   43b
सह्यामशूरः N   43c चलत्वहु° N   43d no space
in N   44b मुखाक्षिकंक्षिङ्घिभिरा° N, वदनाक्षिपद
(वदनाक्षिगद var.) K   44d °हासनृत° N

19,45–49

शिल्पादिसत्कर्मरतोपचारी
नृपाद्धृतार्थः कफमारुतात्मा ।
चित्रामयैः कुक्षिरुजाज्वरैर्वा
मृत्युं लभेताम्बुबिलाश्रयैर्वा ॥४५॥
धन्विलग्न(फलम्)॥
सूतो विलग्ने दशमे कृशाङ्गो
भीरुर्मृगाकारतनुर्मृगास्यः ।
वातात्मकैर्व्याधिभिरर्दितात्मा
प्रदीर्घतुङ्गाग्रनसो ऽल्पसत्त्वः ॥४६॥
उद्वृत्तरोमांचितपाणिपादो
विस्तीर्णकर्णश्चपलो ऽसिताक्षः ।
तृष्णालुराचारगुणैर्विहीनः
स्त्रीसङ्गवश्यो द्रविणानुचारी ॥४७॥
शूरः कुलीनो बहुबन्धनार्थिः
प्रियानुगीतश्रुतिशास्त्रशिल्पः ।
स्वभ्रातृहा क्षुद्रबलः कुटुम्बी
द्विष्टः प्रोद्दुष्टस्वजनः शठारिः ॥४८॥
कुशीलकान्तोपहृताङ्गनाङ्गः
पापाहितो ऽसूयकवित्तभाक् च ।
धर्मानुकूलो नृपपंचशिल्प-
शौर्यार्जितप्रायधनो ऽल्पदाता ॥४९॥

Apparatus

45c मित्रासनः कुत्सिरुजा° N   col. धन्वलग्न N
46a स्यात्तु N   46b °कारमृगो मृगस्य N, एणवक्त्र K   46d प्रदीप्ततुङ्गोग्रनास K   47d द्रविणाधि-चारी N, गिरिवनचारी K   48c सभ्रातहा N क्षुद्रबलं कुटुम्बं N, क्षुद्रबलः सकुटुम्ब K   48d no space in N   49d चौर्यज्जित° N

19,50–55

f.33 बहुप्रभाषी त्वलसो ऽप्रयत्नः
कन्याप्रजः †स्वच्छत्रिकप्रदेशः† ।
व्याडानिलेभ्यो नृपशस्त्रबन्धैः
पित्तप्रभावैर्म्रियते विषैर्वा ॥५०॥
मकरलग्न⟨फलम्⟩
कुम्भे विलग्ने बहुनीचकर्मा
कुलाग्रणी विस्फुटिताग्रघोणः ।
दीर्घो ऽसितो बन्धुसुहृत्स्वतन्त्रो
वैरप्रियः क्रोधवशो ऽलसात्मा ॥५१॥
स्त्रीद्यूतपारुष्यरतिः पिपासु-
र्बाह्यो मृजामङ्गलसंयमेषु ।
व्ययोत्सार्थः कफमारुतात्मा
प्रभूतकर्मिष्ठजनः कुकीर्तिः ॥५२॥
प्रणष्टसम्बन्धिगुरुः परेषा-
मसम्मतः स्यात् पिशुनो ऽभ्यसूयः ।
प्रणष्टसम्पन्न कुटुम्बवित्तः
क्रूरैरपि भ्रातृभिरीड्यते सः ॥५३॥
सुताः शठाचाररता(लो)साः (स्यु-)
रसूयिनो नीचबलद्विषश्च ।
स्त्रीकर्मधा विग्रहरौद्रशीला
धर्मारताः कर्मणि गर्हिताश्च ॥५४॥
बहुव्ययः संचयवान् प्रवासी
हृत्स्थैः कफव्याधिभिरर्द्यते सः ।
स्त्रीकोपविद्युज्ज्वलनाम्बुतापै-
र्म्रियेत रोगैर्जठरोद्भवैर्वा ॥५५॥
कुम्भलग्न⟨फलम्⟩॥

Apparatus

50a फलसो प्रियांसः N   50b कन्द्राप्रजः स्वच्छतृकप्रदेशः N   50c व्याटानिलाभ्यो N   51a विलग्ना N   51d सक्रोधपर K   52b बहिष्कृतो लोके K   मृजासङ्कुल° N   53c प्रकृष्टसम्पद् K   54d गर्हिते म N

19, 56–60

मीने विलग्ने द्युतिमानचारो
    धन्यः स्फुटो घ्राणपुटेऽमलाक्षः।
विदारितास्यो विवृतोष्ठदन्तः
    कुष्ठी च भोगामिषपा(न)गृद्धः॥५६॥
शौचश्रुताचाररतो विनीतः
    सम्पन्नमेधा धृतिसत्त्वशीलः।
गान्धर्वनारीरतिभूषणज्ञो
    विज्ञानकाव्यार्थविकृष्टबुद्धिः॥५७॥
दाक्षिण्यमानादरल(ब्धा)कीर्ति-
    र्दुर्मर्षणः प्रत्ययसत्त्वयुक्तः।
अजाविकस्फीतबलः कुटुम्बी
    दारस्थिरो भृत्यधनो धनाढ्यः॥५८॥
कन्याप्रसूतिर्बहुशिल्पबन्धुः
    क्षुद्रोग्रशत्रुर्मृदुवल्गुदारः।
धर्मानुचारी कफमारुतात्मा
    मुख्यासु युक्तः कफवान् क्रियासु॥५९॥
क्षयात्मकार्थो बहुलोहधान्यो
    व्याडाध्वबृहद्रुग्विषकर्षिताङ्गः।
f. 33v रुजाज्वराद्यौषधगुह्यरोगै-
    र्म्रियेत मुख्यैः पुरुषैः क्षुधा वा॥६०॥
मीनलग्न<फलम्>

Apparatus

56a °मानुचारो N  56b स्फुटनासिक K  सबोक्षः N, अस्फुटाक्ष K  56d कुष्ठी K  57a शौचश्रुताचाविरतो N, शोचाचारश्रुति K  58c कुटुम्बो N  58d दाभस्थिरो N  भ्रातृधन K  59a अन्यप्रसूते° N, कन्याप्रज K  59b क्षुद्रोग° N  59c धर्मावमानी N  59d मुस्यासु N  60b व्याडाध्वसृग्भुग्विष° N
after 60b space of ca. 19 akṣaras in N

19, 61–62

एवं नृणां द्वादशभागसंज्ञै-
मूर्त्यांश्रयैर्द्वादशवर्गतुल्यैः।
क्षेत्रे(श्वरक्षेत्र)कृतैर्विशेषै-
र्वाच्या जलारण्यचरास्थिताद्यैः ॥६१॥
स्वोच्चेश्वरस्वामिसुतं च यच्च-
दालोकितं वा स्वबलाधिकं वा।
तत्तद्गृहं श्रेष्ठफलं निरुक्तं
भावान्वितं तद्विपरीतमन्यैः ॥६२॥
यवनजातके लग्नफल⟨ाध्यायः⟩ समाप्तः॥

Apparatus

61a °संज्ञा N 61b मूर्त्या° N 62a °सुतश्च N यच्च(त्) N 62b वालोकितं N after वा' space of ca. 17 akṣaras in N 62c तत्तद्ग्रहान्त्रष्टफलं N

20, 1–6

बृहस्पतिः पीनविशालदेहं
    गम्भीरधीरप्रकृतिं समृद्धम्।
धर्मिष्ठमिष्टस्वजन⟨नं⟩ प्रसूते
    प्राग्लग्न(गो) बुद्धिगुणोत्तरं च ॥१॥
शुक्रो गुरुं व्यस्तभुजोदरास्यं
    लग्ने प्रसूते प्रियगन्धमाल्यम्।
गान्धर्वलीलारतिगीतवित्तं
    विलासिनं कामपरायणं च ॥२॥
बुधो बहुज्ञानकरं प्रकृष्टं
    कविं कृशं श्यामतनुं प्रसूते।
विलग्नगः सेवकमिष्टलेख्यं
    मेधाविनं वाक्यविशारदं च ॥३॥
सूर्यो ऽल्पकेशं कठिनाङ्गसर्गं
    क्रियालसं दक्षमुदग्ररोषम्।
विलग्नगो मानधनं प्रसूते
    स एव तत्कण्टकसंस्थितश्च ॥४॥
शनैश्चरो मूर्खमधर्मवृत्तं
    कृशं शठं कृष्णतनुं प्रसूते।
प्राग्लग्न(गः) स्फीतधनं महान्त-
    मन्ते ऽधनं ज्ञातिमहत्तमं च ॥५॥
अङ्गारको लग्नगतः प्रचण्डं
    हिंसानृतस्तेयविधातशीलम्।
रक्तत्वगक्षं कपिलं चलं च
    तदङ्गवैकल्यकृशं च कुर्यात् ॥६॥

Apparatus

1c no space in N    4d °स्थितत्वं N    5d °महात्तमं N    6b °स्तोय° N

20,7–12

लग्ने शशी वामनखंजकुब्जं
वाग्घातमूकं जडकं च सूते।
मेषे वृषे कर्कटके तु लग्ने
प्रख्यातदेहार्थगुणं प्रसूते ॥७॥
f. 34 |द्विट्(क्षेत्र)वर्गोपगता जिता वा
क्षीणत्विषो मन्दबला निरस्ताः।
अनिष्टदृष्टाश्च शुभानि निघ्न-
न्त्यायूंषि यानिष्टफलास्तनुं च ॥८॥
पश्यन् रविर्दैवगुरुं विलग्ने
प्रख्यातसौहार्दधनार्थकृत् स्यात्।
आरोग्यमारोप्य कुजः शुभं च
सौरस्तु पश्यन् विदधाति पापम् ॥९॥
शुक्रो धनायूंषि यशः सुखं च
ज्ञानं बुधः कर्मविशिष्टतां च।
चन्द्रस्तु जीवं विदधाति पश्य-
न्नारोग्यविख्यातिधनानि शुक्रे ॥१०॥ गुरुः ॥
पश्यन् विलग्ने भृगुसूनुमर्को
पराङ्गनावित्तहरं प्रदिष्टम्।
कुयोषितां भाग्यमसौख्यभाजं
कुजो ऽर्कजो निष्ठुरबन्धुदारम् ॥११॥
गुरुर्विशिष्टाङ्गनमाप्तभर्तृं
बुधो नटीभार्यमनेकविद्यम्।
चन्द्रः सुरूपं कलिलब्धदेशं
पश्यन् करोत्यात्मगुणाङ्गनं च ॥१२॥ शुक्रः ॥

Apparatus

7a लग्नः N after 7 space of ca 47 akṣaras in N 8a द्विग्नावर्गो° N 9a विलग्नां N 9b °धनान्तकृत् N 9c °मारोग्य N 10b वपुः N 10d °विख्यात° N 12c स्वरूपं N

20,13–18

पश्यन् बुधं लग्नगमिन्दुराढ्यं
सूर्यो विहीनद्युतिमप्रजं च ।
जीवस्तु विख्यातधनं च शुक्रः
लुब्धं कुजो नीचमबुद्धिमार्किः ॥१३॥ बुधः ॥
विलग्नमिन्दुं (र)विरस्वतन्त्रं
पश्यन् करोत्यर्कसुतो रुगार्तम् ।
भौमो ऽल्पजीवं गुरुरार्यमाढ्यं
बुधो विबुद्धं सुभगं च शुक्रः ॥१४॥ चन्द्रः ॥
विलग्नसंस्थं गुरुरर्कमीक्षन्
सुहृद्गुरुख्यातगुणं करोति ।
चन्द्रः प्रशान्तं प्रियमातरं च
शुक्रो ऽम्बरद्रव्यमनेकभार्यम् ॥१५॥
भौमः पितृघ्नं व्रतविच्युताङ्गं
विज्ञानविख्यातगुणं च सौम्यः ।
सौरः पितृद्रव्यविपत्तिदुःखं
व्याधाहतं देशपरिप्लुतं च ॥१६॥ सूर्यः ॥
कुजं विलग्ने विषशस्त्रवध्य-
मर्कः करोत्यर्कसुतो ऽग्निपच्यम् ।
पश्यन् शशी मातृविपन्नमादौ
बुधो ऽग्निकर्माणमसंचयं च ॥१७॥
गुरुर्गुरुद्विष्टमरोगदेहं
फलार्थवाणिज्यनियोगधीरम् ।
विलुप्तमर्यादमधर्मवश्यं
f. 34v शुक्रः परस्त्रीधनजीविनं च ॥१८॥ कौजः ॥

Apparatus

13c जीवक N 14d धिबुद्धिं N 15a °र्कमीक्ष्यन् N 17a विलग्नं N 17b ग्निपच्यन् N 18a °रोषदेहं N 18b स्फलार्थवानिक्यनियोग° N 18c °वश्यन् N col. कुजो N

20, 19–21

विलग्नमीक्षन् रविरात्मसूतं
पितुर्विधेयं नियतं प्रकुर्यात् ।
यक्ष्मादिरोगोपहतं शशाङ्कः
कुजस्त्वसृग्वातरुजं जिघांसुम् ॥१९॥
गुरुः सभासुख्यमवाप्तमानं
बुधः कलाशिल्पलिपिप्रकृष्टम् ।
शुक्रः क्रियापण्डितमार्जवार्थं
स्त्रीशिल्पविद्याग्रहणोत्सुकं च ॥२०॥ शनिः ॥
दृष्ट्यात्मकं क्षेत्रगुणस्वभावैः
फलं विधार्यं स्वगुणापकर्षम् ।
एकर्क्षगद्वन्द्वगुणाश्रयं तु
बह्वेकसंस्थं विहितं च वक्ष्ये ॥२१॥
यवनजातके लग्नगतग्रहदृष्टिः ॥

Apparatus

19d °रुजा N   20c °मार्जिवोर्थं N   21a दृष्टात्मकं N   21c एकर्क्षगद्वन्द्वा° N   21d °संस्था N   col. °दृष्टः N

21,1–5

एकर्क्षसंवर्गगतौ सुवाते
    शशाङ्कसूर्यौ नरमल्पवित्तम्।
क्रियापटुं कूटकथं शठं च
    स्त्रीवश्यमिष्टासवविक्रयज्ञम् ॥१॥
विद्वांसमिन्द्वाङ्गिरसौ सुवाते
    स्वबन्धुसन्मानहितारमाढ्यम्।
सुरद्विजेज्याभिरतं विनीतं
    विशुद्धशीलं दृढसौहृदं च ॥२॥
स्रग्धूपमालाम्बरपुष्टियुक्तं
    क्रियाविधिज्ञं क्रयविक्रयज्ञम्।
कलिप्रियं बह्वशनप्रलापं
    शशाङ्कशुक्रौ कुरुतः सुवेशम् ॥३॥
चन्द्रैन्दवौ काव्यकथाविधिज्ञं
    धनान्वितं कान्त्यभिधानयुक्तम्।
स्त्रीसंमतं मार्दवमिष्टधर्मं
    गुणैर्विशिष्टं कुरुतः स्मितं च ॥४॥
चन्द्रावनेयौ रणलब्धशब्दं
    विक्रान्तकर्माणममर्षणं च।
मल्लं क्रियारम्भमसृग्रुगार्तं
    मृच्चर्मलोहायसशिल्पिनं वा ॥५॥

Testimonia

With this chapter compare Sārāvalī 15. With 1–6 compare Jātakasāradīpa 39,97–101.

Apparatus

1a °संपर्कगतौ N  1d° चित्रयज्ञं N, विक्रयकुशल K  2b °सन्मानपितार° N, समानवर्धनेश K  3a °धूम° N, धूप K  °युक्तिसुक्तिं N  5c मल N, मल्ल K  5d मृत्वर्म° N, मृच्चर्म K

21, 6–11

चन्द्रासितौ गर्हितकर्मशीलं
चतुष्पदाश्विकमस्ववश्यम् ।
परात्मकं जीर्णवधूपतिं च
दुःशीलमश्वस्थपतिं सुवाते ॥६॥ चन्द्रः ॥
गुर्वर्कयोगे ऽङ्गसमृद्धिमन्तं
मित्राश्रयाप्तार्थमनेकपुण्यम् ।
द्विजं पराध्यापनलब्धमानं
नृपोपसेवाभिरतं च विन्द्यात् ॥७॥
शास्त्रास्त्रविद्याकुशलं समर्थं
मल्लं महारङ्गविशारदं च ।
f.35 स्त्रीसंश्रयाद्वृद्धकुटुम्बमन्ते
दृढबलं सूर्यभृगू सुवाते ॥८॥
सूर्येन्दवौ वाक्यगुणैरुपेतं
विद्वांसमार्यं बलरूपदृप्तम् ।
यशोर्थिनं सेवकमस्थिरार्थं
क्षितीश्वराणां दयितं सतां च ॥९॥
सूर्यावनेयौ बलसत्त्वयुक्त-
मोजस्विनं साहसिकं प्रचण्डम् ।
विज्ञानहीनं परिमुक्तधर्मं
वाच्यानृतं दानपरं च कुर्युः ॥१०॥
सूर्यासितौ वंशगुणैर्विशुद्धं
स्वकर्मभिर्धर्मपरिष्कृतं च ।
प्रणष्टदारात्मजमध्वशीलं
धातुप्रयोगज्ञमतः सुवाते ॥११॥ सूर्यः ॥

Apparatus

6b °मश्ववश्यं N 6d °मस्वस्थ° N 7a गु(रु)र्वर्कयोगो N ङ्गवमृ° N, समृ K 8a शास्त्रा° N, शास्त्र K 8c स्त्रीसङ्गाल्लब्धबन्धुधन K 10a बन° N, बल K 10d वाच्यानृता N

21, 12–17

अनेकविद्याश्रुतिकाव्यवित्तं
  विशिष्टधैर्यस्थितिसत्त्वयुक्तम् ।
सदार्यदारं कुरुतः समृद्धं
  सुरासुराचार्यवरौ मनुष्यम् ॥१२॥
अजस्त्रशिल्पश्रुतिशास्त्रतत्त्वं
  सुमेधसं वाक्यविशारदं च ।
कान्तं कविं बुद्धिगुणैर्विशिष्टं
  जीवैन्दवौ कीर्तिधनं सुवाते ॥१३॥
जीवावनेयौ कु(रु)तः प्रियास्त्रं
  तीक्ष्णं प्रवक्तारमुदारधैर्यम् ।
शूरं समृद्धं नगरेश्वरं वा
  यशस्करं पुण्यधनं द्विजं वा ॥१४॥
जीवासितौ ग्रामपुरस्कृतानां
  श्रेणीसभासंघनमस्कृतानाम् ।
अनेकशिल्पश्रुतिनिश्चितानां
  महाधनानां जनकौ भवेताम् ॥१५॥ गुरुः ॥
शुक्रैन्दवौ तु प्रियगन्धमाल्यं
  सङ्गीतहास्याभिरतं सुवाक्यम् ।
पूज्यं गणश्रेष्ठमनेककृत्यं
  संख्यानमानादिविधिप्रधानम् ॥१६॥
शुक्रावनेयौ परदारधूर्तं
  शाठ्यानृतद्यूतरतं विटं वा ।
मल्लं भटं वा पशुपालमुख्यं
  सुसावयेते रणजीविनं च ॥१७॥

Apparatus

12b विशिष्टधर्म° N 13b सुमेदसं N 14a प्रियोस्त्रं N, अस्त्रप्रिय K 14d पण्यधनं N 16c गुणश्रेष्ठि° N 17b शाठ्यानृतध्यानरतं N, द्यूतानृतशाठ्यरत K 17d सुश्वादयेते N

21, 18–22

शुक्रासितौ दारुविदारणज्ञं
चित्राश्मवर्मक्षुरशिल्पिनं वा ।
प्रदुष्टयोषिद्विधवापतिं वा
स्त्रीदुर्भगं मन्दधनं सुवाते ॥१८॥ शुक्रः॥
कुजैन्दवौ कांचनलोहकारं
वीथ्योषधिद्रव्यपरिक्रयज्ञम् ।
कलिप्रियं बहृणमध्वशीलं
f. 35v पटुं सुवाते निपुणं सुवाते ॥१९॥
बुधासितौ नास्तिकवंचकानां
चयाव्रतानां चलसौहृदानाम् ।
धात्विन्द्रजालार्थविदां च हेतू
स्या(ता)मयस्कर्मकृतां च सूतौ ॥२०॥ बुधः॥
सौरावनेयौ विषशस्त्रनिघ्न-
प्रपंचकस्तेनकलिप्रियाणाम् ।
स्यातां समुद्भूतिकरौ नराणा-
मेकर्क्षगौ धर्मनिराकृतानाम् ॥२१॥ सौरः॥
एते <ग्रहेन्द्राः फल>दाः शुभेषु
अन्योन्यवर्गेष्ववतिष्ठमानाः ।
प्रधानमध्या(न्त्)तमा विकल्पे
निरुक्तवैकृत्यकराः प्रदिष्टाः ॥२२॥
यवनजातके द्विग्रहयोगः॥

Apparatus

18b वित्ताश्मकर्मक्षुरशिल्पिनं N, क्षुरचित्राश्माटिकर्मशिल्पी K  20a no space in N  दास्तिक° N  20c धात्वि° N, धात्वि° K  21b स्तेय K  21d मेकर्क्षगौ N  22b °मानां N  22d °वैकृत्यवराः N, कुर्वन्ति विकृतिं K

21,23–24

एकर्क्षसंस्था दधति त्रयस्तु
    स्वान् स्वान् यथा शास्त्रकृतान् विशेषान्।
अन्योन्यसंसर्गसमाहितैषा
    ज्ञेया फलानां त्रिविकल्पयुक्तिः॥२३॥
त्रयः शुभा ज्ञानयशोधनाढ्य-
    प्रधानपुंजन्मकरा निरुक्ताः।
एवं त्रय ⟨ए⟩कगतास्तु पापा
    दारिद्र्यरोगाभिहतं प्रकुर्युः॥२४॥
⟨यवनजातके⟩ त्रिग्रहयोगः॥

Apparatus
24c एवं मयर्कगतास्तु N    24d °हतां N    col. no space in N

22, 1–6

निराकृतप्रव्रजितप्रसूतिं
विद्याश्चतुर्ष्वेकगृहाश्रितेषु।
आहिण्डिकत्यक्तगृहाश्रमाणां
नैःश्रेयसंसिद्धिमपाश्रितानाम् ॥१॥
स्याद्यावतां तत्र बलप्रसिद्धि-
स्तावन्त एवास्य भवन्ति दीक्षाः।
यथाधिवीर्यादपि तत्र पूर्वा
दीक्षा दशायोगबलाच्च काले ॥२॥
तत्राधिवीर्यो गुरुराप्तधर्मं
त्रिदण्डि(नं) ज्ञानबुधं प्रसूते।
आलेख्यलेख्यश्रुतलब्धकीर्तिं
शुक्रं च (शुक्रश्च)रकप्रधानम् ॥३॥
निशाकरः श्रावकवृद्धपण्यं
तपोरतस्तापसकर्मसस्यम्।
कुजस्तु शाक्यश्रमणं कुशीलं
नग्नं तत्रोपासकमर्कसूनुः ॥४॥
बुधस्तु जल्पाकमभिश्रुतार्थं
चेष्टारतं जीविनमेकलिङ्गम्।
वर्णोपदेशो ग्रहवर्णवत् स्याद्
देशात् कुलस्थानसमुद्भवाच्च ॥५॥
प्रक्षीणमूर्तावपि मन्दवीर्ये
तद्भक्तिवान् मित्रगृहे (ऽपि) हि स्यात्।
पराजितः शत्रुगृहे स्थितो वा
पाषण्डसम्भूतिकृदीक्ष्यते सः ॥६॥

Apparatus

1c °श्रमाणं N 1d °पाश्रुतानां N 2d कालः N 3a-b °धर्मस्त्रि° N 3d शुक्रं च] सुक्रश्च N 4b तपोरतं तापस° N 5b जीवनमात्रलिङ्गं N 5d देशाङ्कुलाः N °समुद्भवाच्च N 6b तद्भक्ति-वान्तगृहिणौ N 6d पाषाण्डनिभाङ्गकृदिक्ष्यते N

22,7–12

f. 36 |(ज)न्माधिपः क्षीणबलो जितो ऽन्यै-
र्बलीयसा सूर्यसुतेन दृष्टः ।
अवीक्ष्यमाणः सुहृदा शुभैर्वा
निःसंशयं दीक्षितजन्मकृत् स्यात् ॥७॥
सौरांशके क्षीणतनुः शशाङ्कः
सौरेक्षितो ऽन्यैरनवेक्षितश्च ।
लग्ने ऽर्कजो वाल्पबलो शशाङ्के
सूर्यांशके प्रव्रजितं प्रसूते ॥८॥
सौरांशकस्थ(ा)(वा)पि सूर्यजेन्दू
चन्द्राश्रिते वाधिबले ऽर्कसूनौ ।
जन्माधिपः क्षीणबलो ऽत्र योगे
प्रव्राजयत्येव शुभैरदृष्टः ॥९॥
चन्द्रार्कलग्नैकतरो विधार्य-
चतुष्टये स्वान् परिगृह्य राशीन् ।
तद्वर्गयुक्तैः शशिलग्नसूर्यैः
प्रव्राजयत्यर्कसुतो ऽचिरात्तु ॥१०॥
यद्यार्किराशौ शशिभौमसूर्या
होरागतश्चाधिबलो ऽर्कसूनुः ।
आपोक्लिमस्था बुधजीवशुक्रा-
स्तदा भवेत् प्रव्रजितप्रसूतिः ॥११॥
जन्माधिपः सौरगृहे ऽल्पमूर्तिः
सौरेण केन्द्रोपगतेन दृष्टः ।
सौरांशके लग्नगते शशाङ्के
क्षीणे स चेद्दीक्षितजन्मकृत् स्यात् ॥१२॥

Apparatus

7c अन्वीक्ष्यमाणः N   8a सौरंशके N   8b न्यैरणवेक्षितं च N   8c लग्नो N   8d प्रव्रजितप्रसूतिः N   9b चन्द्राश्रृतौ N   9d प्रव्रजय° N   10c °युक्तः N   10d प्रव्रजये° N   11a यद्यर्किलग्ने N

22, 13

सौरांशकस्थं प्रतिपूर्णमिन्दुं
सूर्यांशकस्थो ऽर्कसुतः प्रपश्येत् ।
प्रधानयोगाश्रयिभिः प्रधानैः
कुर्यान्नृपं वृद्धमवाप्तदीक्षम् ॥१३॥
यवनजातके प्रव्रज्यायोगः ॥

Apparatus
col. प्रव्रजायोगः N

23,1–8

एकर्क्षगा जन्मकरा नराणां
　　स्युः पंच रङ्गप्रतिमोदकानाम्।
गीतप्रनृत्ताभिनयप्रहास्य-
　　लास्यैः पराराधनतत्पराणाम् ॥१॥
तत्राधिवीर्यो नटमिन्दुसूनुः
　　कुर्वीत सौख्याभिनयप्रहृष्टम्।
शुक्रस्तु नार्यानुकृतिप्रवृत्तं
　　प्रगल्भमुद्घोषकगानमर्कः ॥२॥
चन्द्रस्तु तन्त्रीरवसस्वरत्वं
　　भौमो विटं मौष्टिकहास्यकं च।
मायाविधिज्ञं प्लवकं तु सौरो
　　<जीवो> ॥३॥
<पंचग्रहयोगः>

॥४–६c॥

　　वाद्येषु चैतेष्वपि शुक्रवर्गे ॥६॥
अजस्त्रकर्मानुरतः सनीतो
f. 36v 　　वा कल्पनाकर्मकरो <ऽर्कवर्गे>।
क्रियाविधानेषु बुधस्य वर्गे
　　द्रेकाणसंज्ञाश्रयिणां प्रसिद्धः ॥७॥
बृहस्पतेर्वस्त्रविधौ च योगे
　　काष्ठादिशिल्पेषु तु सूर्ययोगे।
विचित्ररङ्गादिषु शुक्रयोगे
　　मणिप्रकारादिषु चन्द्रमाहुः ॥८॥

Apparatus

2a °वीर्याटन° N 2b °प्रकृष्टं N 2d °मुधवाष्टक° N 3d–6c no space in N 7a सुतीनाः N 7b वोप्यल्पनाकर्मकरा x x त्त N 7d °संस्याश्रमणी N 8a बृहस्पतिवस्त्रविधानयोगे N 8d ममणि° N

23,9

लोहादिकर्मस्वबनीसुतस्य
शृङ्गास्थिकर्मादिषु सौरमाहुः ।
मृदङ्गधात्वादिषु सौम्ययोगे
द्रेक्काणवच्छिल्पफलानि चैषाम् ॥९॥
⟨यवनजातके⟩ शिल्पयोगः ॥

Apparatus
9a °कर्मास्व° N   9c मृटद्ध° N   9d °च्छिल्पि° N
col. no space in N

24,1–7

॥१–३॥

<षड्ग्रहयोगः>

पापात्मनां रुग्व्यसनाहतानां
सप्तैकगा मन्दधनायुषां च।
कुर्वन्ति जन्मालसदुःखितानां
भिक्षाशिनामन्यवशात्मनां च॥४॥
अत्राधिवीर्यः पुरुषं प्रसूते
सूर्यो मृगव्याधमधर्मवृत्तम्।
औरभ्रिकं पाशविधारणं वा
भौमो ऽर्कजः पानतृषं पतिघ्नम्॥५॥
बुधो विदेशा(भि)रतं दरिद्रं
शुक्रो भृतिन्यायमनर्थवृत्तम्।
चन्द्रो रुगा व्याधितमल्पवीर्यं
मूर्खं गुरुर्विक्लवमार्पितं वा॥६॥
ग्रहाश्रयाद्विश्रुतसंप्रवृत्तिं
विधार्य तद्वर्णगुणात्मकं च।
एषां यथा ख्यातफलप्रदानां
निर्देशमेकान्तवि(प)त्रमिच्छेत्॥७॥
<यवनजातक> एकत्वे(ग)तसप्तग्रहयोगः॥

Apparatus

1-3 and col. no space in N 4a पापात्मजां N 4c °दुःखितानां N 4d °वशास्थानां N 5d पत्निनृपं N 6a विदेशारतिं N 6c रुग N 7c °फलास्पदानां N col. no space in N एकाशत-स्त्रहग्रहयोगः N

25,1–4

चन्द्राद्विलग्नाच्च रविश्चतुर्थे
कुर्यात् पितुर्द्रव्यगृहापकर्षम् ।
सुखासुखोत्कर्षविपत्तिमिन्दु-
स्तुर्यस्थितो मातृकुले गृहे च ॥१॥
जीवः पितृभ्रातृगृहप्रवृत्तिं
पितुः सुहृज्ज्ञातिगणास्पदं च ।
शुक्रस्तु दाराश्रयसौख्यभोज्य-
स्रग्वस्त्रसौभाग्यगृहप्रदः स्यात् ॥२॥
बुधश्च यत्नाहितबन्धुसौख्यं
श्रमेऽपरं स्वावासकृताधिवासम् ।
सुदुःखिनामन्यगृहाटनानां
कुजोऽर्कजो दासगृहालयानाम् ॥३॥
f. 37 पापश्चतुर्थे [निरवेक्ष्य]संस्थो
रवीक्षितोऽन्यैः शुभदैरदृष्टः ।
करोत्यसंस्थानकृतोपतापं
प्रायः स्वबन्धूद्भवजं च दुःखम् ॥४॥
<चतुर्थः ॥>

Testimonia

1a-b and 2c–4d equal Jātakasāradīpa 42,2-5.

Apparatus

1a चन्द्रा वि° N  1b कुर्यासितृद्रव्यगृहास्पदं च J  1d °र्द्य्यस्थितो N  गृहां N  2b पित्ते सुहृज्ज्ञानिपुणा° N  2c °भाज° N, °वृत्त° J  2d °गृहं प्रदस्यात् J  3a गुरुस्तु J  °बन्धु° N  3b श्रंभे J  परावास° JN  3c सुदुःखिताम्मान्य° N, सुदुःखितं चो ऽन्य° J  4a पाप चे° N  °संस्थं J  4b तदीक्षिते J  °दृष्टे J  4c °परोपतापं J  4d स्वबन्धुं जनजंव N  col. no space in N

25,5–10

जामित्रगो ऽर्को ऽन्यबन्धनार्तं
    स्त्रीदेश्यितं मार्गरतं प्रसूते।
निशाकरो दैन्यरुगार्तिताङ्गं
    कुर्याद्व्रणव्याधिकृशाङ्गनं वा॥५॥
विशिष्टदारं गुरुरल्पमार्गं
    निरोगदेहं सुमृजामदं च।
शुक्रो ऽङ्गनास्वामिनमिष्टदार-
    मल्पात्मजं गीतरतिप्रहृष्टम्॥६॥
रतिप्रगल्भं प्रियमूर्तिदारं
    बुधो ऽध्वशीलं कथकत्थनार्थम्।
कुवृत्तिसन्दूषितजातिमारो
    रुगार्तिवन्तं कृशशोकतप्तम्॥७॥
सौरः श्रमव्याधिधनव्ययार्तं
    वीर्यप्रकृष्टान्यवधूमतिं च।
पापाश्रिते स्वाम्यवलोक्यहीने
    जामित्रगे स्यादनवाप्तदारः॥८॥
सप्त⟨मः⟩॥
कर्मस्वभिख्यातफले(षु) वेषः
    स्वधर्मयुक्तेष्वगुरुश्रमे(षु)।
संवर्धते संस्थितमानसौ(स्यं)
    मेषूरणे यस्य बृहस्पतिः स्यात्॥९॥
शुक्रो ऽङ्गनापण्यगृहाश्रयेषु
    गोक्षेत्रकृष्यादिसमृद्धिकृत् स्यात्।
सुस्फीतकोशं स्थिरतां च दद्यात्
    पूजां कुले वृद्धिमङ्गनासु॥१०॥

Apparatus

5a कुर्याद्यन° N    7d रुगार्तिवित्तं N    कृतशोक° N
8c पापामृते N    स्वौम्य° N    8d स्याम्यनवाप्त-
दारं N    col. no space in N    9a देषः N    9b
मधर्म° N    10d °मङ्गनेषु N

25, 11–15

बुधे तु शिल्पश्रुतिलेख्यपाठ-
मन्त्रार्थसेवाश्रयकर्मसिद्धिः।
भवेदनल्पव्ययसंचयश्च
प्राप्नोति मानं श्रुतिशिल्पविद्भ्यः॥११॥
चन्द्रे तु मध्ये ऽध्वरतिप्रगीत-
नारीवनोद्यानजलाश्रयासु।
सिद्धिः क्रियास्वव्रतपूर्णकोशः
प्राज्ञो द्विजस्त्रीनृपलब्धमानः॥१२॥
सूर्ये नरो ऽग्न्यौषधतैलकाष्ठ-
राजोपसेवापशुपालनेषु।
प्रसिद्ध्यते कर्मसु भ्रष्टशोकः
प्रधानकृत्यो लभते (तु) मानम्॥१३॥
कुजे नृपद्रोहविषाग्निशस्त्र-
वैर्याभिघाताहवचौर्यसिद्धिः।
पुनः पुनः सम्भृतनष्टकोशो
भवेत् सपत्नारिभिरर्दितश्च॥१४॥
सौरे तु भाराश्रमगो ऽध्वरक्तो
भृत्याधिनीचाश्रयकर्मसिद्धिः।
प्राग्नष्टवार्द्धक्यविवृद्धको⟨शो⟩
f.37v भवेत् समृद्धस्तु विशब्दितश्च॥१५॥
दशमः॥

Apparatus

11a °पाठा° N   11b °सेव्यः श्रयसत्रसिद्धिः N   11c °संचयं च N   12a चित्रे N   12d प्राज्ञं N   13c नृष्टशोकः N   14b °बैर्यभि° N   14d सपत्नैनभि° N   15c भृत्यधिव° N   15c °वार्द्धिक्य° N   no space in N   15d समृद्धै तु N   विशब्दितं च N

25, 16–20

मिथ्यापि कर्मर्क्षगते ग्र⟨हे⟩न्द्रे
    कर्माणि पुंसामपरिश्रमेण ।
तत्तद्गृहे कर्मगृहांशकेषु
    स्वभावजा कर्मनिरुक्तिरिष्टा ॥१६॥
एषामनिष्टाः स्वगृहांशकस्था
    मित्राणि सद्दर्शनसङ्गमैश्च ।
भवन्ति निर्दिष्टशुभाशुभानां
    विपर्ययात् कालवशात् फलानाम् ॥१७॥
पापैर्युतं कर्म ⟨नि⟩रीक्षितं वा
    तैरेव स्वाम्याश्रयदृष्टिहीनम् ।
येषां भवेज्जन्मनि ते ऽल्पपुण्या
    भवन्ति नित्यं भृतजीविनश्च ॥१८॥
कर्मर्क्षगेष्वर्ककुजासितेषु
    यथा प्रधानादिगुणाश्रयेषु ।
प्रधानमध्यान्त्यकृतिप्रवृत्तिः
    सौम्येषु तद्वच्च विपर्ययः स्यात् ॥१९॥
नीचर्क्षभांशे ऽरिगृहांशके वा
    कर्मर्क्षसंस्था जनयन्ति दासम् ।
तत्स्थो गतों ऽशेषु धनाप्तिदः स्याद्
    द्रेक्केश्वरो वापि दधाति पुंसाम् ॥२०॥

Apparatus

16a मिथ्यान्ति N  कर्मर्क्षगतौ तुल्यं N  16d कर्मणि भक्तिरिष्टा N  17a एषामनिष्टे N  18d °जीविनं च N  19a °ष्वर्क्षकुजा° N  19b प्रधानर्क्षगुणा° N  19c °भृति° N  20a नीचार्क्ष° N  20c पपन्तिद N

25, 21-23

सूर्यो ऽन्यदेशान्तरविक्रयेण
    चन्द्रस्तु गर्भस्थितिवेषदः स्यात्।
जीवो ऽभयारक्षिकमर्थिनं वा
    बुधस्तु वाक्यैरनयापराधैः॥२१॥
नियोगभङ्गं वनितार्थिनं वा
    शुक्रः कुजः सैन्यबलावकृष्टम्।
अनादिदुःखोपहतं च सौर-
    स्तत्स्थानबन्धेषु वयःस रोगाः॥२२॥
स्वांशे स्वभे स्वागतकर्मसिद्धिं
    स्वोच्चे तु कुर्वन्ति शुभाविरोधम्।
पापास्तथोत्कर्षफलापकर्षै-
    र्यथा विधानेषु नियोजयन्ति॥२३॥
〈यवनजातके〉 लग्नचन्द्रयोश्चतुष्टयभागः॥

Testimonia

21-22 equal Jātakasāradīpa 48,97-98.

Apparatus

21a न्यदेशं नरविक्रयेण J  21b चन्द्रसर्ग° J  °दोषदासं N, °दासभावं ति J  21c जीवेन भद्रावत° J  °मर्थतो JN  21d स्वच्यत्स J  वाक्यामनयापरागैः N, वाक्योपचयासराधैः J  22a °भग्नं J  वाननात्थवे N, वनितार्थतो J  22b सैन्यबला × कृष्टं J  22c अनाद्य° J  22d °स्तत्स्थानबन्धेषु वयो तु रागाः N, °स्तथा तथैतेषु च यो विपाकः J  23a स्वभे] स्ववत् N  23b °विरौषं N  col. no space in N लग्नचन्द्रयोगश्च° N

26,1-5

होराकुटुम्बे (ऽस्मा)धनाधिकारं
    रविः प्रसूते पुरुषं निकृष्टम्।
निशाकरः स्थानगुणैः समानं
    पूर्णोऽपि वित्तं शुभवीक्षितस्य ॥१॥
जीवः सुसम्पन्नजनार्थपूज्यं
    शुक्रो बहुस्त्रीसुभगं धनाढ्यम्।
बुधः स्थिरद्रव्यजनोपपन्नं
    भौमो दरिद्रं कुजनाश्रयं वा ॥२॥
शनैश्चरो निर्धनसंनिवेशं
    क्रियास्वनाधारजनं च सूते।
स्वस्वामिसौम्येक्षणवर्जिते तु
f. 38 पापाश्रिते स्याद्धानिः सदैव ॥३॥ कुटुम्बः ॥
दुश्चिक्यसंस्थो जितदुष्टपक्षं
    सूते रविर्लोकमनोऽभिरामम्।
चन्द्रो मदासक्तमजस्रशोकं
    प्रकांक्षितभ्रातृजनार्चितं च ॥४॥
गुरुर्यशस्कं विजितापवादं
    विशिष्टतल्पं गुरुसंमतं च।
शुक्रो गवीशं सहजावधूतं
    बुधः परभ्रातृजनप्रियं च ॥५॥

Apparatus

1b निविष्टं N 1d °वीक्षितं च N 2a जीवः] शुक्रः N
3c °वर्जितेषु N 3d स्याद्° N 4c °जस्रलोकं N
4d °जनाश्रितं N 5b °तुल्योद्भवसंमतं N 5c
गवीस N

26,6–10

सौम्यो शुचिं ख्यातकरं मदाढ्यं
नेतारमाधारमनात्म(जं) च।
सौरो गुणैः स्वै(र्वि)(रि)हतं यशस्कं
प्रहृष्टसद्वृत्तमवाप्तपत्नम् ॥६॥ दृष्टिवाक्यः॥
सूर्यः प्रजाबन्धुकृतापराधं
पृथक्त्रिकोणे जनयत्यधीरम्।
चन्द्रो ऽरिमित्रव्यसनापकारं
प्रणष्टमित्रात्मजमप्रधानम् ॥७॥
शुक्रो ऽङ्गनापानकृतापराधं
कन्याप्रजं प्राद्विषशान्तवैरम्।
धीरं गुरुः सुप्रजमप्रधृष्यं
बुधो ऽप्रजं बालकृतागमं च ॥८॥
अङ्गारकः सत्त्वबलैरुपेत-
मनेकलब्धव्यसनं सुताढ्यम्।
परात्मजं धीरमसद्गुणैः स्वै-
रनेकशः शिष्टितदेहमार्किः ॥९॥
सौरार्कसौम्यैकतराश्रिते तु
तद्वीक्षिते तुङ्गगृहप्रयोगे।
एषां गृहस्थे च कुजे ऽल्पवीर्ये
समुद्भवं कीर्तितमप्रजानाम् ॥१०॥

Testimonia

10–11 equal Jātakasāradīpa 43,3–4.

Apparatus

6a मदाह्यं N 6b नोतार° N °समान(जं) N 6d °सममाप्तपत्नं N 7c °पचारं N 7d प्रधीरं N 9a सत्त्वव्यन्यपर्ययै° N 9b °रनेक° N 9c °सङ्गुणैः N 10a सूर्यार्किसौम्यै° J तु] से J 10b तद्वीक्षिते J तद्गृहभागयोगः J 10d समुद्भवः कार्तित आप्रजानां J

26, 11–14

नीचारि—ांशोपगते जिते स्यात्
क्षीणे कुजे जन्म मृतप्रजानाम्।
शुक्रेन्दु—.स्थे च मृतप्रजानां
मेषांशकस्थे तु मृतप्रजानाम् ॥११॥ पंचमः ॥
षष्ठाश्रितो ऽर्को विषशस्त्रदाह-
हृद्रोगशत्रुव्यसनोपतप्तान्।
काष्ठाश्मघातैश्च विशीर्णदन्ता(न्)
सूते ऽटवीदंष्ट्रिनखिक्षतांश्च ॥१२॥
देवोदरेणामयजैर्वि—ावै-
श्चन्द्रो ऽम्बुजैर्वाप्युपतप्तदेहान्।
स एव शोषक्षयमृत्युदः स्या-
दत्रैव सूर्येण विमिश्रमूर्तिः ॥१३॥
झषांशके मेषमृगांशके वा
चन्द्रः स्थितो ऽत्रैव हि पापदृष्टः।
किलासकुष्ठादिविनष्टदेह-
मिष्टेक्षितः कण्डुविकारिणं तु ॥१४॥

Testimonia

12–19 equal Jātakasāradīpa 44,3–10. 12 is quoted by Utpala on Bṛhajjātaka 20,2.

Apparatus

11b क्षीणे] काव्ये J   11c सुकेन्द्र° N   °२—.स्थस्थे च N, °२—स्ते च J   सुतप्रजानां J   11d °स्थेषु N   शेषांशक° J   सुतप्रजानां J   12b °हृद्वीप° J   °तप्तं JU   12c °वातोद्वी° N, °पातौघ° U, °घातादि—° J   वशीन° N   12d यूने U   ढवी° N, ऽटवा° J   °ठंपि° N   °नख° JN   °क्षस्वंश्च N   13a जलोदरेणामथ जैविकारै° J   13b बुध—ैर्वाप्यु x तप्तदेहं J   13c नोपाक्षप° N, शोपक्षय° J   °मृत्युकृत् J   14a मेषांशके N, मीनांशके J   मेषगृहांशके J   14d मिष्टीक्षितः कुन्द° J   च J

26, 15–18

f. 38v K(कुं)—नांशके कर्कटवृश्चिकांशे
कुजेक्षितो गुह्यरुगर्दिताङ्गम्।
सौरेक्षितो मारुतशोणितार्तिं
हृद्रोगिनं सूर्यगृहांशकस्थः ॥१५॥
शस्त्रप्रहाराग्निरुगार्तिदाह-
प्रतप्तमिन्दुः क्षितिसूनुयुक्तः।
सौरेण षष्ठे तु विमिश्रमूर्ति-
र्निहन्ति वाताश्मचतुष्पदाद्यैः ॥१६॥
कुजो ऽग्न्यसृक्छस्त्रपरिक्षताङ्गं
कुव्याधि—तं द्विड्यकर्षितं च।
सौरः शराश्मासिनिपातवातं-
द्विमुष्टिघातोपहतं च कुर्यात् ॥१७॥
बुध—ः क्षतप्रस्खलितप्रयातं
लोष्टाहताङ्गं जिनविद्विषं च।
क्षान्तं रिपुद्विष—य(प्र)सक्तं
प्रस्त्रस्तदेहं —गुसूनुजीवौ ॥१८॥

Testimonia

17 is quoted by Utpala on Bṛhajjātaka 20, 2.

Apparatus

15a x—सवे N, षष्ठे स चेद् J   वृश्चिककर्कटांशे J   15b शौरक्षितो J   °शोणितार्थं J   16a शस्न° J   °रुगर्त्ति° N, °रुगग्नि° J   17a गतस्तत्र U   °क्षितांगं N, °क्षतांगं JU   17b द्रु—व्याधि—तं धि—कृतिकर्शितं च U, द्रुग्याबन च xxxxxxx J   °कर्षितां N   17c शिरोश्मास° N, शिरोश्माश° U, शिरोश्मानि° J   °पातवात° NU, बापाता J   17d °द्विद्माष्टि° N, °द्विमुष्टि° U, °द्वि—तुज्य° J   °पापोपहतं J   18a बुधोक्षितः N   क्षितिप्रसक्षितप्रताप J   18b जित° JN   18c स्यातं J   °—वप्रसक्त J   18d प्रस्वस्य° JN

26, 19–23

त्रिकोणकेन्द्रोपगतैस्तु सौम्यैः
　　पापं यथोक्तं विनिवर्त्तयन्ति।
पापा हितं तद्वृषभांशसंस्थाः
　　कुर्वन्ति मृत्युं विकलार्थतां च॥१९॥ षष्ठः॥
व्याधैर्विबद्धक्षतकर्षिताङ्गं
　　चन्द्रो ऽष्टमे ऽनिष्टतरं त्वतो ऽर्कः।
विषाग्निशस्त्रव्रणिताङ्गमारः
　　सौरो बहुव्याधिहतं प्रसूते॥२०॥
अशोकिनां व्याधिविवर्जितानां
　　प्रीतिप्रसादस्थिरमोददानाम्।
दीर्घ(ायु)षां भार्गवसौम्यजीवाः
　　कुर्वन्ति जन्माष्टमराशिसंस्थाः॥२१॥
पापांशके पापगृहे निविष्टाः
　　पापास्त पापैरवलोकिताश्च।
शुभैरकेन्द्रर्क्षत्रिकोणगैर्वा
　　दृष्टा हिनस्त्यायुररोगतां च॥२२॥ अष्टमः॥
सूर्यः पितृद्वेषिणमल्पदानं
　　चन्द्रस्तपःस्थं घृणिनं प्रशान्तम्।
पापप्रवृत्तं शुभविप्रयुक्तं
　　सौरावनेयौ विविधागमं च॥२३॥

Apparatus

19a °गतास्तु सौम्याः J　19b युधोक्तं N　19c पापं हि तत्तद्वृष° N, पापेक्षितास्ते त्वशु° J　19d विकलांगतां वा J　20a व्याधिं विबन्धा° N　20b निष्टितमं N　20c विशाग्नि° N　21b °मोह° N　21c no space in N　22b पापोग्रपापै° N　22c °तृकोण° N　22d °स्त्यासुररोगताश्च N

26,24–29

यज्ञादिकर्माभिरतं च जीव-
स्तपस्विनं ध्यानरतं च सौम्यः ।
शुक्रस्तु भूम्यन्नहिरण्यगोश्व-
प्रवृत्तदानं नवमे प्रसूते ॥२४॥ नवमः ॥
एकादशे ऽर्को नृपनष्टकोशं
प्रत्यायजीवं रविजो निरर्थम् ।
कुजो ऽग्निचौरक्षतमिन्दुरत्र
क्षेत्रांशकस्वामिसमानवित्तम् ॥२५॥
गुरुर्द्वि<ज>
f. 39 स्मरान्नगोवस्त्रधनं च शुक्रः ।
बुधस्तु मन्त्रश्रुतिशिल्पसेवा-
नैपुण्यदाक्ष्यद्रविणं प्रसूते ॥२६॥ एकादशः ॥
सूर्यः परप्रेष्यजितप्रचेष्टं
नष्टावसव्याक्षमनात्मभावम् ।
चन्द्रो ऽलसं सव्यपरिक्षताक्ष-
मत्याशिनं द्वादशगः प्रसूते ॥२७॥
बह्व्ययायासमधर्मचेष्टं
कुजो ऽर्के(जो) ध्वंसितमप्रचेष्टम् ।
गुरुस्तु धर्मव्ययमल्पचर्यं
रतिव्ययं चानलसं च शुक्रः ॥२८॥
बुधः सदा मि(त्र)जनव्ययेषु
सन्तप्यमानं त्वरितप्रचेष्टम् ।
स्वं स्वं च यच्चास्य शुभेषु तत्तद्
भावेषु दद्याद्व्यसनं सदापि ॥२९॥<द्वादशः ॥>
यवनजातके कुटुम्बादिभावफलम् ॥

Apparatus

25a °नष्टशेषं N   25c कुजे N   °भिन्दुवित्तः N   25d °वित्तः N   26a in tear in N   26b स्मत्ररत्नगोदस्त° N   °धनं च ध'नं चं N   26d परेस्वः N   27a °प्रेष्यजन° N   28b र्के(क) ध्वानिकममप्रचेष्टं N   29c सतेषु N   29d °द्वसणं चदापि N   col. no space in N

27,1-5

मूर्त्यादिषु द्वादशको गणो ऽयं
भावेषु वाच्यो गृहसङ्गतश्च ।
मूर्तौ तु होरादि शिरःप्रभृति
अस्यैव देहावयवेषु वाच्यम् ॥१॥
चक्राधियोरेष समुद्धृतं च
सव्यापसव्यं त्रितयं विदित्वा ।
स्वक्षेत्रयोगाद्रसना रवीन्द्वो-
र्भमण्डले घ्राणपुटौ बुधस्य ॥२॥
गण्डौ भृगोर्भूमिसुतस्य नेत्रे
कर्णौ गुरोरर्कसुतस्य शीर्षः ।
॥३॥
एते विवृत्ता निधनारिभावे
पापार्दिता भावपतौ हते वा ।
देहेषु निघ्नन्ति यदाशुभाः स्यु-
र्यस्यैव कुर्वन्त्यनवद्यतां च ॥४॥
होरादिवर्गैरपि देहभागाः
सव्यापसव्यानुदितोदितैश्च ।
अपक्रमानुक्रमतः प्रसाध्य
भमण्डलाजस्रगतिक्रमेण ॥५॥

Apparatus

1a सूर्यादिषु N 1b ग्रह° N 1c °प्रविर्ति N 1d देहावयवाषु वाच्या N 2a समुद्धृतेश्च N 2c °द्रसनी रवीन्द्रो N 2d घ्राणप्रटो N 3c–d no space in N 4a °भागे N 4b पापार्द्दिता N 4c निघ्नंत्य N यदासुभा N 4c–d सुर्यस्त्येव N 5a °वर्गैरिषि N °भास N 5b °व्याहृदितोदितैष्यै: N

27,6–9

होरा: शिर:कण्ठकटिप्रवृत्ता-
स्तथास्यना–ीचरणाश्रयान्त्या:।
द्रेकाश्रया द्वन्द्विन एव पंच
व्यवस्थितान्येष्वितरेतरेषु ॥६॥
श्रोत्रे दृशौ घ्राणपुटौ कपोलौ
हनुद्वयं च प्रथमाङ्ग–ेट:।
अंसौ –जौ हृज्जठरे च पार्श्वौ
कुक्षिद्वयं चैत्यपराङ्ग–ाग:॥७॥
सपायुमेढ्रं वृषणावथोरू
जानुद्वयं द्वे च तथैव जंघे।
देहाश्रयं यद्वि हि⟨तं⟩
f. 39v |गुणात्मकै द्रेकफलैश्च वाच्यम् ॥८॥
कुर्वन्ति देहावयवेष्वनि(ष्टा)
रोगाव्रताध्मातकृतान् विकारान्।
शु–ास्तु सौ–ाग्यविशुद्धपुष्टि-
स्वलक्षणोत्पत्तिकरा ग्रहा: स्यु:॥९॥
⟨यवनजातके⟩ द्रेकाणशिरोदि–ङ्ग:॥

Apparatus

6a °कंचकवि° N 6b °यान्त्यं N 6c द्वन्द्वाश्रया N 7a घ्रान्तपुटौ N 7d °–ाव: N 8c देहाश्रया N in tear in N 8d °द्वैषफलैश्च N 9a °नि(ष्टा)न् N 9b विकार्य: N 9c °सुष्टि° N col. no space in N °शिरदि–ाग: N

28, 1-5

अर्धा(र्ध)होरादिगुणो विकीर्णो
ऽनेकस्वभावाकृ(तिवर्ण)चिह्नः ।
†मन्तन्व
नोपमिषिं† भुवनैकधातुः ॥१॥
अन्तः सदास्याकृतिलक्षणानां
समानसत्त्वस्थितिलिङ्गमूर्तिः ।
बिम्बानुबिम्बप्रतिमास्थितो ऽय-
मुत्पद्यतीत्यस्ववसौ नृलोके ॥२॥
राश्यर्धभागाश्चतुराहृताः षट्
होरा रवीन्द्वोरथ तत्प्रणीत्या ।
सानुग्रहा याः स्थितिसत्त्वरूपै-
र्वेद्ये नृणां जन्मफलाश्रयास्ताः ॥३॥
ओजेषु पूर्वा भवनेषु होरा
बिभर्ति युग्मेष्वपराश्च सूर्यः ।
शेषाः शशी तत्स्थितिदर्शनाभ्यां
होरापतौ केन्द्रगते फलं स्यात् ॥४॥
रक्तोत्कटाक्षः शुकनासिकाग्रः
पीनोन्नतो दाररतः प्रचण्डः ।
शूरो धनी तस्करनायको वा
मेषादिभागे प्रभवो नरः स्यात् ॥५॥

Testimonia

With this chapter compare Sārāvalī 48.

Apparatus

1a अर्धार्धी × होरा° N 1b नैकस्वभावाक्ष° N
2a सदस्यात् N 2c °प्रतिमस्थितो N 3c
षान्तिग्रहा N 3d °स्तान् N 5a शुक्ल K 5d
प्रसवो N

28,6–11

गौरो बिलासी पृथुपीनमूर्तिः
  खरोग्रपादाङ्गुलिरङ्गनाढ्यः।
स्निग्धायताक्षश्चतुरः सुमेधा
  मेषे ऽपरायां भवने प्रसूतः॥६॥१॥
श्यामो विशालाक्षिललाटवक्षाः
  स्थूलास्थिदेहो रतिपानवश्यः।
कामी प्रगल्भो ऽल्पकथो वपुष्मान्
  सूतो वृषस्य प्रथमार्धभागे॥७॥
पृथ्वायतश्रीवसुदारशब्द-
  मुद्वृत्तविस्तीर्णसुमध्यमूर्तिम्।
सुमूर्धजं व्यस्तकटिं वृषाक्षिं
  वृषे ऽपरार्धे प्रभवं वदन्ति॥८॥२॥
मध्वायताक्षस्तनुमध्यमूर्तिः
  सुर्वंसवक्षा मृदुकेशपादः।
शूरो वचस्वी सुरतस्मराढ्यः
  पूर्वार्धजः स्यान्मतिमान् तृतीये॥९॥
कामी सुमेधा मधुरायताक्षः
  शूरो मृदुर्वल्गुकथो वचस्वी।
f.40 |चार्विष्टदन्तः समभारुदेह-
  स्तृतीयराशावपरार्धजः स्यात्॥१०॥३॥
उद्वृत्तमूर्तिः सुशिराः प्रगल्भ-
  स्तनुस्वनः श्यामतनुश्चलात्मा।
शठः कृतघ्नः कृपणश्चतुर्थे
  भग्नाङ्गदेहः प्रथमांशजः स्यात्॥११॥

Apparatus

6c श्रमेधा N, सुमेधा K   6d प्रसूते N   7b स्थूलाक्षि° N, स्थूलास्थि K   7d सूतो] गृदे N   8b °सद्वृत्त° N   9a मध्यायत K   9b श्वर्वांस° N   9c सुतरेस्मराढ्यः N, सुरतेप्स K   10a स्वमेधा N   °यस्वक्षः N, आयताक्ष K   10d °राशाव° N   11a उद्वृतमूर्ति K

28, 12–16

हृयायनः पाथ्यसुखाभिवृद्धः
श्यामो धनाढ्यस्तनुरल्परोमा।
विस्तीर्णवक्षः कितवो ऽधवशीलः
परार्धजः कर्किणि नीचजश्च ॥१२॥४॥
निम्नस्वभावः स्थितिसत्त्वकर्मा
रक्तान्तदृग्दुःप्रसहः प्रगल्भः।
क्रोधी गुरुव्यायतदृप्तदेहः
प्रागर्धजो ऽन्ते सुखभाक् च सिंहे ॥१३॥
स्त्रीमृष्टपानाम्बरभोजनेप्सु-
हृतार्थभागी स्थिरसौहृदश्च।
बाह्वादिचेष्टः कठिनाङ्गपृष्ठः
सिंहे ऽपरार्धे ऽल्पजनो न(रः) स्यात् ॥१४॥५॥
कान्तः सुवाक्यः सुकुमारमूर्तिः
स्त्रीगीतगान्धर्वरतिप्रियश्च।
शिल्पश्रुतज्ञो मृदु(दृ)ग्विनीतः
पूर्वार्धजः स्यान्मधुरश्च षष्ठे ॥१५॥
ह्रस्वो ऽटनः स्थूलशिराः श्रुतार्थो
गान्धर्वसेवालिपिलेख्यचित्रः।
यज्ञैर्विषादी व्ययवृद्धिभाक् च
षष्ठे सुखी स्यात्परार्धजो ऽन्ते ॥१६॥६॥

Apparatus

12a हृयायतप्राय° N 12b °स्तनुस्वल्प° N 12c पृथुवक्षाः K 12d रीषजश्च N 13a °कर्म N 13b °दृग्दुष्प्रसहः N 14b °हृताध्व° N शिरसौहृदश्च N, स्थिरसौहृद K 14c बह्वादि° N बहुविचेष्ट K °पष्टः N 14d ऽल्पजमान(वः) N 15a सव्यवचः N, सुवाक्य K 15b °गन्धर्व° N 15c °(दृ)र्विनीतः N

28, 17–22

वृत्तानन(स्तू)ऽनसो विलासी
क्रियापटुश्चार्वसितायताक्षः।
पीनास्थिसारोऽयतमूर्तिराढ्यः
पूर्वे तुलार्धे स्वजनप्रियश्च ॥१७॥
बह्वर्थभागी स्थिरसत्त्ववृत्तः
श्यामः शठः कुञ्चितमूर्धजश्च।
[illegible]भाग्रपादः परिमण्डलाक्षः
स्याच्छिन्नमानित् सप्तमपश्चिमार्धे ॥१८॥७॥
रक्तान्तपिङ्गोग्रदृगुग्रकर्मा
रणोत्कटः साहसिको वपुष्मान्।
दुष्टस्वभावो युवतीष्वशान्तः
स्यादर्थभागोऽष्टमपूर्वभागे ॥१९॥
विस्तीर्णपीनोपचितायताङ्गो
रक्तस्फटाक्षः क्षितिपोपसेवी।
अमूर्धजो बह्वृणभाक् ग्रहृता
कीटापरार्धे बहुमित्रभाक् च ॥२०॥८॥
विदारितास्यः पृथुवक्त्रवक्षाः
स(घ्राण)गण्डः पृथुकुञ्चि(त)ाक्षः।
f.40v ⟨बाल्ये⟩ वियुक्तात्मगुरुस्तपस्वी
जातो भवेद्धन्विनि पूर्वभागे ॥२१॥
पद्मायताक्षो गुरुदीर्घबाहुः
शास्त्रार्थविद्वान् सुभगः सुमूर्तिः।
धर्मार्थभागी निवृतो यशस्वी
स्यात् पश्चिमार्धे नवमस्य जातः ॥२२॥९॥

Apparatus

17a वृत्तानुर ×ऽनसो N, वृत्तानन उऽनस K 17b °श्चार्वसितायस्वक्ष: N, असितायतसुनयन K 17d °प्रियाश्च N 18a °वित्तः N 19b रणोकटाः N 20d °भाक्य N 21a विदारितस्य N परिकुञ्चितनेत्रगण्ड K 21c बाल्ये K 21d भवेद्धवनि N 22b शास्त्रास्त्र° N, शास्त्रार्थ° K 22c नृभृतो N, निर्वृत K

28, 23–28

श्यामो मृगाक्ष(स्तनु)तुङ्गनासो
    मृदुः शठः सौम्यवपुः ⟨सुवेशः⟩।
मृष्टान्नधन्यो धन(न्भूषणाढ्यः
    पूर्वा)र्धजः स्त्रीष्वजितो मृगास्ये ॥२३॥
रक्तान्तचक्षुस्तनुदीर्घमूर्तिः
    श्यामोऽलसः साहसरौद्रकर्मा ।
स्त्रीमित्रभागः स्थिरसत्त्ववृत्तो
    मृगापरार्धे रतिचंचलः स्यात् ॥२४॥१०॥
रक्तोत्पलाक्षः स्थिरमित्रसत्त्व-
    स्ताम्रप्रभासच्छविरल्पपुत्रः ।
शूरोऽलसः पानमतिर्विकर्मा
    कुम्भादिभागेऽगुणवान् प्रसूतः ॥२५॥
ताम्राक्षतस्तब्धविदारिताक्षः
    कृशोऽसितो व्यङ्गतनुर्विषादी ।
शठोऽलसो नैकृतिको निरुक्तः
    कुम्भापरार्धे कृपणः प्रसूतः ॥२६॥११॥
महाल्ललाटः पृथु(वक्त्रवक्षा
    ह्रस्वः पृथु)र्व्यायतचारुमूर्तिः ।
क्रियापटुः स्त्रीदयितो यशस्वी
    शूरोऽन्त्यराशिप्रथमार्धजः स्यात् ॥२७॥
स्थिरः सुमेधा निपुणः प्रदाता
    चार्वायतोपाङ्गदृगुच्चघोणः ।
नृपप्रियः स्त्रीसुभगः सुवाक्यो
    मीनेऽपरार्धे शुभदः प्रसूतः ॥२८॥१२॥

Apparatus

23a मृगास्यस्तुङ्गनसो N, मृगाक्ष . . . तनूच्चघोण K
23b सुचेष्ट (var. सुवेष) K    23c मृष्टान्नोद्धान्य N
25d प्रसूते N    26a ताम्रोक्षता° N, आताम्रदारि-
ताक्ष K    26d प्रसूते N    28d सुभगः प्रसूते N

28,29

चन्द्रार्कयोरेकतरे बलस्थे
होरापतौ पश्यति केन्द्रगे वा।
होरा यथोद्दिष्टफलप्रदाता
स्याद्ग्रहर्सिंस्थास्तु समुद्भवे च ॥२९॥
<यवनजातके> होराफलम् ॥

Testimonia

29 equals Sārāvalī 48,25.

Apparatus

29b होरापते N, होरापति: K केन्द्रगो K 29c-d °प्रदा स्याद्ग्रहर्स्थसत्वस्य समुद्भवेषु K col. no space in N

29,1-5

राशित्रिभागं यवनाख्यया यं
    द्रेक्काणमाद्याः प्रवदन्ति सर्वम्।
षट् षड्गुणान् जन्मसमाश्रयांस्तान्
    गृहात्मकैरात्मगुणैश्च वक्ष्ये ॥१॥
आद्यस्य भागे प्रथमे त्रिभागे
    दाता प्रहर्ता प्रियविग्रहश्च।
व्ययोदयः स्यात् समरप्रचण्डो
    दीप्तः स्वबन्धुष्वपि योगदण्डः ॥२॥
स्त्रीचं(च)लः स्यात् सुरतिर्मनस्वी
f. ४१    सुवाग्विहारी प्रियनृत्तगीतः।
स्त्रीवित्तभाक् चाध्वरुचिः सुरूपो
    मित्रार्थभागी च भवेद्द्वितीये ॥३॥
गुणप्रधानः परदारगामी
    धर्माभिकांक्षी बलसत्त्वयुक्तः।
प्रियादरक्षः स्वजनप्रियश्च
    स्याद्राजसेवी च तृतीयभागे ॥४॥ मेषः ॥
आद्ये वृषस्य प्रियपानभोज्यो
    नारीवियो(ऽगो) व्यसनापतप्तः।
गीतप्रियः स्त्रीप्रकृतानुसारी
    वस्त्रेष्वलङ्कारविधौ च युक्तः ॥५॥

Testimonia

With this chapter compare Sārāvalī 49.

Apparatus

1a °त्रिभागा N    ये N    1d ग्रहा° N    2c स्यन् N
3b विहारी K    3c स्वरूपो N, सुरूप K    4a परदोष-
गामी N, परदोषकर K    4c प्रियादरो ऽक्ष K    5a
प्रियदान° N, प्रियपान K    5b नारीवियोगतप्त K

28,6–11

महाधन: सौम्यवपु: सुरूपो
भोक्ता रतिस्नानविभूषणेप्सु:।
स्थिरस्वभावो बलवान् मनस्वी
लुब्धो रतिस्त्रीसुभगो द्वितीये ॥६॥
चरस्थिरात्मा चतुरो ऽल्पभाग्यो
धीरश्च भीमश्च मलीमसश्च।
धनान्युपादाय विनाश्य पश्चात्
सन्तप्यते स्वैरशुभैस्तृतीये ॥७॥ वृष:॥
आद्ये तृतीयस्य पृथूत्तमाङ्गो
धनान्वित: कृत्यकरो गुणानाम्।
प्रांशुर्विलासी नृपलब्धमान:
कलाविधिज्ञ: कितवो यशस्वी ॥८॥
ह्रस्वानन: सूक्ष्मशिरोरुहाग्र:
सुरूपवान् सौम्यवपुर्मृदुश्च।
भागे द्वितीये मिथुनस्य धन्यो
महामतिस्तुल्ययश:प्रताप:॥९॥
महाशिरो रूक्षनखाग्रपाद:
स्निग्धेक्षण: प्रांशुतनुर्वपुष्मान्।
उद्वृत्तगात्र: परुषश्चरार्थ-
स्तृतीयभागे नृभृतो ऽटनश्च ॥१०॥ मिथुन:॥
देवद्विजातिप्रणतश्चरात्मा
गौर: सधी: कृत्यकर: परेषाम्।
कान्त: समूर्ति: सुभगो ऽङ्गनासु
बहुप्रज्ञ: कर्कटकादिभागे ॥११॥

Apparatus

7b वीर K 8a आद्यस्तृती° N 10a °नचा° N, नख K 11d कार्टककादि° N

29, 12–17

लुब्धो धनी दानधनाभिमानी
स्वप्नप्रियः स्त्रीविजितः स्थिरात्मा।
विशालगामी सहजान्वितश्च
द्वितीयभागे बहुरुक् यतुर्थे ॥१२॥
विदेशगामी परतोऽर्थभागी
धर्मप्रकांक्षी विषमावलोकी।
f. 41v स्त्रीचंचलः काननतोय(से)वी
प्रियासवो माल्यरतिस्तृतीये ॥१३॥ कर्कटः॥
दाता प्रहर्ता रि(पु)निर्जिगीषु-
र्नृपोपसेवी बहुवित्तयोषित्।
स्वप्नाभिलासी विविधाधिगामी
सिंहादिभागे स्थिरमित्रबन्धुः ॥१४॥
विस्तीर्णमेधाः सुखभाग्गुरुः
कामी वपुष्मान् श्रुतिधर्मविच्च।
दाता स्थिरो माल्यविभूषणेप्सु-
र्द्वितीयभागे द्रविणप्रियश्च ॥१५॥
लुब्धस्तनुर्व्यायतगात्रयष्टिः
स्तब्धः परस्वाहरणे समर्थः।
महामतिर्नैकसुतः प्रगल्भः
स्त्रीणामनिष्टः कितवस्तृतीये ॥१६॥ सिंहः॥
श्यामो मधुस्निग्धदृगिष्टयोषित्
प्रांशुः सुवाग्मी सुकुमारमूर्तिः।
षष्ठादिभागे मधुरो विनीतः
स्त्रीभ्योऽर्थभाग्दीर्घशिरोधरश्च ॥१७॥

Apparatus

12a दानपाराभि° N    16b °स्वहरणे NK    16d स्त्रीनात्मनिष्टः N    17b सुवांछि N, सुवाग् K

29, 18–23

धीरः कलाशिल्पकथाभिरामो
विदेशगामी समरेष्वधृष्यः।
वनौकसां तुल्यगतिर्विलासी
वाचालको ऽर्थी श्रुतवाग् द्वितीये॥१८॥
परार्थभागी रतिगीतवश्य-
स्त्यागी नरेन्द्राभिरतः सुरूपः।
ह्रस्वः सुवेशः पृथुदृक्शिरस्क-
स्तृती(य)भागे ऽनतचारुमूर्तिः॥१९॥ कन्या॥
श्यामः कलापण्यनियोगधीरः
कन्दर्परूपो निपुणः सुमेधाः।
सेवाधवशीलश्च तुलादिभागे
चण्डो भवेन्मन्त्रविशारदश्च॥२०॥
सुरूपवाक् पद्मविशालनेत्रः
ख्यातः स्ववंशार्जितवृद्धिधारी।
प्रियप्रहासः कटुकप्रचारी
तुलाद्वितीये नृपतेः सखा वा॥२१॥
शठः कृतघ्नश्चपलो विरूपो
जिह्मोपचारस्तनुकृष्णमूर्तिः।
प्रणष्टमित्रो द्रविणार्थभागी
तुलातृतीये ऽल्पमतिर्नरः स्यात्॥२२॥ तुला॥
गौरः स्थिरः स्थूलविशालगात्रो
रणोत्कटो रक्तविशालनेत्रः।
कलिप्रियः शास्त्रविशारदात्मा
भवेत् प्रचण्डो ऽष्टमपूर्वभागे॥२३॥

Apparatus

18a कथाशिल्पकथा° N   18d वाचालुके N, वाचाट K र्थो N   19c °दिक्° N, दृक् K   19d no space in N   21a धर्मविशाल° N, पङ्कजविशाल K   21b स्ववंशोदितवृत्तधारी N, स्ववंशवर्धितवृद्धानुचार K   22c द्रविणार्धं° N   23a स्तिरः N, स्थिर K   23c शास्त्र° N

29,24–29

f.42 मृष्ट⟨ान्नपा⟩नच⟨तुर⟩: सुवाक्य-⟩
श्लक्ष्ण: कांचनगौरमूर्ति:।
कान्त: प्रियायो नृजरिष्ठधर्मो
द्वितीऽ(य)भागे परवित्तभाक् च॥२४॥
नि:श्मश्रुरोमा हरिपिङ्गनेत्रो
महोदर: पीवरबाहुवक्षा:।
हिंस्र: प्रहर्ता सहजैर्विपन्नो
भवेत्तृतीये परपुष्टवर्ग:॥२५॥वृश्चिक:॥
ह्रस्वाननो नैकविदेशचारी
पूज्यो ⟨गणे⟩नां परिमण्डलाक्ष:।
वक्रार्जव: स्वर्चितसाधुवृत्ति-
राद्ये प्रसूतो नवमस्य भागे॥२६॥
शास्त्रार्थविद्वान् क्रतुसत्त्रयाजी
वक्ता विधुर्मन्त्रकृतां वरिष्ठ:।
अनेकतीर्थायतनानुचारी
शान्तो द्वितीये नवमस्य भागे॥२७॥
सतां पतिर्बन्धुजनप्रधानो
मानी विलासी चतुरो विजिष्णु:।
पराङ्गनाभाक् सुयशा: सुरूपो
धर्मप्रियोऽन्त्ये नवमस्य भागे॥२८॥धनु:॥
व्यालम्बबाहु: पृथुलोचनोरु:
श्याम: परस्त्रीष्वजित: शठात्मा।
कान्त: स्मितभाषणवल्गुचेष्टो
मृगादिभागे धनधान्यभाक् स्यात्॥२९॥

Apparatus

24a मृष्टान्नपानचतुर K शीलकलावाग् K 24c प्रियाय N °धर्म N 24d no space in N 25d °वर्ण: N col. विच्छ॥ N 26b गणेषु मुख्य K 26c वक्राजव: स्वाचित° N 26d प्रसूते N 27a शास्त्रास्त्र° N, शास्त्रार्थ K 27a क्रतुशतहर्ता N 27b मन्त्रभृतां K 28a गति° N 29b स्त्रीषु जित K

29, 30-35

श्यामः शठो ह्रस्वमुखो दुरन्त-
खलः परस्त्रीधनहृत् प्रवासी।
उद्बद्धजंघः पिशुनो विवादी
विसृक्तदारश्च भवेद्द्वितीये ॥३०॥
घण्टाललाटः कृशदीर्घगात्रो
गोधर्मशीलः कलुषस्वभावः।
पितुर्वियुक्तः स्वधनं विदेशा-
ल्लभेत शश्वद्व्यसनानि वान्त्ये ॥३१॥ मकरः॥
स्त्रीपानवश्यः स्थिरकर्मशीलः
प्राज्ञः प्रियासुः प्रशमावदातः।
सुरोपहारोऽयतदृग्बहुद्विट्
कुम्भादिभागे धनवांश्च सूतः ॥३२॥
लुब्धः समर्थो मधुमण्डगौरः
पिङ्गोत्कटाक्षो रतिहास्यचित्तः।
उद्दुष्ट(घु)वाक्यो ब(हु)मित्रकर्मा
जातो द्वितीये प्रियगीतनृत्तः ॥३३॥
दीर्घः शठो बह्वनृतः प्रलापी
कृशाल्पबाहुः प्रमदारतिश्च।
पित्रर्थभाक् स्तब्धविदारिताक्षो
f. 42v भवेत्तृतीये | विषमान्तरात्मा ॥३४॥ कुम्भः॥
प्राज्ञः कृतज्ञो मधुपिङ्गनेत्रो
गौरः सुमेधा मधुराभिधानः।
ख्यातः क्रियाज्ञानरतिर्विनीतो
मीनादिभागे सुखभाक् प्रसूतः ॥३५॥

Apparatus

31a घाटा° N कृष° N 31c पितुर्वियोगं N, पितृविसृक्त K 32a स्त्रीमानयशोभूति K 32b प्रियांशुः प्रसनाव N 32c °हारायतकृष्टबहुद्विड् N 32d सूते N 33c उद्दुष्ट(घृ)वचा K 34c पित्यर्थभाक् N, सुतार्थभाक् K 35d प्रसूते ॥मीन॥ N

29,36-38

मृष्टान्नभुग् नार्युपचारविच्च
यानावदातः परवित्तभुक् च।
कामी स्मृतः सज्जनसंमतश्च
द्वितीयभागे वदतां वरश्च॥३६॥
श्यामः कलाढ्यः मृदुपाणिपादो
मृष्टान्नपानः सुहृदां वरिष्ठः।
शुचिद्विजेज्याभिरतो बहुज्ञो
हास्यप्रियो मीनयुगान्त्यभागे॥३७॥K<मीनः॥>
इतीरितो ऽयं स्वगुणस्वभावै-
र्द्रेकाणजानां गुणचिह्नकल्पः।
द्रेकापतौ वीर्यवतीष्टदृष्टे
द्रेक्काफलं निर्विकलं विदध्यात्॥३८॥
यवनजातके द्रेकाणफलम्॥

Testimonia

38 equals Sārāvalī 49,37.

Apparatus

37b स्वहृदां N, सुहृत्प्रधान K 37c °ज्योनिरतो N col. no space in N 38a °स्वभावो NK 38b °वद्विकल्पैः (var. °चिह्नकल्पैः) K 38c द्रेक्काणगे (var. °गो) वीर्यवति स्वदृष्टे K 38d द्रेक्काणकल्पं तु फलं K द्रेक्कफलं N

30,1-5

ये सप्त सप्तर्क्षपतिक्रमेण
सप्त ग्रहाणां भवनेषु भागाः।
प्रोक्ता गृहेशग्रहयोगजैः स्वै-
र्वक्ष्ये नृणामाकृतिलक्षणांस्तान्॥१॥
ग्रहे समग्रद्युतिवीर्यभाजि
केन्द्राश्रिते पश्यति च स्वभागम्।
विलग्नगे चन्द्रमुपागते वा
फलप्रदं जन्मविधौ तमाहुः॥२॥
ग्रहस्वभावैः सदृशस्वभावान्
सप्तर्क्षभागान् भवनेषु विन्द्यात्।
तत्स्थे गृहे वा ग्रहतुल्यमेव
ब्रूयात् समुद्भूतिविधौ विधानम्॥३॥
अह्नः पतौ पश्यति पूर्वलग्नं
स्वसप्तभागे शशिसङ्गते वा।
समुद्भवे तद्ग्रहतुल्यरूप-
स्वभावभाजाः पुरुषा भवन्ति॥४॥
दुर्मर्षणः सत्त्वबलाभिमानी
स्यात् सप्तभागे क्षितिनन्दनस्य।
कामी विलासी रतिहास्यशीलो
गान्धर्वगीताभिरतिर्भृगोः स्यात्॥५॥

Testimonia

5-8 (in the order 7a-b; 6c-d; 5a-b; 6a-b; 7c-d; 5c-d; and 8) equal Jātakasāradīpa 22,86-89.

Apparatus

1a °परिक्रमेण N   2b केन्द्रशृते N   2c विलग्नतक्ष° N   3d ब्रूया N   4b ससप्तभागं N   °सङ्गतं N   4c तद्ग्रहसप्त° N   5c °हास्यलीला° J   5d °गानाभि° J

30,6–11

कविः कथाशिल्पकलाभिरामो
विद्वान् सुवाक्यो निपुणो बुधस्य।
शुचिर्मृदुर्धर्मरतो विनीतो
रतिप्रियः स्याच्छशिनः सुधीश्च ॥६॥
शूरः प्रचण्डः स्थिरसत्त्वकर्मा
f. 43 रवेर्बलख्यातिवपुर्वरिष्ठः।
विशारदात्मा स्थिरसत्त्वबुद्धि-
र्गुरोर्भवेज्ज्ञानवतां वरिष्ठः ॥७॥
मूर्खोऽलसो जिह्ममतिर्विकर्मा
सौरस्य पापाभिरतश्च सूतः।
स्वक्षेत्रनीचोच्चविधानजानि
ज्ञेयानि चैषां स्वफलानि सूतौ ॥८॥
लग्नेन्दुयुग्भागपतिर्बलीयान्
पश्येत् स्वभागं यदि केन्द्रसंस्थः।
स जन्मयोगे विदधाति पुंसां
रूपाण्यसंयुक्तफलः स्वकानि ॥९॥
कृशस्तनुः श्मश्रुसुखः प्रचण्डो
रक्तान्तदृक् स्तेयपटुः प्रहर्ता।
कलिव्रतार्थो रतिकर्मदक्षो
मेषादिभागे पुरुषोत्तमः स्यात् ॥१०॥१॥
विशालपीनोपचितांसवक्षा
दूर्वालताभः पृथुनेत्रवक्त्रः।
कामी पृथूद्गण्डललाटवक्त्रः
प्रदानसंसेवरतिर्द्वितीये ॥११॥२॥

Apparatus

6c °र्मृदुर्धर्मपरो J 7a प्रसिद्धः J स्थिरकाव्य° J 7b समांशके ऽर्कस्य बली प्रसिद्धः J 7c विशारदः स्यात् J 7d °र्भवे ज्ञान° N, °र्मतो ज्ञान° J 8b °रतश्च सूते N, °रतो नरः स्यात् J 8d तु फलानि तानि J 9a °युग्भोग° N 11d °संस्तेग° N

30,12–18

कान्तो ऽध्वशीलः पृथुपत्रलेखः
    कामप्रवक्ता पृथुविग्रहश्च ।
दाक्षिण्यसौभाग्यकलाविधिज्ञो
    मेषे नरः श्यामतनुस्तृतीये ॥१२॥३॥
विशालनेत्रो गुरुगौरमूर्तिः
    पृथूदरः स्थूलकपोलपाणिः ।
स्रग्भूषणस्नानरतिः प्रदाता
    चतुर्थभागे श्रुतिधर्मशास्त्रः ॥१३॥४॥
विशालताम्रान्तमधुस्फुटाक्षो
    बृहद्भुजस्तुङ्गनसः प्रवृद्धः ।
महाललाटस्त्रिशिराः प्रचण्ड-
    स्ताम्रद्युतिः पंचमजस्तु शूरः ॥१४॥५॥
पृथ्वायतव्यायतगौरमूर्तिः
    कान्तो मधुस्निग्धविशालनेत्रः ।
विशिष्टवाग्बुद्धिरधीरविद्यः
    षष्ठे ऽर्थभाग्यत्नरुभिर्नरः स्यात् ॥१५॥६॥
विशालदीर्घासितपीनमूर्ति-
    र्मन्दोदरो विग्रहवाक्यशीलः ।
निस्त्रिंशकर्मा पिशुनः प्रगल्भः
    स्यात् सप्तमे भिन्ननखाग्रकेशः ॥१६॥७॥<मेषः>॥
व्यस्तेक्षणः स्थूलकपोलगण्डो
    महाललाटो घनसूक्ष्मकेशः ।
f.43v श्यामो गुरुस्कन्धभुजोरुवक्षा
    वृषादिभागे रतिदक्षिणः स्यात् ॥१७॥१॥
स्निग्धप्रसन्नच्छविरायताक्षो
    विभूतिचारूपचिताङ्गयष्टिः ।
कामी श्रुतज्ञानकलाविधिज्ञो
    वृषे द्वितीये मधुरो नरः स्यात् ॥१८॥२॥

Apparatus

12a पृथुलेस्यपाव्यः N   12c °शौर्यास्त्रकला° N   13b °पाणैः N   14a °तम्रान्त° N   14d °जास्तु N   18b विभक्ति° N

30,19–24

प्राज्ञो मृदुः पीवरगौरमूर्ति-
र्मृगासिताक्षो मृदुसूक्ष्मकेशः।
रतिप्रियः स्त्रीसु(भ)गो वचस्वी
तृतीयभागे मधुरः प्रदाता ॥१९॥३॥
उद्दण्डवक्त्रोन्नतमध्यघोणः
खरस्वरी रक्तनखः स्फुटाक्षः।
विस्तीर्णकर्णाग्रपुटः सुवक्षाः
शूरो वृषे भिन्नकथश्चतुर्थे ॥२०॥४॥
ताम्रद्युतिर्लोहितपिङ्गनेत्र-
स्तीक्ष्णप्रभाषी सुकुमारमूर्तिः।
मृतन्धरो ऽन्यद्रविणाभिलाषी
रुगातुरः पंचमजो वृषे स्यात् ॥२१॥५॥
विस्तीर्णकर्णायतपीनदेहः
क्रियापटुस्तुङ्गनसो ऽसिताक्षः।
नैकापदध्वार्तिभिरर्दिताङ्गः
षष्ठे तु मानी पुरुषो वृषे स्यात् ॥२२॥६॥
लुब्धः खरश्यामकृशायताङ्गः
क्रोधी प्रवक्ता चपलो ऽल्पसत्त्वः।
सितान्तदृग्भ्रान्तमुखो ऽध्वशीलो
वृषे शठः सप्तमभागजः स्यात् ॥२३॥७॥ वृषः॥
प्राज्ञः श्रुतज्ञानपटुर्वचस्वी
कविस्तनुश्यामविभुग्नदेहः।
कान्तो विलासी रतिगीतशीलः
ख्यातो नरः स्यान्मिथुनादिभागे ॥२४॥१॥

Apparatus

20a °घोणौ N   20b °नक्षः N   21c मृतन्धनोऽन्यद्र° N   21d पंचमगो N   22c नैकापदाध्वातिभि° N   23a लब्ध N   24b कमिस्तनु° N   °विभग्न° N

30,25–31

विशालदृक् पीवरगौरदेहः
प्राज्ञो मृदुः प्रांशुतनुर्वपुष्मान् ।
क्रियालसो धर्मरुचिः सुमेधा
द्वितीयभागे प्रियगीतनृत्तः ॥२५॥२॥
शूरः प्रवक्ता प्रवरो वपुष्मा-
नुदारकर्मा विपुलाक्षिवक्त्रः ।
महाहनुस्ताम्रविदारितास्यो
भवेत्तृतीये मिथुने प्रहर्ता ॥२६॥३॥
॥२७॥〈४॥〉

रक्तान्तनेत्राङ्गनखाधरोष्ठ-
श्चण्डो विभक्ता कलिकूटकर्मा ।
कृशो विभक्तांसभुजो रतीप्सुः
स्तेयप्रियः पंचमजस्तृतीये ॥२८॥५॥
f.44 बृहद्गुरुव्यायतगौरदेहः
सैनाधिकत्वो मतिमान् विशिष्टः ।
शास्त्रार्थकाव्यार्थविनिष्ठधर्मः
षष्ठे मनस्वी मधुरो नरः स्यात् ॥२९॥६॥
सुनासिकः स्निग्ध(स)माहिताङ्गः
कीर्णोऽबलः शिल्पकथाधनशीलः ।
रुग्णातुराङ्गः कितवोऽल्पसत्त्वः
स्यात् सप्तमे स्त्रीबहुलस्तृतीये ॥३०॥७॥मिथुनः॥
श्यामो विभक्तोपचितोरुवक्षा
व्यस्तायताक्षो गुरुदीर्घबाहुः ।
प्राज्ञश्चतुर्थे समवस्तिघोणः
प्राग्भागजः स्याद्घनचारुकेशः ॥३१॥१॥

Apparatus

25a °दिक् N 26a प्रसवो N 27 no space in N
28c विभक्ताङ्ग° N 28d °जास्तृ° N 29b °काद्यो
N 30b वीर्ण्णबलः N 30d स्त्रबहुल° N 31c
प्राज्ञ चतुर्थे N समवित्त° N

30,32–37

पिङ्गो ऽग्नग: पङ्कजलोहिताक्ष-
स्ताम्रद्युति: स्थूलमलौष्ठगण्ड:।
शूर: कृश: प्रांशतनुस्तपस्वी
द्वितीयभागे प्रवरस्तनुर्थे ॥३२॥२॥
मृदुर्मनस्वी सुकुमारमूर्ति-
र्विद्वान्नृजुश्चारुघनायताक्ष:।
तनुच्छविर्वादितगीतवृत्त-
स्तृतीयभागे चतुरस्तनुर्थे ॥३३॥३॥
स्रस्तांसपृथ्वायतलम्बबाहु:
सवंशघोण: पृथुदीर्घनेत्र:।
गान्धर्वविद्गीतकथाभिराम-
⟨श्च⟩तुर्थभागे मृदुकक्षकेश:॥३४॥४॥
उत्तुङ्गघोणस्तनुताम्रमूर्ति:
पिङ्गोत्कटो लोहितमण्डलाक्ष:।
वराङ्गनेप्सुर्घनसङ्कटभ्रु:
शूरो ऽरिहा पंचमभागज: स्यात्॥३५॥५॥
दीर्घाक्षिवस्त्राभरण: समर्थो
गौर: पृथुश्रोत्रपुट: सुमूर्ति:।
मान्य: सतां वाग्मतिकर्मसार:
स्याद्बन्धुभृत् कर्किणि षष्ठभागे ॥३६॥६॥
कृशासिताङ्ग: खरवाक्यकेश:
कृशाननो दीर्घतनुश्चलात्मा।
तिर्यग्दृगात⟨र्य⟩मलो ऽध्वशीलो
भागे न⟨र:⟩ कर्किणि सप्तमे स्यात्॥३७॥७॥कर्कट:॥

Apparatus

32a ग्नज: N पक्षजलाहि° N 32b स्थूलबलौ° N 32c °तनस्तनुश्वी N 32d त्रसव° N 33a मृधर्मनश्वी N 33b °नृजाश्चा° N 34a स्त्रस्ताव्° N 35c °मन्कतभ्रू: N 36a °बस्त्रभ्रातसस्समर्थो N 37a °सिराङ्ग: N 37b केशात्मको N 37c तिर्यद्गृगा° N 37d भागेण कर्किणि N

30,38–43

दीर्घस्फुटांसः स्फुटलोहिताक्षः
    प्रवृद्धघोणः कपिपिङ्गरोमा।
रक्तारुणोद्वृत्ततनुः प्रचण्डः
    सिंहादिभागे सुभटोनरः स्यात्॥३८॥१॥
अभ्युच्चतश्रोत्रनसः प्रवक्ता
    प्रदीर्घमूर्तिः कृतकोपचारः।
दृष्टार्थचेष्टस्तु <भवेत्प्रसूतो>
f. 44v    द्वितीयभागे विदितार्थशास्त्रः॥३९॥२॥
विशालपीनायत(दृग्)वराङ्गो
    महाललाटः पृथुनेत्रपत्रः।
स्थिरो ऽङ्गनाढ्यो धनसंचयज्ञ-
    स्तृतीयभागे धृतिसत्त्वसारः॥४०॥३॥
नाभ्युन्नतो लोहितपीनदेहः
    सत्त्वोच्छ्रितः केकरलोहिताक्षः।
प्रचण्डभाषी कपितुल्यवक्त्र-
    श्चतुर्थभागे कलिधृष्ण(री)शीः॥४१॥४॥
उत्साहसत्त्वस्थितिसद्गुणाढ्यो
    विस्तीर्णशीर्षः सुगलाक्षिवक्षाः।
दीर्घः समोदारनसो ऽभिगौरः
    स्यात् पंचमे स्फीतयशःप्रतापः॥४२॥५॥
सिराचितो व्यायतवृत्तमूर्ति-
    श्रोत्राक्षिवक्त्रस्तनुदीर्घघोणः।
मन्दो ऽल्पवाग्धनरुग्भिर्वि(ला)सी
    षष्ठे पराज्ञावहितो ऽङ्कराशी॥४३॥६॥

Apparatus

38a °स्फटसं N    39a °स्त्रोतनसः N    प्रवक्तः N    39c दृष्टार्थचेष्टा तु N    no space in N    40a no space in N    40b °ज्ञा° N    42a °सन्निभः स्थितिमान् गुणा° N    42b °वक्षः N    43c °रुग्भिर्विशा N    43d कराशीन् N

30,44-49

कीर्णो गुरुगौरसमुन्नताङ्गः
    प्राज्ञः सुनेत्रो ऽल्पमनसो ऽल्पवाक्यः।
सङ्गीतनारीरतिलालसश्च
    सिंहे नरः स(प्त)मभागजः स्यात् ॥४४॥७॥(सिंहः)॥
वाग्मी समेधाश्चतुरो विनीत-
    श्चार्वायताक्षः समवंशघोणः।
समावदातायतकान्तमूर्तिः
    कन्यादिभागे ऽभिहितः प्रसूतः ॥४५॥१॥
गुरूरुवक्षाः सुभुजोदरांसो
    मृदुर्वचस्वी सुकुमारमूर्तिः।
सुनासिकोत्कर्णभुजो मनस्वी
    द्वितीयभागे रतिसक्तचित्तः ॥४६॥२॥
रक्ताक्षिगात्रश्चिकुरोग्रवक्त्रः
    स्तेयाभिरामस्तनुदेहरोमा।
विषादकूटाभिरतो ऽभिमानी
    तृतीयभागे चपलो ऽल्पचेताः ॥४७॥३॥
महाहनुस्कन्धशिरोक्षिकर्णा-
    पानध्वनिः स्पष्टनसः सुमेधाः।
विज्ञानशिल्पश्रुतियज्ञकर्मा
    स्फुटार्थवाग् धीरकविश्चतुर्थे ॥४८॥४॥
नतायतस्नायुनता(सिता)ङ्गो
    दीर्घाननः पीनतनुर्मृगाक्षः।
क्रोधी भयालस्यवशः प्रमोदी
    षष्ठे ऽल्पवाक् पंचमभागजः स्यात् ॥४९॥५॥

Apparatus

44a कर्ण्णो N    44d नरस्यामभागजः N    45c समानदाता° N    45d प्रसूतेः N    48a °कर्णः N    48c °यज्ञाकर्मा N    48d °वाक् पान° N    49b दीर्घाननः N

30,50-55

प्रसन्नसम्पूर्णविविक्तगात्रो
घनायतभ्रूर्भ्रमरायताक्षः।
सद्धर्मशीलः श्रुतवाक्यवृत्तः
षष्ठे रतिक्रीडितवादितेप्सुः॥५०॥६॥

f.45 निर्ग्रन्थताम्रद्युतिरुग्रकर्मा
मध्वायताक्षस्तनुपिङ्गकेशः।
दंष्ट्रोत्कटः स्थूलगलौष्ठगण्डः
षष्ठे नरः सप्तमभागजः स्यात्॥५१॥७॥कन्या॥

वृत्तोरुदेहो जलजोपमाक्षः
स्पष्टोष्ठघोणस्तरुणारुणाभः।
प्राज्ञः प्रवक्ता द्रविणार्जकस्तु
तुलादिभागे निभृतो नरः स्यात्॥५२॥१॥

क्लिष्टध्वनिर्मण्डलवक्त्रनेत्रो
जिघांसुरुच्चोन्नतनासिकौष्ठः।
विलोहितः श्यामवपुर्विकर्मा
द्वितीयभागे प्रभुरस्तुले स्यात्॥५३॥२॥

उन्नासिकः पूर्णविशालदेह-
स्तुङ्गोत्तमाङ्गः पृथुवक्त्रनेत्रः।
धर्मार्थशास्त्रार्थविबद्धबुद्धि-
स्तुले महत्कृत्यकरस्तृतीये॥५४॥३॥

कृष्णः खराङ्गस्वरदृष्टिकेशो
दीर्घाननः पीनगलांसजंघः।
वक्त्राग्रविस्त्रस्तनसः स्फुटौष्ठो
जिह्मोऽलसः स्याच्चपलश्चतुर्थे॥५५॥४॥

Apparatus

51a निर्ग्लन्तताम्र° N   51c दंष्ट्रो° N   52c प्राज्ञाः N
52d नृभृतो N   53b जिघोत्सु° N   °केष्ठे: N   54c
°शास्त्रास्त्रविबन्धुबुद्धिः N   54d कुले N   55a
खराङ्गः N   °कोशो N   55b °गलाङ्गजंघः N

30, 56-61

सुनेत्रवक्षाः सुभुजोरुवक्त्र-
स्तथाम्बुजश्यामसमानवर्णः ।
पटुः कलाकाव्यकथाश्रयेषु
सेव्यः सतां पंचमजस्तुले स्यात् ॥५६॥५॥
नताग्रपक्ष्मासितदीर्घनेत्र-
श्चार्वोष्ठघोणः सुमुखः समाङ्गः ।
स्त्रीचंचलः पेशलसूक्तभाषी
षष्ठे तुले चण्डविलासहासी ॥५७॥६॥
स्थूलाक्षिदन्तावलिरस्थिसारो
विशालभालो ऽम्बुजकोमलाङ्गः ।
विलोहिताक्षो मधुपिङ्गकेशः
शूरस्तुले सप्तमभागजः स्यात् ॥५८॥७॥ तुला ॥
ज्वलद्वपुः पिङ्गलताम्रनेत्रो
नताननः पिङ्गखराग्रकेशः ।
वधाभिघातानृतभेदशीलः
कीटादिभागे सदसम्मतः स्यात् ॥५९॥१॥
पीनारुणोदारविशालदेह-
श्चित्रार्थशास्त्रार्थकलाविपश्चित् ।
ख्यातः समाधींसनसो महाभ्रु-
सद्वृत्तकर्मायतदृग् द्वितीये ॥६०॥२॥
संरूढमूर्बाधर्विवृद्धकायः
खरासितत्वङ्नखनेत्रकेशः ।
करालघोणः पटुवाक्यशील-
f.45v स्तृतीयभागे विघृणो गुरूणाम् ॥६१॥३॥

Apparatus

56d °जा तुले N  57b °श्चार्थौष्ठघोण N  सुमुख: N
57d °विशालहासी N  58b विशालबालास्युज° N
59a °ताम्भ्रनेत्रो N  60b °श्चित्रास्त्र° N  60c महाभ्रू°
N  61c कलाल° N

30,62–68

बृहद्भुजोर्वंसनितम्बदेशो
    महार्थभाव: पृथुगण्डघोण:।
गुरूदर: कुञ्चितकेशशोभो
    गर्भाभिधानो जनितश्चतुर्थे ॥६२॥४॥
कृशोदर: पीनविशालवक्षा:
    सुनासिकाक्षो रुचिराधरौष्ठ:।
सेवाभियुक्तो ऽल्पपटु: प्रवक्ता
    द्यूतप्रिय: पंचमजो वृषास्य: ॥६३॥५॥
बलोपपन्नोत्पलताम्रनेत्र-
    स्तत्कौशलोदारशरीरसत्त्व:।
सद्धर्मशीलस्तनुतुङ्गघोण:
    षष्ठे ऽल्पवाक्यो मतिमान् मृदुश्च ॥६४॥६॥
हिरण्यपिङ्गाङ्गरुहास्रनेत्रो
    बृहच्छिरा: प्रांशुनस: पृथुस्फिक्।
रणाभिकांक्षी स्थिरसत्त्वसार:
    सारङ्गनेत्रो विषमाननौष्ठ: ॥६५॥७॥ वृश्चिक:॥
॥६६॥K⟨१॥⟩
।

उद्बद्धजंघास्तनुदीर्घबाहु:
    शठ: परस्त्रीधनहृद्द्वितीये ॥६७॥२॥
ह्रस्वाभिताम्रानननेत्रगात्रो
    वहिप्रणाद: प्रियविग्रहस्त।
ईर्ष्यु: स्फुटक्रोधवश: प्रवक्ता
    त्यागी कृश: सारवपुस्तृतीये ॥६८॥३॥

Apparatus

62b महर्थ° N    63c प्रवक्त्रा N    63d वृष: स्यात् N    64a बालोत्पकान्तदलताम्र° N    65c–d °सारत्सारङ्ग° N    col. विच्छ N    66a–67b no space in N    68b बहि:प्रणाद: N    °ग्रहास्त: N    68c प्रसक्ता N

30,69–75

समुन्न(त)स्कन्धानसो वृषाक्षो
    महाहनुर्वारणतुङ्गनासः।
नित्योत्सवक्रीडनलोलचित्तः
    श्यामोन्नतस्थूलतनुश्चतुर्थे ॥६९॥४॥
तनुप्रसन्नायतकर्कशाङ्गः
    सुनासिकश्चारुविदारिताक्षः।
काव्यक्रियाख्यानकलाविपश्चिद्
    युक्तस्थितिर्धन्विनि पंचमे स्यात् ॥७०॥५॥
विस्फारिताक्षः पृथुकान्तवक्त्रो
    मृणालगौरोऽपचितोत्तमाङ्गः।
तपोभिरामो मृदुवाक्यकर्मा
    षष्ठे गुणख्यातिकरो नरः स्यात् ॥७१॥६॥
उदारसत्त्वद्युतिवाक्यदेहः
    शूरः प्रदीर्घोन्नतनासिकाक्षः।
महाललाटश्रवणाग्रदन्त-
    स्त्यागी नरो धन्विनि सप्तमे स्यात् ॥७२॥७॥धनुः॥
खरासिताक्षस्तनुवक्त्रघोणो
    दीर्घाननः श्यामकृशायताङ्गः।
भीरुः शठो जिह्ममतिः सुभाषी
f. 46 जातोऽतिभक् स्यान्मकरादिभागे ॥७३॥१॥
त्रस्ताङ्गगौरोऽपचितोरुदेहः
    सुनेत्रपत्राब्जमुखो रतिज्ञः।
विहारशीलो मधुरो विलासी
    वक्ता द्वितीये मतिमान् विघुष्टः ॥७४॥२॥
सुरक्तनेत्राङ्गवपुः प्रचण्डः
    कृशः परस्त्रीविभवप्रहर्ता।
दक्षो सुसत्त्वश्चपलः प्रतापी
    तृष्णालुरुद्वृत्तमदस्तृतीये ॥७५॥३॥

Apparatus

69a no space in N   69b महाम्नु° N   69c °चित्रः N   71d गुणाख्याति° N   73a °क्षघोणो N   74d वक्त्र N

30,76-81

बृहच्छिरोद्दण्डगलाग्रघोणः
    पद्माङ्कुरश्यामविवृत्तदेहः।
नारीरतीप्सुः स्मितमन्दभाषी
    विख्यातकर्मा मतिमांश्चतुर्थे ॥७६॥४॥
श्यामाभ्रकाण्डासितदीर्घमूर्ति-
    र्माधुर्यसेवारुचिरद्विजो ऽर्थी।
सङ्गीतशिल्पश्रुतवाग्विपश्चित्
    स्यात् पंचमे साधुजनाभिमन्यः ॥७७॥५॥
विशालबालाभ्रसमप्रभाङ्गो
    विकोशनीलोत्पलपत्रनेत्रः।
मृदुः श्रुतज्ञानतपोभिरामः
    षष्ठे नरः श्रेष्ठजनप्रियः स्यात् ॥७८॥६॥
प्रवृद्धपीनोरुतनुः प्रचण्डो
    नरो ऽग्रपद्मोत्कटलोहिताक्षः।
बृहद्गलः सुभ्रुनखो ऽभिमानी
    मृगे ऽध्वभाक् सप्तमभागजः स्यात् ॥७९॥७॥
मकरः॥
कालः शिरःसन्नतदीर्घमूर्ति-
    र्वक्त्राग्रघातः खरकेकराक्षः।
बृहच्छिरस्कः पिशुनो ऽल्पसत्त्वः
    कुम्भादिभागे विकृतो नरः स्यात् ॥८०॥१॥
विदारितघ्राणपुटास्यनेत्रः
    प्रपक्वधात्रीफलपिङ्गरागः।
नरः पृथुश्लक्ष्णतनुः पिशङ्गः
    कुम्भे द्वितीये ऽल्पकथो मनस्वी ॥८१॥२॥

Apparatus

77a स्यामाभ्र° N    77b °रुषि° N    78d स्त्रष्टजन° N
79b ग्रपद्म(मो)त्कट° N    80a शिरासन्नत° N    80d
विकृतिर्नरः N    81b प्रपंच° N    °राङ्गः N

30,82-87

मार्जारनेत्रस्तनुतीव्रगात्रः
सङ्ग्रामचौर्याहृतिभेदवृत्तिः।
हिरण्यधूम्राभ्रकचो ऽल्पमेधाः
स्यादस्थिरः कुम्भतृतीयभागे ॥८२॥३॥
तुङ्गायतघ्राणपुटः सुकेशः
प्रवृ(द्ध)नीलाभ्रसुवर्णगात्रः।
मृद्वल्पवाक्यो हरिणायताक्षो
दूरङ्गनः पानरुचिश्चतुर्थे ॥८३॥४॥
पप्यङ्करश्याम(त)नुर्नताङ्गो
f.46v रूक्षाक्षिकेशः सुमसो ऽभिमानी।
प्रवासशिल्पासवपानशीलो
रतिप्रियः पंच(म)जो ऽ(स)रुक् स्यात् ॥८४॥(५॥)
गौरो ऽटनः पाण्डुविशालगात्रः
सुलोचनः सौम्यसुरूपवक्त्रः।
देवार्चनस्नानतपोव्रतेप्सः
षष्ठे विनीतो ऽल्पकथो नरः स्यात् ॥८५॥६॥
प्रदीर्घताम्राक्षतनुर्वपुष्मा-
नुदारसत्त्वो मधुपिङ्गकेशः।
उद्घुष्टभाषी पृथुनासिकौष्ठः
ख्यातो घटे सप्तमभागजः स्यात् ॥८६॥७॥कुम्भः॥
मध्वायतोर्वुन्नतघोणवक्त्रः
प्रत्यग्रताल्यङ्कुरपिंजराङ्गः।
सम्बद्धबुद्धिः श्रुतिसत्यशीलः
स्यादर्चितो मीनयुगादिभागे ॥८७॥१॥

Apparatus

82a °स्तींस्त्रगात्रः N 82b °चौर्याकृति° N 82d °तृतीयाभागे N 83a °घ्राणवपुः N 84a no space in N 84b भिमानः N 85a गौरोवना° N 87b °ताल्वोटर° N 87c संबद्ध° N °सत्त्वशीलः N

30, 88–93

चकोरनेत्रस्तनुसूक्ष्मकेशो
वटप्रवालारुणपीनगात्रः ।
हृष्टो युधि द्विड्मथनेष्वमर्षी
मीने नरः स्याद्दृढसत्त्वकर्मा ॥८८॥२॥
प्रसन्नविस्तीर्णमुखाब्जपत्र-
श्चारुप्रवृद्धोपचितोरुगात्रः ।
सुदीर्घकेशभ्रुनसो विनीतो
गान्धर्वविद्वान् मधुरस्तृतीये ॥८९॥३॥
पलाशपत्राभविभक्तदेहो
वल्गुप्रलापी मधुरायताक्षः ।
सम्पूर्णवक्त्रः श्रुतिनिश्चितार्थो
मन्त्री चतुर्थे कविरुत्तमो वा ॥९०॥४॥
प्रोद्यत्सिताम्भोरुहगर्भगौरो
विकोशनीलोत्पलचारुनेत्रः ।
कान्तो मृदुर्मांसलवक्त्रगात्रो
विचक्षणः पंचमजः शुचिः स्यात् ॥९१॥५॥
अशोककिंजल्कनिभोत्कटाक्ष-
स्तत्पत्रवर्णाभविवृद्धदेहः ।
पृथ्वंसगण्डो दशनोत्कटास्यो
विशारदः कर्मसु षष्ठभागे ॥९२॥६॥
कृष्णः कृशो मग्ननसत्वचाक्षो
रूक्षाङ्गो दीर्घमुखो ऽग्रभाषी ।
जिह्मः सुचेष्टास्ववसन्नधैर्यैः
स्यादल्पमेधा जलजान्त्यभागे ॥९३॥७॥मीनः॥

Apparatus

88b कूट° N 88c पृष्टो N 92a आकोश° N
°निनोत्क° N 92b °निवृद्ध° N 92c °त्कटाग्रो N
93a कृशोन्मग्न° N

30,94-96

इतीन्दुरेवं विचरन् क्रमेण
क्षेत्रेष्वनेकप्रकृतीन् विकारान्।
ग्रहस्वभावाकृतिवर्णभेदै-
र्नानाकृतीन् प्राणभृतः (प्रसूते)॥९४॥
f.47 स्वभागसंस्थास्त्वविहीनवीर्यः
स्वरूपचेष्टादिगुणं प्रसूते।
ग्रहान्यभागे तु विमिश्ररूपं
शशाङ्कवर्ग्गोदयगाः स्फुरेते॥९५॥
राशावथ स्वामिनि चाल्पवीर्ये
होरांशपादिष्वथ वीर्यवत्सु।
केन्द्राश्रिते रात्रिपतौ बलस्थे
विकल्पना राशिफलस्य दृष्टा॥९६॥
यवनजातके सप्तांशफलम्॥

Apparatus

94b °प्रकृतीं N 94d °कृतीं N 95a स्वभावसंस्था° N 95c ग्रहोन्य° N 96a राश्यावथ N 96c केन्द्राश्रितोरेवमिदं N after the colophon N adds छेद २५८॥

31,1–5

अतोंऽशकेष्विन्दुगतेषु वक्ष्ये
    वर्णस्वभावाकृतिलक्षणानि।
प्रधानवीर्येंऽशपतौ शशी यत्
    तत्स्वामिराशिक्रमजं विधत्ते॥१॥
आद्यस्य राशेः प्रथमांशजातः
    स्यान्मेषसंस्थानमुखोऽल्परोमा।
कृशोग्रमूर्तिस्तनुनासिकाग्र-
    श्चण्डध्वनिः सङ्कुचिताक्षिपक्ष्मा॥२॥१॥
श्यामो गुरुस्कन्धभुजो महाभ्रू-
    र्दीर्घाननो ह्रस्वललाटजत्रुः।
गम्भीरनादः स्फुटदृग्द्वितीये
    व्यालम्बघोणः कृशपादसन्धिः॥३॥२॥
गौरोन्नतव्यस्तभुजस्त्वजाक्षो
    व्यालम्बकेशः कृशजानुजंघः।
वाक्पण्डितो रोमशबाहुशीर्षो
    मेषे तृतीयांशकजः प्रगल्भः॥४॥३॥
विभ्रान्तदृग्घ्रस्वनसोऽललाटी
    भ्रान्ताननो रक्तवपुः प्रचण्डः।
कृशस्त्वधस्तात् खरपादरोमा
    स्यान्मेषमुख्यस्त्वटनश्चतुर्थे॥५॥४॥

Testimonia

With this chapter compare Sārāvalī 50. 1 equals Sārāvalī 50,1.

Apparatus

1a ऽशके लग्नगते तु K    1c सपतै N, शपतौ K शशीव K    1d °क्रमशो K    2d °पांस: N    3b °जभ्रू: N, सुजत्रुक K    3c °दिग् N, °दृक् K    4a °भुजो N    चारुनयन K    5a °घ्रस्वनगो N, ह्रस्वनस K

31,6–11

उद्वृद्धपीनोपचितोग्रमूर्ति-
र्दृप्तो गजाकारशिरा हयाक्षः।
महाललाटश्चनसो ऽल्पकेशः
स्यात् पंचमे वक्रखराग्रपादः ॥६॥५॥
मृदुर्मृगाकारदृगायतभ्रूः
श्यामो गुरुव्यस्तभुजोदरांसः।
कृशस्फिगूरुश्चरणो रतिज्ञः
षष्ठांशजो भीरुरनल्पवाक्यः ॥७॥६॥
दूर्वाङ्कुराभः सुनसो ऽसिताक्षः
कृशो विशालायतदेहचक्रः।
चलः परस्त्रीरतिरप्रशान्तः
स्यात् सप्तमे देशचरो ऽथ लग्नः ॥८॥७॥
स्याद्वानराकारमुखः खरत्व-
क्छिरास्तथा गुह्यरुगार्तितात्मा।
f.47v | हिंसानृताध्यातरतिप्रसक्तः
सुहृ(त)प्रियो दुःप्रसहो ऽष्टमांशे ॥९॥८॥
दीर्घः कृशो व्यस्तललाटकर्णो
गौरो हयाकारमुखो विहारी।
कोपी त्वृजुर्बह्वभिध्यानशीलो
मेषे नरः स्यान्नवमांशजातः ॥१०॥९॥ मेषः ॥
सम्मासिताङ्गो विषमावलोकी
सुहृत्स्वतन्त्रप्रकृतिर्विरुद्धः।
विस्तीर्णपूर्वार्धमुखो ऽतिलुब्धो
नीचान्त्यकर्मा प्रथमे वृषांशे ॥११॥१॥

Apparatus

6a उद्वृत्त° N   7c कृशस्फिक्कथोरुश्चरण K   7d षष्टांगजो N   8d र्थलिग्नः N   9b °क्शिरस्तथा N   9c °प्रसक्ता N   10a दीर्घोक्षसो N, दीर्घ . . . कृश K   10c रिजु° N, अनृजु K   11b प्रकृतिविरुद्ध K   11d नाचृत्यकर्मा N, अन्त्यकर्मा . . . नीच K

31,12–17

विस्तीर्णकर्णांससुखो ऽल्पमेधा
    गम्भीरदृग्मिथ्यबहुप्रलापी।
विरुद्धदारः प्रतिकूलकर्मा
    वृषे द्वितीयांशकजो ऽलसात्मा ॥१२॥२॥
स्फुटाग्रनासापुटदृग्महांसो
    वृद्धार्जवः स्प(ष्ट)करो वपुष्मान्।
यज्ञाग्निकर्माभिरतस्तृतीये
    स्यादंशके सुस्थिरपादपार्ष्णिः ॥१३॥३॥
रक्तच्छविर्दीर्घभुजो महौजा
    धृष्टध्वनिश्छागदृगप्रशान्तः।
सदृप्तघोणो ऽन्यधनापकर्षी
    तीक्ष्णश्चतुर्थां(शा)कजो ऽधिसत्त्वः ॥१४॥४॥
महर्षभाकारसुखो विलासी
    बृहद्भुजस्कन्धकटिः सुवक्षाः।
व्यालम्बतुङ्गाग्रनसो ऽवदातः
    स्यात् पंचमांशे घनकेशपाशः ॥१५॥५॥
स्वक्षः स्थिरस्निग्धतनुः सुकेशो
    माधुर्यहास्यप्रसुरः प्रगल्भः।
कामी रतिज्ञः कुशलः कलासु
    षष्ठांशजो वल्गुकथः सुवे(शः) ॥१६॥६॥
ईषद्विलम्बाग्रनसो ऽसिताक्षः
    सूक्ष्मान्तकेशो गुरुपाणिपादः।
उद्बद्धकायः स्वजनैर्विरुद्धः
    स्यात् सप्तमांशे मृतपूर्वभार्यः ॥१७॥७॥

Apparatus

12b मिथ्याबहुप्रलापी K   12d महात्मा N, अलसात्मा K   13b मृदङ्गवान् K   14c सतुङ्गघोण K   14d no space in N   17c उद्बन्धकायः N, उद्बद्धाङ्ग K

31, 18–23

चलस्फुटघ्राणपुटो ऽल्पकर्मा
 व्याघ्रेक्षणो व्याघ्रपदाभिषादः ।
भिन्नध्वनिः केशनखैः खरैः स्या-
 द्दुर्वृत्तशीलो वृषभे ऽष्टमांशे ॥१८॥८॥
मानी बहुक्रोध(सु)तो ऽल्पसत्त्वो
 भीरुः समस्निग्धतनुः प्रसिद्धः ।
सुसंचितार्थः कितवप्रलापी
 कृशस्त्वधस्तान्नवमे वृषांशे ॥१९॥९॥ वृषः ॥
प्रस्रस्तरोमोपचितांसबाहु-
 र्धीनासितापाङ्गदृगग्र्यघोणः ।
f. 48 दूर्वालताभः कृशपाणिपाद-
 स्तृतीयराशौ प्रथमांशजातः ॥२०॥१॥
घटीशिरा मध्यविलग्नघोणो
 हिंसाभ्यसूयाभिरतो विकर्मा ।
असंस्थितौष्ठो बहुवाक्यचेष्टो
 भवेद्द्वितीये बहुविग्रहाध्वः ॥२१॥२॥
गौरो ऽभिरक्तान्तदृगल्पमानः
 सुवृत्तवंशांसनसः समाङ्गः ।
दीर्घाननो वाक्(य)तरो ऽसितभ्रू-
 र्भवेत्तृतीयांशकजः सुमेधाः ॥२२॥३॥
सुभ्रूललाटो विपुलाक्षवक्त्रा
 नीलोत्पलाभः स्मितदन्तपंक्तिः ।
कामी मृगाकारसुसूक्ष्मतर्षो
 प्रस्रस्तरोमोपचिताङ्गदेहः ॥२३॥४॥

Apparatus

18a °स्फुटाघ्राण° N 19c स्वसंचितार्थः N 20c दूर्वालटाभः N 20d °स्तृतीयभांशे N 21a मध्यविलिप्तघोणो N, मध्यलग्नघोण K 22a °गत्स्रमानाः N 22b °वंशास्त्रनसः N 22c वाक्य-(ये)तुरो N

31, २४–२९

महोदरः पीवरबाहुवक्षाः
    काणः खरस्थूलशिरा गुरुस्फिक्।
सितानुकूलाक्षिरगम्यगामी
    माया(पटुः पंचमज)स्तृतीये॥२४॥५॥
मध्वीक्षणो व्यस्तललाटवक्षा
    गौरः समोदारशरीरसत्त्वः।
चलप्रलापी कितवोपचारः
    षष्ठांशजातो रुधिरोष्ठदन्तः॥२५॥६॥
ताम्रारुणाच्छच्छविरुन्नताक्षः
    पीनोदरश्चारुविशालवक्षाः।
शिल्पार्थशिक्षास्वधिकप्रपन्नः
    स्यात् सप्तमांशे रतिहास्यचित्तः॥२६॥७॥
श्यामो गुरुर्व्यस्तविवृद्धदेहो
    दीर्घोऽसिताक्षो मधुराभिधानः।
आलेख्यलेख्यादिकलास्वभिज्ञः
    स्यादष्टमांशे ललितो मनस्वी॥२७॥८॥
वृत्तासिताक्षः सुविभक्तदेहः
    स्निग्धप्रसन्नच्छविरग्र्यमेधाः।
नारीरतिज्ञो नवमांशजः स्याद्
    विज्ञानकाव्यादिनिविष्टबुद्धिः॥२८॥९॥ मिथुनः॥
सुमूर्धजो निर्मलगौरगात्र-
    स्तन्वंसवक्षा मधुरोन्नताक्षः।
स्यान्मण्डलाकारमुखश्चतुर्थे
    विशालकुक्षिः प्रथमांशजातः॥२९॥१॥

Apparatus

24c सितान्तकुद्धाक्षि° N, सितानुकूलेक्षण K  26c शिल्पास्त्रशिक्षा° N, शिक्षासु शिल्पनिपुण K  26d सप्तमंसे N  27b °भिगीतः N, °भिधानः K  27d ललित K  29a समुर्द्धजो N, सुमूर्धनि K

31,30–37

रक्तच्छविः पिण्डितहृत्प्रदेशो
मार्जारसंस्थानमुखास्यनेत्रः।
कलिप्रचण्डः समरोग्रकर्मा
त्यागी द्वितीये कृशजानुजंघः॥३०॥२॥
गौरः सुवक्षाः सुकुमारपीनो
f.48v नारीविलासाकृतिकान्तमूर्तिः।
प्रवृद्धबुद्धिर्मृदुकर्मशीलो
वाग्मी तृतीयांशकजो ऽलसश्च॥३१॥३॥
विशालपीनोच्चतनुः सुकेशः
श्यामच्छविः स्वक्षनसो नतभ्रूः।
क्षीणो(त्र)दन्तावलिरर्थलिप्सुः
स्वजातिसम्बन्धि—शठश्चतुर्थे॥३२॥४॥
॥३३–३४॥⟨५–६॥⟩
रूक्षासितो ि—न्ननखाग्रकेश-
श्चलद्रुः पीनसिरालजंघः।
काकाकृतिघ्राणमुखो ऽवलेपी
स्यात् सप्तमें ऽशे ऽन्यगृहानुचारी॥३५॥७॥
घटीशिरा मध्यविलग्नघोणः
कृष्णः सुसंस्थानमुखोरुजांघः।
दुःशिल्पकर्मा स्वनियुक्तबुद्धिः
स्यादष्टमे गर्हितशीलवृत्तिः॥३६॥८॥
गौरो झषाक्षः पृथुपीनवक्षा
गुरूदरो दीर्घहनुर्महोरुः।
लम्बौष्ठपार्ष्णिः कृशजानुगुल्फ-
श्चतुर्थराशौ नवमांशजः स्यात्॥३७॥९॥कर्कटः॥

Apparatus

31a °पीन N  32b स्वेक्षणसो N  32d सुजाति° N  33–34 no space in N  35c °प्रायमुखा N  36a घाटा° N, घण्टा° K  36b स्वसंस्थानमुखोरुजान्तः N, सुमुख-नुजाङ्गः K  37b °महोरूः N  37c °गुल्म° N, गुल्फ K

31,38–43

मन्दोदरो ऽभ्युन्नतपीनवक्षा
रक्तोग्रदृक्कुङ्गनसो महौजाः।
दुर्मर्षणो वृत्तशिराः प्रचण्डः
स्याद्रक्तगौरः प्रथमे तु सिंहे ॥३८॥१॥
अभ्युन्नतव्यस्तललाटवक्षाः
स्निग्धासितस्ताम्रविशालनेत्रः।
पृथूग्रघोणो गुरुदीर्घबाहुः
सुभ्रूर्द्वितीये चतुरस्रदेहः ॥३९॥२॥
रोमांचितो व्यायतचारुवक्षाः
स्निग्धाच्छविभ्रान्तचकोरनेत्रः।
उन्नासिको बर्हिणवृत्तकण्ठ-
स्तृतीयजस्त्यागरुचिर्विहारी ॥४०॥३॥
महाललाटो घृतमण्डगौरो
दीर्घासिताक्षो मृदुमूर्धजश्च।
भिन्नध्वनिर्दर्दुरतुल्यकुक्षिः
सिंहे चतुर्थे पृथुपाणिपादः ॥४१॥४॥
स्निग्धाच्छविघ्रोणदृगल्पकेशो
घटीशिरा रोमचिताङ्गकायः।
लग्नोदरो ऽभ्युन्नतपीनवक्षा
दंष्ट्रोत्कटः पंचमजः प्रचण्डः ॥४२॥५॥
ह्रस्वाल्परोमोपचिताङ्गयष्टि-
र्दीर्घः पृथुस्निग्धसमाहिताक्षः।
श्यामः क्रियावाक्यविशारदात्मा
विकत्थनः स्त्रीचतुरश्च षष्ठे ॥४३॥६॥

Apparatus

40a रोमाचितव्यायत° N, रोमान्वितायत K 42b घण्टा° K रोमचिताधिकायः N, लोमशाङ्गतनु K 42c लम्बोदर K 43a स्रस्ताल्परोममूर्ति K 43d वकत्थनः N, विकत्थन K

31,44-49

दीर्घाननः पीनसिरालदेहः
f. 49 स्त्रीदुर्भगो रोमचितो | ऽसिताङ्गः।
सुपण्डितः कर्मसु धीरसत्त्वः
स्यात् सप्तमे निष्ठुरकूटभाषी ॥४४॥७॥
उद्दण्डपूर्वार्धमुखो ऽल्पचेष्टो
निःस्वः सुहृद्द्वोरगभीरदृष्टिः।
दुर्बद्धवाक्कालस्वरः स्थिराङ्गः
स्यादष्टमे गर्हितशिल्पकर्मा ॥४५॥८॥
स्याद्रासभाकारमुखो ऽसिताक्षो
व्यालम्बबाहुर्दृढपार्ष्णिजंघः।
श्यामो ऽभिनिःपीडितकुक्षिवक्षाः
सिंहे सुवृत्तो नवमांशजातः॥४६॥९॥<सिंहः॥>
श्यामः समभ्युन्नतपीनवक्षाः
सारङ्गसंस्थानमुख(ाक्षो)वक्षाः।
प्रदानसम्भोगरतिर्धनानां
षष्ठे ऽङ्गनेप्सुः प्रथमांशजातः॥४७॥१॥
श्यामो गुरुः स्निग्धगुरूदरोरु-
र्लुब्धः शठः स्निग्धमृदुप्रलापः।
पूर्वाननः शिल्पविवादधीरः
षष्ठे द्वितीयांशकजः सुचक्षुः॥४८॥२॥
प्रशस्तगौरोपचिताङ्गबाहु-
र्योषिद्विलासस्थितिकान्तमूर्तिः।
स्पष्टस्फुटघ्राणपुटः सुचक्षु-
र्वाग्मी तृतीये श्रुतकाव्यवित्तः॥४९॥३॥

Apparatus

44a दीर्घांटनः N, दीर्घानन K पीनसिरालकेशः N, सिराल . . . पीनतनु K 44c सुपिण्डितः N 44d °भाषी K 45c दुर्बद्धभाका° N, उत्कृष्टवाक् K 47b सारङ्गाक्ष K 49b °योषिद्विलासंस्थिति° N 49c स्पष्टपुटघ्राणपुटः N, स्फुटनासिक K 49d °वृत्तिः N

31,50–55

रक्तातिगौरः सुकुमारमूर्ति-
दीर्घोन्नताङ्गो मधुरो ऽल्परोमा।
विस्रस्तबाहुः कृ(श)पश्चिमार्ध-
स्तीक्ष्णश्चतुर्थे स्फुटदृच्छिरस्कः ॥५०॥४॥
पीनोन्नतस्कन्धभुजो महांसः
स्थूलोष्ठवक्त्रः पृथुशीर्षवक्षाः।
उद्वृद्धजंघो महिषाक्षिकुक्षिः
पराश्रयः पंचमजः कृतार्थः ॥५१॥५॥
स्निग्धच्छविः स्रस्ततनुः सुवाक्यो
विज्ञानशास्त्रार्थविकृष्टबुद्धिः।
चातुर्यवाक्यप्रवरो विहारी
षष्ठांशजो लैख्यलिपिध्वनिज्ञः ॥५२॥६॥
गौरो मृदुस्निग्धसुजातकेशः
पृथूदरो ह्रस्वमुखोन्नतांसः।
हंसप्लुताक्षिः पृथुपाणिपादः
पानप्रियः सप्तमजो ऽम्बुभीरुः ॥५३॥७॥
दीर्घः प्रचण्डः सुकुमारगौर-
श्चित्रोन्नताक्षो मधुपिङ्गरोमा।
व्यालम्बपीनोरुभुजः सुजानु-
र्वृत्ताग्रघोणो ऽष्टमजो ऽभिमानी ॥५४॥८॥
श्यामो मृदुस्निग्धतनुर्नतांसो
f.49v घनासितः पाद्मविशालनेत्रः।
स्त्रीसङ्गलीलाचतुरो ऽभिमानी
लेख्यादिविद्वान् नवमांशजातः ॥५५॥९॥कन्या॥

Apparatus

50a रक्तारिगौरः N, मधुररक्तगौर K   50b °दीर्घो नताङ्गो N   51b स्थूलोष्ठवाक्यः N   51c उद्वृत्त° N, उद्बद्ध° K   53a स्निग्धभुजो ऽन्ते च केशगौर K   53c हृन्सधूताक्षि N   55b घनासिता पाद्म° N   55c स्त्रीसन्धलीडा° N

31,56-61

गौरो विशालभ्रमरासिताक्षो
    दीर्घाननः पण्यविदर्थगोप्ता।
श्लाघी घनश्मश्रुरुदारवाक्यः
    स्यातस्तुले स्यात् प्रथमांशजातः॥५६॥१॥
निमग्नमध्यो घनसङ्गतभ्रू
    रक्तासिताङ्गः प्लुतमण्डलाक्षः।
करालदन्तावलिरुद्धतांसो
    विस्तीर्णहृच्छीर्षतनुर्द्वितीये॥५७॥२॥
गौरो हयाकारमुखास्यदन्तः
    कृशः पृथुर्दीर्घनताग्रघोणः।
मध्वुन्नताक्षः स्फुटताम्रकेश-
    स्तृतीयजो लब्धयशाः शरण्यः॥५८॥३॥
कृशो मृगोद्भ्रान्तदृगायताक्ष-
    स्तन्वंसबाहून्नतदन्तपंक्तिः।
श्यामः प्रभुर्हृस्वनसो विषादी
    चतुर्थजो भीरुरसत्स्वभावः॥५९॥४॥
गम्भीरदृग्म(ध्य)विलग्नघोणः
    कालः खरत्वङ्नखकेशदृष्टिः।
दृप्तः क्रियारम्भपटुः स्थिरात्मा
    सुहृत्प्रियः पंचमजोऽग्रमानः॥६०॥५॥
सुनासिकावंशविशालवक्त्रो
    गौरोऽसिताक्षो गुरुधीरदेहः।
शास्त्रार्थशिक्षाव्यवहारविज्ञ
    षष्ठांशजः स्निग्धनखो नयज्ञः॥६१॥६॥

Apparatus

56b दीर्घोटनः N, दीर्घानन K   57a घनसंहतभ्रू K   57c °रुद्धतास्त्रो N   58d °स्तृतीयगो N   59b °पक्तिः N   60b °शोकदृष्टिः N, खरकेश K   61a सुनासिकवंश° N   61c शास्त्रास्त्र° N

31,62-67

रक्तावदातो गुरुह्रस्वदेह-
स्तब्धः कृशो ह्रस्वनसो ऽललाटी।
व्यङ्गः प्रचण्डो रतिगीतवश्यः
स्यात् सप्तमे ज्योतिषविद्यशस्वी ॥६२॥७॥
श्यामः पृथुस्कन्धशिराः सुचक्षु-
स्तुङ्गांसगण्डः कठिनायताङ्गः।
घनासितभ्रूनयनाग्रपक्ष्मा
निर्णिक्तवागष्टमजः प्रभोक्ता ॥६३॥८॥
प्रसन्नगौरः समचारुमूर्ति-
र्दाक्षिण्यहास्यादर(गौर)वक्त्रः।
स्वक्षः पटुः कृत्स्नकलासु वाग्मी
विटस्वभावो नवमे तुलांशे ॥६४॥९॥तुला॥
ह्रस्वोन्नतौष्ठाग्रललाटघोणः
संरुद्धपूर्वार्धतनुर्दृढाङ्गः।
घटीशिरा दर्दुरकण्ठकुक्षि-
र्गौरो ऽष्टमाद्यांशकजो ऽलसात्मा ॥६५॥१॥
f.50 गौरः पृथुव्यायतबाहुवक्षा-
स्ताम्रोग्रदृक् साहसधीरकर्मा।
उद्वृत्तसंह्रादबलांवमर्दो
हिंस्रो द्वितीयांशकजो ऽल्पकेशः ॥६६॥२॥
प्राज्ञो दृढस्कन्धभुजः प्रवृद्धो
गौरो मृदुः स्निग्धविबद्धवाक्यः।
प्रभिन्नकेशो रुचिराधरौष्ठः
कामी तृतीयांशकजो वपुष्मान् ॥६७॥३॥

Apparatus

62d मनस्वी K 64a प्रशर्मगौरः N, प्रसन्नगौर K 65c घटासिसिरा N, घटक K दर्दुरपृथुकुक्षि° N, दर्दुर-कुक्षि K 66a पृथुव्यायतबाहुपक्ष्मा N, पृथ्वायतहृ-द्वाहु K 66c उद्वृत्तसंह्रादबलंवमाद्रु N, उद्वृत्तबल-निहन्ता K 67b °विबन्धवाक्यः N

31,68-72

श्यामो ऽसितोन्नद्धशिरोरुहाक्षी
दीर्घाननः पीनहनुर्वराङ्गः ।
कृष्णः शठो द्रोहरतिश्चतुर्थे
धीरप्रगल्भः परदारवश्यः ॥६८॥४॥
नु((ष्टो))दरो व्यस्तदृढांसयष्टि-
र्बृहच्छिरा मग्ननसो ऽबिरोधः ।
गम्भीररक्तान्तदृगुग्रकर्मा
हिंसारतः पंचमजो यशस्कः ॥६९॥५॥
सुपृष्ठवंशोच्चनसो घनभ्रू-
र्धृष्टो हयस्तब्धदृगुग्रकर्मा ।
गम्भीरसत्त्वो ऽल्पकथो नयज्ञो
दक्षो निरुद्धप्रणयश्च षष्ठे ॥७०॥६॥
विदारितास्यः प्रविकीर्णदन्तो
निम्नोदरः स्रस्तभुजः प्लुताक्षः ।
दीर्घो ऽसितोद्वृद्धशिरा नताङ्गः
स्यात् सप्तमांशे पृथुसक्थिवक्षाः ॥७१॥७॥
विशीर्णवंशः स्फुटिताग्रघोणः
कालो वराहाकृतिदीर्घमूर्तिः ।
भिन्नोत्कटैर्मूर्धरुहैरसह्यो
मलीमसाङ्गो ऽष्टमजः कुबुद्धिः ॥७२॥८॥

Apparatus

68a °न्नत्यशिरो° N   68b दीर्घोटनः N   68c कृष्टः N   69a मृष्टोदर K   69c पम्भीरारक्तान्त° N, गम्भीर . . . ताम्राक्ष K   70a सम्प्रष्टवंशोच्चनसो N, पृष्ठोच्चनस K   70b °र्नृपो N, धृष्ट K   70c गम्भीरसत्त्वाल्पकथो N, गम्भीरसत्व . . . अल्पकथ K   71b स्रस्ततनु K   71c सितोद्धृद्ध° N   71d पृथुसक्तिवक्षा N   72a विशार्णवंशः N   72b कलो N, काल K   72c भिन्नोत्कटो N, भिन्नोत्कटैः K

31,73–78

गौरो महाकेकरदृक् प्रशान्तः
पिङ्गाग्ररोमा दृढपीवर⟨ा⟩ङ्गः ।
बह्वङ्गनो देवगुरुप्रणामः
प्रदानशीलो नवमांशजातः ॥७३॥९॥ वृश्चिकः ॥
बृहद्वसश्छागदृगुच्छिरस्को
दृढोग्रभाषी तनुभिन्नरोमा ।
गौरः प्रचण्डः पृथुसक्थिवक्षाः
पूर्वांशजो धन्विनि वृद्धमुष्कः ॥७४॥१॥
प्रतुङ्गशीर्षः पृथुपीनवक्षा
विस्तीर्णचक्षुर्विकृताग्रघोणः ।
गुरुस्फिक⟨गू⟩रुः स्थिरधीरबुद्धि-
र्महाहनुः स्त्रीवशगो द्वितीये ॥७५॥२॥
शास्त्रार्थशिक्षाकुशलो मनस्वी
विभक्तसम्पूर्णतनुः सुचक्षुः ।
स्त्रीवल्लभो हास्यरतिप्रगल्भ-
स्तृतीयजः शिल्पकथास्वभिज्ञः ॥७६॥३॥
f. 50v K⟨द⟩क्षः सुचक्षुर्मधुमण्डलाक्षो
गौरोऽटनः कूर्मविवृद्धकुक्षिः ।
त्रासः पृथूदार⟨स⟩दीर्घ⟨मूर्ति-⟩
श्चतुर्थजः स्याच्चिकुराचितास्यः ॥७७॥४॥
विस्तीर्णकर्णाक्षिमुखो महाभ्रूः
प्रवृद्धसिंहोग्रवपुस्त्वधृष्यः ।
पीनोन्नतस्तन्वविरूढरोमा
दृढस्मृतिः पंचमजः प्रहन्ता ॥७८॥५॥

Apparatus

col. विच्छ ॥ N   74b दृढाग्रहासी N, स्फुटाग्रभाषी K   74c पृथुशक्ति° N   74d बद्धमुष्कः N, सुबद्धवृषण K   75c गुरुस्फिगूरु K   75d °र्महामनु N, महाहनु K   स्त्रीवङ्गलो N   76a शास्त्रास्त्र° N   76b विभक्तसम्पूर्णनतः N   77a दक्ष K   77b कुर्म° N, कृच्छ्र K   77c °दारदीर्घत × × णशः N, पृथुसुभमूर्ति K   77d °रानतस्य N

31,79–84

स्निग्धासितान्तायतदृक् सुमूर्ति-
र्महाललाटः पृथुपूर्णवक्त्रः।
विद्वान् कथामण्डलहास्यवित्तः
षष्ठांशजः काव्यरतिर्विनीतः॥७९॥६॥
श्यामो मृदुस्तनुशिराः प्रदीर्घो
विशालदृग्वृत्तहनुर्वचस्वी।
नैपुण्यदाक्षिण्यपटुर्विहारी
स्यात् सप्तमे सङ्ग्रहसत्त्वशीलः॥८०॥७॥
विस्तीर्णशीर्षश्चिपिटाग्रघ्राणो
विभ्रान्तचक्षुः सुहृदादरश्च।
बहुप्रभाषी प्रतिबद्धवैरः
((स्यात्))ष्टमें ऽशे वशगो गुरूणाम्॥८१॥८॥
गौरो हयाकारमुखो ऽसिताक्षो
दीर्घो ऽल्पवाक्यः कुटिलोरुजंघः।
विद्यौषधिज्ञो ऽभिमतः सतां स्या-
दन्त्यांशजातो नवमे ऽविवादी॥८२॥९॥धनुः॥
प्रभिन्नवागुद्धुरलाग्रदन्तः
श्यामः खरैः केशनखैः कृशाङ्गः।
गीताद्यव(हा)स्याभिरतश्चलार्थः
प्रागंशजः स्यान्मकरे मृगाक्षः॥८३॥१॥
श्यामासितो वक्रनसः समर्थो
गीताभिरामः प्रचुराङ्गनस्तु।
शठो ऽलसो रुग्बहुलः प्रकामी
मन्दात्मजो दानरुचिर्द्वितीये॥८४॥२॥

Apparatus

79c विद्वन् N 81c प्रतिबद्धगौरो N, सुबद्धवैर K 81d वसगो गुरूठ N, गुरुष्वभिमत K 82d विषादी K 83b खरः N 83d प्रागंशकः N 84a समार्थो N 84b प्रसुरो ऽङ्गनासु N, प्रचुराङ्गनासु निरत K

31,85-९०

प्रस्पष्टवंशः स्फुटिताग्रघोणो
व्यायामगान्धर्वकलाभिरामः ।
गौरोऽतिरक्तान्तदृगिष्टकर्मा
स्यातस्तृतीये बहुमित्रबन्धुः ॥८५॥३॥
रक्तासितो दीर्घललाटबाहु-
र्घ्रागालिजानुः कृशपाणिपादः ।
प्रकीर्णकेशो विरलाग्रदन्त-
श्चतुर्थजो विग्रहवाक्यशीलः ॥८६॥४॥
उद्दण्डघोणस्त्वसितायताक्षः
श्यामो बृहत्पीनभुजोरुशीर्षः ।
कुस्त्रीपतिः स्थूलपटो विवंशः
f. 51 स्यात्तण्डकः पंचमजः प्रभोक्ता ॥८७॥५॥
सुनासिकाक्षः कुटिलाग्रकेशः
स्निग्धच्छविः पीनहनुः प्रवक्ता ।
कृशाङ्गजंघः समसूक्ष्मदन्तः
षष्ठांशजः कामरतिः सुवेशः ॥८८॥६॥
श्यामोऽलसः कुंचितभिन्नकेशः
खराग्रपादाङ्गुलिरल्पभाषी ।
संरूढदेहः पृथुपाणिपादः
स्यात् सप्तमे पिण्डितपीनवक्त्रः ॥८९॥७॥
गम्भीरधीरोग्रदृगल्पभाषी
चक्राननो भिन्ननखाग्रकेशः ।
उद्वृत्तकायोल्बणमानदर्पो
घटीललाटो ऽष्टमजः कुशीलः ॥९०॥८॥

Apparatus
85a स्फुटितास्त्र° N 86b °र्घ्रागलि° N कृशपीनपादः N 87a उद्दण्ड° K 87b °शीलः N 87c विवड़ो N, सुनासिकावंश K 87d सानाण्डणः N 90a गम्भीरपीनोग्र° N, गम्भीरदृक् K 90b रक्तास्य K 90c उद्वृत्त° N 90d घाटा° N

31,९१-९६

श्यामः प्रवृद्धो विपुलाक्षिवक्षा
    विस्तीर्णसम्पूर्णमुखोच्चघोणः।
माधुर्यसङ्गीतरतिः सुमेधाः
    पीनस्त्वधस्तान्नवमांशजातः॥९१॥९॥मकरः॥
श्यामोऽसितः पीनहनुः कृशाङ्गो
    दीर्घासिताक्षो विटकूटचेष्टः।
मार्गानुचारी निपुणो नृशंसः
    कुम्भे चरात्मा प्रथमांशजातः॥९२॥१॥
कालः खरत्वङ्खरदृष्टिकेशो
    घाटालमूर्धा प्रविषण्णवक्त्रः।
उद्वृत्तचक्षुर्दशनोष्ठकर्णो
    द्वितीयजो मन्दगतिः कुशिल्पः॥९३॥२॥
विस्तीर्णरक्तान्तपरिप्लुताक्षः
    प्रचण्डघोणः पृथुदन्तपंक्तिः।
पीनोन्नतोदारहनुर्महौजा-
    स्तृतीयजो मन्दकथः प्रभोक्ता॥९४॥३॥
दीर्घः कृशो मन्दहनुर्नतभ्रू-
    र्गम्भीरदृष्टिः स्फुटदन्तपंक्तिः।
उन्नासिकः कर्कशवाक् प्रवासी
    चतुर्थजो भीरुरनिष्टकर्मा॥९५॥४॥
विदारितास्यो विनताग्रघोणः
    कृशोऽसितो जिह्मकथोऽलसात्मा।
संमूढधी स्थूलकटीप्रदेशः
    स्यात् पंचमे मन्दसृजो मलात्मा॥९६॥५॥

Apparatus

९२c मार्गानुकारी N   निपुत्रो N   ९३b घाटालु° N
९३c °दशनोच्चकर्मा N   ९४d प्रयोक्ता K   ९५c कर्कसु° N   ९६c स्थूलकुटी° N   ९६d ल(सा)त्मा N

31,97–102

विदारितच्छिद्रनसो महास्यो
  मधुस्फुटाक्षः पृथुपीनदेहः।
प्लुतध्वनिर्हास्यरतिश्च षष्ठे
  विकत्थनो ऽनिश्चितमन्दसत्त्वः॥९७॥६॥
कृशस्तनुः श्मश्रुविलग्नवक्त्र-
  स्तन्वायतो वक्रनसो ऽतिरक्तः।
f. 51v अक्लिष्टदन्ताग्रपदाङ्गुलिश्च
  स्यात् सप्तमे प्रस्खलितो ऽविधायी॥९८॥७॥
विस्तीर्णकर्णोन्नतहृल्ललाटः
  प्रोद्दण्डदृग्घ्राणपु(टो) महांसः।
श्लक्ष्णः स्थूलविवृद्धजंघो
  विस्तीर्णमूर्धाष्टमजः स्वतन्त्रः॥९९॥८॥
श्यामः समोदारतनुः सुवक्त्र-
  मृदुप्रलापो ऽसितसूक्ष्मकेशः।
यज्ञव्रतक्ष्मापतिकर्मशीलः
  स्यात् कुम्भराशौ नवमांशजातः॥१००॥९॥कुम्भः॥
गौरप्रसन्नाम्बुवपुर्विलासी
  व्यालम्बकेशः सुनसो ऽसिताक्षः।
चार्वायतांसः पृथुदीर्घबाहु-
  र्मन्दोदरः स्यात् प्रथमे झषांशे॥१०१॥१॥
महाशिरस्कः पृथुतीक्ष्णदन्त-
  स्तुङ्गाग्रघोणो विनतांसवक्षाः।
दुर्मर्षणः पिङ्गदृगुग्रसत्त्वः
  क्रियामदुर्मांसरतिर्द्वितीये॥१०२॥२॥

Apparatus

97c प्लुताध्वनि° N 98b िरक्तः N 98d प्रस्वलितो N विधार्यी N 99c °भिवृत्तजंघो N 100c °व्रताद्व्यायत° N 101b व्यलम्ब° N

31, 103–108

गौरः श्रमस्त्रस्ततनुः सुचक्षु-
    र्दाक्षिण्यधर्मप्रचुरो विनीतः ।
शठान्तरात्मा चतुरो निवीतः
    शास्त्रार्थविद्वल्गुकथस्तृतीये ॥१०३॥३॥
प्रवृद्धघोणोग्रतनुर्झषाक्षो
    गौरोऽहनुः श्मश्रुसुखः प्रवृद्धः ।
धीरः क्रियोपायपटुर्नयज्ञः
    सत्त्वाधिकस्तुङ्गनसश्चतुर्थे ॥१०४॥४॥
उदग्रमध्योऽल्पविलग्नघोणो
    बृहच्छिराः स्वीक्षणदन्त(पं)क्तिः ।
दीर्घोऽसितो दुःप्रसहोऽल्पवाक्यो
    हिंसारतिः पंचमजः प्रभासी ॥१०५॥५॥
प्रसन्नवंशोच्चनसो महाभ्रू-
    स्तिर्यग्दृगातुङ्गशिराः सुदेहः ।
क्रियासु नैपुण्यविहारशीलः
    षष्ठांशजो निष्कृतदन्तपंक्तिः ॥१०६॥६॥
सुनासिकावंशकपोलरोमाः
    कृशो मृगापाङ्गदृगानताङ्गः ।
श्यामो मृदुर्मार्गरतिः कृशार्थ-
    श्चलस्थितिः सप्तमजो विषादी ॥१०७॥७॥
दीर्घो बृहद्देहशिराः स्फुटाक्षः
    कृशोऽलसो रूक्षनखाक्षिकेशः ।
मन्दोऽल्पभाषी स्वजनावमर्दी
    स्थिरस्फुटघ्राणपुटोऽष्टमे स्यात् ॥१०८॥८॥

Apparatus

103a स्त्रमस्त्रस्त्रस्ततनु N, शस्ततनु K   103c विनीतः N   103d शास्त्रास्त्र° N   104a °तनुर्मुषाक्षो N   104c वीर K   105d हिंसारहिंसारतिः N   प्रभाषी N   106a प्रसव्य° N, प्रसन्न K   106d विस्कृत° N   107b मृगापुङ्ग° N   108d स्थितस्फुट° N

31, 109–113

ह्रस्वो मृदुस्निग्धदृगिष्टबन्धु-
f. 52 विशालवक्त्रालिततनुः सुरूपः।
विद्वान् कथाधर्मरतिः प्रशान्तो
मीनेऽन्त्यजः सुस्मृतिमान् प्रदाता ॥१०९॥९॥मीनः॥
मेषांशकेष्विन्दुबलाद्भवन्ति
चौरा वृषांशेषु तु सौम्यभाजः।
पूज्या महान्तो मिथुनांशकेषु
महाधनाः कर्कटकांशकेषु ॥११०॥
सिंहांशजाः स्युर्नृभुजो नपुंसाः
कन्यांशजाः शूरवरास्तुलांशे।
स्युर्वृश्चिकांशे भृतजीविनोऽन्त्या
धनुर्धरांशे तु भवन्ति दासाः ॥१११॥
पापा मृगाख्यांशकजा दुरन्ताः
कुम्भांशजाः स्युः पिशिताशचेष्टाः।
मीनांशजाताः पुरुषाः प्रधानाः
शशाङ्कयोगेषु नरा भवन्ति ॥११२॥
अंशाधिपस्थानबलस्वभावैः
क्षेत्रानुबन्धैः फलसङ्ग्रहैस्तु।
वाच्योंऽशकेभ्यो नियतो नराणा-
मन्योन्यसन्दर्शनसङ्क्रमैश्च ॥११३॥
यवनजातके नवांशफलम्॥

Apparatus

109c विद्वन् N 110a °बला भवन्ति N 110c पूजो N 111a सिंघान्सकाः N प्रमान्सः N 111b कन्यान्सकाः N 112b कुम्भांशकाः N पिशितोग्र° N 113a °स्वभाव N 113d °सङ्क्रमैश्च N

32,1–5

भौमांशके भौमनिरीक्षिते स्या-
च्चौरो वधाघातरतिः प्रचण्डः।
शुक्रेक्षिते पानधनाङ्गनाढ्यः
सौम्येन चौरश्चपलाधिवासः॥१॥
आरक्षिको ऽर्केण तु दस्युघाती
जीवेन राजा मतिमान् गुणाढ्यः।
सौरेण कोपी कलहाभिसक्तो
भवेन्नरो नैकभयोपकृष्टः॥२॥
शुक्रांशकस्थो भृगुजेन दृष्टः
सखान्वितं धान्यधना(ङ्ग)नाढ्यम्।
सङ्गीतवाक्यादिविदं बुधेन
प्रख्यातबुद्धिं गुरुणा कविं च॥३॥
पराङ्गना(का)मिनमुर्विजेन
स्फीतान्नपानं रविणाल्पबुद्धिम्।
सौरेण शूरं सुरताभिरामं
चन्द्रः प्रसूते रतिज्ञानिनं वा॥४॥
बुधांशकस्थस्तु बुधेन दृष्टः
⟨शास्त्रार्थशिल्पादिविदं⟩ सुवाक्यम्।
शुक्रेण सङ्गीतकथारतिज्ञं
जीवेन राज्ञः सचिवं नयज्ञम्॥५॥

Testimonia

With this chapter compare Sārāvalī 24.

Apparatus

1d °श्चपलोधिवाक्यः N   2b राज्य N   4a पराङ्गनाभिज्ञमूर्द्धजेन N, परदारदर्शनपरं कामिनमारेण K   4b स्फीतान्नवानां N रविकाल्प° N   4d प्रसूत N   °ज्ञाविनं N   5b शिल्पाचार्य . . . कवि K

32,6–11

कुजेन चौरं मतिमन्तमग्र्यं
सूर्येण रङ्गानुचरं विधिज्ञम् ।
मेधाविनं शिल्पविधिष्वभिज्ञं
सौरेण दृष्टो जनयेच्छशाङ्कः ॥६॥
स्वांशे शशी भास्करदृष्टमूर्ति-
स्तन्वर्थदेहं बहुडिम्बदुःखम् ।
लुब्धं धनादानरतिं कुजेन
जीवेन विद्वांसमुदारधैर्यम् ॥७॥
f.52v शुक्रेण योषित्स्थितिकर्मशीलं
तपस्विनं संयतमिन्दुजेन ।
सौरेण बन्धाध्वजदुःखतप्तं
क्रियासु धीरं निपुणं च सूते ॥८॥
सूर्यांशकस्थो रविणैव दृष्टः
सुरोषणं दुर्मदमप्रधृष्यम् ।
क्रूरं समृद्धं नृपसत्कृतं च
भौमेन सौरेण तु जीवनिघ्नम् ॥९॥
दुःखेन दारात्मजहेतुकेन
सन्तप्तमाद्यं भृगुजेन दृष्टः ।
बुधेन पैशन्यरतं प्रसूते
जी(वे)न मन्दः पृथुदेहमाद्यम् ॥१०॥
गुर्वंशकस्थो गुरुणैव दृष्टो
विशुद्धशीलं मतिसत्त्वयुक्तम् ।
शुक्रेण धीरं विषयप्रसक्तं
बुधेन काव्यश्रुतपण्डितं च ॥११॥

Apparatus

6a मतिमन्ति° N   7a स्वंशे N   7b बहुलम्ब° N
8b संयत° N   9b स्वरोषणं N   10a पैशून्य° N
11b °शीलो स्मभिना° N

32, 12–15

कुजेन शस्त्रास्त्रपटुं प्रचण्डं
दुःकीर्तिमन्तं रविणा बलस्थम्।
वृद्धाकृतिं प्राज्ञमनिष्टरूपं
दृष्टः शशी सूर्यसुतेन सूते॥१२॥
सौरांशकस्थो रविजेन दृष्ट-
श्चन्द्रो दरिद्रं कृपणं रुगार्तम्।
भौमेन बह्वर्थमनेकदुःखं
नृशंसमर्केण तु निःस्फुटस्वम्॥१३॥
शुक्रेण वृद्धाविधवाकुशीला-
स्त्रीभागिनं बाधरतं बुधेन।
सद्वृत्तसन्तोषपरं विनीतं
जीवेन दृष्टो जनयेद्विशिष्टम्॥१४॥
यत्रांशकस्याधिपतिर्बलीयान्
स्थितो भवेन्मन्दबले शशाङ्के।
तदंशकस्वामिसमानमूर्ति-
स्वभावचेष्टाः पुरुषा भवन्ति॥१५॥
यवनजातके चन्द्रांशदृष्टफलम्॥

Apparatus

12a शास्त्रास्त्र° N  13b कृपणा N  13d तनिःस्पुटः-स्वं N  14a °वानुशीला° N  14d °द्विशीष्टं N  15a यत्रांशके त्वाधि° N

33,1–6

प्रचण्डमो(ज)स्विनम(स्य)शूरं
भौमो ऽशके स्वे जनयत्यरिघ्नम्।
पराङ्गनादूषकमप्रशान्तं
शुक्रांशकस्थः परसंचयाढ्यम् ॥१॥
क्षुद्रं शठं कृत्यकरं बुधांशे
(चन्द्रांशके) शूरसमर्थमीर्ष्यम्।
सूर्यांशके नायकमुग्रवीर्यं
जीवांशके ग्रामपुराधिमुख्यम् ॥२॥
पापं धनद्रोहरतं दरिद्रं
सौरांशकस्थः क्षितिजः प्रसूते। अङ्गारकः॥
स्वांशे तु शुक्रो विविधान्नपानं
धनान्वितं स्त्रीबहुलं प्रसूते ॥३॥
भौमांशके दुष्टवधूपतिं च
प्राज्ञं बुधांशे रतिगीतिशीलम्।
ईर्ष्यं रतिप्रायमुदारदेहं
चन्द्रांशके नायकमुग्रमार्के ॥४॥
पुरप्रधानं बलसत्त्वयुक्तं
जीवांशकस्थः कविमुत्तमं वा।
f.53 |सौरांशकस्थो मृदुदारमाढ्यं
शुक्रो ऽल्पशीलं जनयेद्दुरन्तम् ॥५॥ शुक्रः॥
स्वांशे बुधः काव्यविदं सुवाक्यं
स्तेनं नृणां घातकरं कुजांशे।
शुक्रांशके हास्यकगेयवृत्तिं
चन्द्रांशके धर्मपरं कविं च ॥६॥

Apparatus

1a no spaces in N   2d ग्राममपरा° N   4d °मार्कि: N   6b द्युतकरं N

33,7-12

सूर्यांशके सेवकमल्पसौख्यं
जीवांशके ख्यातमतिं कविं वा।
शाठ्याभ्यसूयानृतदुष्टशीलं
सौरांशकस्थः प्रसवेत सौम्यः॥७॥बुधः॥
स्वांशे स्थितोऽर्कः प्रभविष्णुमुग्रं
शूरं परद्र(व्य)हरं कुजांशे।
शुक्रांशके भूपहृतस्वमाढ्यं
विद्वांसमन्याश्रयिणं बुधांशे॥८॥
कनिष्ठकर्मव्यसनाभिसक्तं
चन्द्रांशकस्थस्तनुदुर्बलं च।
गुर्वंशके मानिनमिष्टमित्रं
सौरांशके नीचपरिग्रहं च॥९॥सूर्यः॥
स्वांशे प्रवृद्धं मतिमन्तमार्यं
जीवः कुजांशे तु दृढाभिमानम्।
शुक्रांशके मन्त्रिणमार्यदारं
बुधांशके काव्यकलाविधिज्ञम्॥१०॥
विद्वांसमिन्द्वंशगतः समृद्धं
सूर्यांशके ख्यातमनल्पवित्तम्।
वाक्निष्ठुरं स्फीतधनं च जीवः
सौरांशकस्थो जनयेन्महान्तम्॥११॥जीवः॥
स्वांशे सुतस्त्रीधनिनं कुशीलं
कुजांशके पापरतं जिघांसुम्।
शुक्रांशके स्त्रीस्थितिकर्मशीलं
बुधांशके शिल्पिनमस्वतन्त्रम्॥१२॥

Apparatus

7a सूर्यङ्ङ्के N   8a स्वङ्के N   8c °हृतं ह्वमाढ्यं N
9a सनिष्ठकर्मा° N   9c गुर्वङ्के N   10a न वृद्धं N
°मार्यो N   10c °मार्यदार्यं N   11d °न्महत्तं N

33,13–16

स्त्रीदूषकोत्सर्गिनमैन्दवें ऽशे
सूर्यांशके प्रेष्यमनल्परोगम्।
कुकर्मसंसिद्धिधनं तु सौरो
जीवांशकस्थो जनयेन्मनुष्यम् ॥१३॥ सौरः॥
वर्गोत्तमांशेषु फलं समग्र-
मिष्टं वदन्त्यल्पतरं त्वनिष्टम्।
स्वक्षेत्रभांशेषु तु मध्यमाहुः
परर्क्षभागेष्वणकं दिशन्ति ॥१४॥
सर्वत्र सर्वे स्वगृहक्रमेण
ये राशयो द्वादश सम्प्रदिष्टाः।
तेभ्यः स्वभावा भवनस्वभावैः
सम्पृच्छ्य वाच्याः प्रसवेषु पुंसाम् ॥१५॥
भागाधिपः श्रेष्ठपतिर्विलग्ने
यदा भवेत् केन्द्रमुपागतो वा।
स्वभागसंज्ञोपगतस्य राशेः
f. 53v कृतं स्वभावं विदधाति | पुंसः ॥१६॥
यवनजातके ग्रहांशस्थितिफलम्॥

Testimonia

16 equals Jātakasāradīpa 23,1 (J[1]) and 30,1 (J[2]).

Apparatus

13a °त्सर्गिकमेन्दवें से N 14c स्वक्षेत्ररासेषु N 14d °ष्वणनिर्दिसन्ति N 16a श्रेष्ठबलो J[1], श्रेष्ठफलो J[2] °र्विलग्नो N 16c स्वभाव° N, स भाग° J[12] 16d कृतस्वभावं J[12] पुंसां J[12] col. °स्थितिदृष्टफलम् N

34, 1–6

पितुः प्रभावं द्युतिकीर्तितो ऽर्कः
स्यान्मेषभागोपगतः प्रसूते।
चन्द्रस्त्वसृक्पित्तकृतैर्विकारै-
स्तत्स्थो जनन्या रुजमादधाति॥१॥
जीवस्तु चौराग्न्यरिसंहृतार्थं
त(त्)स्थो हिरण्याग्रधनं करोति।
शुक्रः प्रदुष्टाहितनष्टदारं
विशारदं ख्यातधनं च भौमः॥२॥
बुधो बहुप्रस्खलिताभिधानं
चलं कुवृत्तोग्रसुहृज्जनं च।
सौरः स्वभृत्यार्जनलब्धकोशं
क्षुद्रं नरं बालवपुर्धरं च॥३॥
पितुर्विपद्घ्नौ वृषभागगो ऽर्को
मातुः शशी पुष्टिसुखावहः स्यात्।
जीवः स्थिरस्फीतधनप्रदस्तु
कान्ताङ्गनादारगतं तु शुक्रः॥४॥
सूते ऽधनं भूमिसुतो बुधस्तु
स्त्रीसौहृदं स्थूलविघुष्टवाक्यम्।
नारीजनोपस्थितमर्कसूनुः
शनैर्जराक्रान्ततनुं करोति॥५॥
तृतीयराशिक्रमभागगो ऽर्को
यज्ञादिवृत्तिं पितरं कुलाढ्यम्।
कुर्वीत चन्द्रो जननीप्रहर्षं
सौभाग्यसम्मानविभूतिकारी॥६॥

Apparatus

1a प्रभावो N   1b °भावोपगतः N   1c °विकण्यैः N   2b हिरण्यजधनं N   3c स्वभृत्याज्जन° N   4d °गतस्तु N   5a सूतो N

34, 7–12

गुरुः कलावाक्छ्रुतिसम्भृतार्थं
    पुंस्त्रीसमानार्यसुतं च भौमः।
शुक्रः कलामण्डितवल्गुरूपं
    चातुर्ययुक्तं प्रमदारतिं च ॥७॥
बुधस्तु वाक्यश्रुतिशिल्पशिक्षं
    प्रख्यातमित्रं मधुराभिधानम्।
सौरश्चलं धूर्तकुशिल्पवृत्तं
    वयःप्रकर्षाज्जरं प्रसूते ॥८॥
स्यात् कर्किभागोप(ग)तो यदार्क-
    स्तदा रुगाधिव्यसनोपतप्तम्।
आरोग्यसौभाग्यवपुःकृताणि
    प्राप्नोति चन्द्रो जननीसुखानि ॥९॥
गुरुर्धनान्यग्रतमान्युदारा-
    ण्युर्वीसितो नीचसुतं प्रसू<ते>।
कोशाभिधानप्र(चु)रं सुभार्यं
    शुक्रो विधत्ते कुलरूपयुक्तम् ॥१०॥
बुधेन मित्राणि बलस्थितानि
    प्राप्नोति सौख्यं परमं च सम्यक्।
क्षिप्रं ज़रीष्यत्यपनीयते च
    भृत्यैः कुभार्यादि<भि>रर्कजेन ॥११॥
पितुर्जयोदारकृद<र्के>भागे
    रविः शशी मातृभयार्तिकारी।
f. 54 सुहृन्नृपोपासनकृच्छ्रलब्धा-
    गोप्रायवित्तागमकृच्च जीवः ॥१२॥

Apparatus

7d प्रमदारितं N    8a °शिक्षा N    9a पि वार्को N
9b तदा N    9c °वपुस्कमणि N    10a °न्युग्रतमा° N
10c च भार्यं N    11c क्षिप्रज़रास्येत्य° N    11d no space in N    12a मातुर्जयोदारकृता × भागे N
12d °प्रायश्चित्ता° N

34,13–18

भौमस्त्वनुद्भूतमृतात्मजं वा
    करोति शुक्रस्त्वनवाप्तदारम्।
प्रभ्रष्टवाक्यं शशिजः कुमित्रं
    सौरो जराक्रान्तमनाथवश्यम्॥१३॥
षष्ठार्कभागे पितृदैन्यदो ऽर्को
    मातुः शशाङ्को मृदुविक्लवं च।
जीवस्तु कन्याश्रयवित्तदः स्या-
    न्नपुंसकासूतिकरः कुजः स्यात्॥१४॥
शुक्रो मृदूपद्रुतदेहदारं
    वाक्यप्रधानं च बुधः सुमित्रम्।
शनैश्चरो मन्दजरं पराद्यं
    स्त्रीपापभृत्यं पु(रु)षं करोति॥१५॥
तुलार्कभागे रविरुद्धृतार्थ-
    मारोग्यहीनं पितरं करोति।
वपुर्बलघ्नस्तु शशी जनन्या
    जीवो ऽध्वपण्याक्रयवित्तदः स्यात्॥१६॥
कुजः शठानेकसुतं भृगुस्तु
    क्रियारतिज्ञानविदार्यदारम्।
बुधः प्रवक्तारमनेकवाक्यं
    सूते वयःस्थं बहुभृत्यमार्किः॥१७॥
शीतोष्णदौ वृश्चिकभागसंस्थौ
    जनित्रिमित्रोः कुरुतः प्रणाशम्।
वित्तं गुरुर्हन्ति कुजः प्रसूतिं
    करोति पापातुरविक्लवानाम्॥१८॥

Apparatus

14a षष्ठे र्कभागे N   पिण्डदैन्यदो N   14c °पित्तदः N   14d °द्नपुंसता° N   15c पराद्धं N   16b पुरुषं N   16c °घ्नं तु N   17c °वक्त्रं N

34, 19–24

व्यङ्गाङ्गनं रौद्रमृताङ्गनं वा
    शुक्रो बुधो वाग्विकलं कुमित्रम्।
प्रेष्यं स्वयं तत्समजं च सौरः
    पापाकराच्चाकरसंश्रयं वा ॥१९॥
सूर्यो धनुर्द्वादशभागसंस्थः
    पितुर्नृपगौरवमानदः स्यात्।
तद्वज्जनन्या हिमदो गुरुस्तु
    प्रभूतयानाश्वहिरण्यदः स्यात् ॥२०॥
भौमो गुरुद्विड्खलसूतिकारी
    शुक्रो गुणाभ्यर्चितदारदाता।
बुधस्तु वाक्सौहृदसिद्धिदस्तु
॥२१॥
<शनैश्चरस्तु प्रकरोति सूतिं>
    वयस्विनां किङ्करसम्पदां च।
मृगास्यसंस्थः पितृहानिमर्कः
    कुर्याच्छशी वातरुजां च मातुः ॥२२॥
जीवः शुभप्राप्तिशमस्मृतिघ्नः
    प्रख्यातसूनूद्भवकृच्च भौमः।
शुक्रश्चलभूव्यथिताङ्गदारं
    कुसौहृदं वाग्विकलं च सौम्यः ॥२३॥
शनैश्चरः क्षिप्रजरं प्रसूते
    तडागगोभृत्यपरिष्कृतं च।
f. 54v शशाङ्कसूर्यौ घटभागसंस्थौ
    रुगार्तिवैकल्यकरौ जनित्रोः ॥२४॥

Apparatus

20a धनुर्द्वैगृह° N 20c तद्वज्जनन्त्रा N 21a °सूतकारी N 21c बुधस्त्व N 21d–22a no space in N 22b किङ्करसम्पदं N 23b °सूनुर्भव° N 23c °भूव्यपिता° N 24b तङ्गागोभृत्य° N

34,25-29

जीवोऽथ संस्थः स्मृतिवित्तदाता
कुजो भृतप्रेष्यसुतप्रदः स्यात्।
दासीवयोवीतवधूपतिं च
शुक्रो बुधो वाक्यहृतं कुमित्रम्॥२५॥
सौरस्तु वृद्धाकृतिमिष्टमित्रं
सूते नरं दासनमस्कृतं वा।
मीनर्क्षगौ धर्महिमांशुमन्तौ
प्रहर्षमानार्थकरौ जनित्रोः॥२६॥
अनेकरत्नाकरकृच्च जीवः
कुजः स्वपक्षाद्द्विडपत्यदः स्यात्।
शुक्रो महार्हत्प्रतिरूढदारं
बुधस्तु वाग्दुष्टमनिष्टमन्त्रम्॥२७॥
वयस्विनं सद्गुणभृत्यमार्किः
कुर्वीत मीनद्वयभागसंस्थः।
एवं ग्रहस्थानगुणं समीक्ष्य
सन्दर्शनान्यात्मवपुर्बलानि॥२८॥
भावस्थितिं भागकृतां निरुक्ती-
कुर्यादनिष्टेष्टगुणानुबद्धाम्।
ये धातुलिङ्गप्रकृतिस्वभावाः
प्रोक्ता वयःकालविनिश्चिताश्च॥२९॥

Testimonia

28c-29b equal Jātakasāradīpa 30,29.

Apparatus

25b मृत° N 25c °वयोगीत° N 26c मीनाद्यगौ N 27b °पक्षाद्धि° N 27c महार्हं प्र° N °रूपदारं N 28c एषां JN गृहे स्वामिगुणान् J 28d °नावात्मवपु° J 29a भागस्थितो N, योगस्थिते J योगकृते J निरुक्तिं N, निरुक्तं J 29b क्रयादनिष्टो ऽष्टगुणानुबन्धान् N, भूयादनिष्टेष्टगुणप्रबन्धात् J 29c °लिङ्गाप्र° N 29d °विनिश्चयाश्च N

34,30-31

क्षेत्राधिपानां गृहभागतुल्यै-
  र्विकल्पितास्ते विफलैर्विचित्रैः।
स्वलक्षणं यस्य तु यत्र यच्च-
  स्त्रीभोग्यमध्याश्रयमृक्षभर्तुः॥३०॥
स स्थानभागर्क्षगणात्मकैस्तद्
  विकल्पितोऽन्योन्यकृतैर्विकारैः।
मित्रादयो वर्णविकाररूपै-
  र्वाच्याः शतं तद्गृहभागतुल्यैः॥३१॥
यवनजातके सर्वग्रहगृहांशविफलः॥

Apparatus
30d °भर्त्रे: N   31d °र्वाच्य: N   col. सर्वग्रहमित्र-
मात्रादिगृहांशविभाग: N

35, 1–5

त्रिंशल्लवांशान् त्वथ रूपभेदान्
विकल्पयित्वात्मबलप्रतापान्।
य एव रूपस्थितिसत्त्वचेष्टा-
गुणाधिकाराः पठिता ग्रहस्य ॥१॥
त एव तद्भावसमुद्भवाश्च
वाच्याः स्वभागेश्वरसंस्थितेषु।
सन्ध्यादयोऽब्दा भवनक्रमेण
मासाश्च तद्भागपरिक्रमेण ॥२॥
दिनानि पाके ग्रहभागवत् स्या-
त्तत्स्थैर्ग्रहैः प्रोक्तफलैः क्रमेण।
सूर्यादिसम्प्रेक्षितराशिभागैः
समानि पाकानि फलानि पाके ॥३॥
त्रिंशल्लवादर्कगतात् प्रवृत्ति-
f. 55 राचारगस्तत्फलदो हितानाम्।
चन्द्रार्कसौम्योशनसावनेय-
जीवार्कजानां क्रमशो गुणः स्यात् ॥४॥
विपाककालो विधिपूर्वलब्ध
एकादिसप्तान्तपरिक्रमेण।
राश्यादिलिङ्गैर्बहुधा प्रभिन्नैः
परम्परस्थानगुणैः क्षणाद्यैः ॥५॥
〈यवनजातके पाककालः॥〉

Apparatus

1a त्रिंशल्लवस्थास्त्वप N   1b द्विकल्पयत्वा° N °प्रतापाः N   2a °द्भवानां N   3c सूर्यादसम्प्र-त्यरितस्य मासैः N   4b °चारगास्त° N   4d क्रमसद्गुणः N   col. no space in N

36,1–6

अन्योन्यसंयोगविकल्पनाभि-
र्न योगसंज्ञाभिरथास्ति कश्चित्।
योगा इतीमे पठिता ग्रहाणां
राश्यादिभारस्वगुणाश्रयार्थाः ॥१॥
ससुद्रवेष्विन्दुविलग्नपूर्वैः
शरीरिणामृद्धगुणक्रमैश्च।
संस्थानसादृश्यकृतास्त्वितीमे
योगा निरुक्ता यवनैः पुराणैः ॥२॥
संस्थानसादृश्यमनन्तकं स्याद्
द्रव्याणि नानाप्रकृतीनि दृष्ट्वा।
ग्राह्यास्त्विमे लोक(वि)भागसंस्थाः
संस्थानसादृश्यसमानसंज्ञाः ॥३॥
राश्याश्रयाणां सहजा गुणाभिः
संसर्गजा तत्सदृशाकृतीनाम्।
॥४॥

लग्नास्तगार्धान्तरगा यदि स्युः
सर्वे ग्रहाः सप्त शुभेष्वदृश्याः।
योगो बुधैर्नौरिति शब्द्यतेऽसौ
लब्धाव्ययायासवतां प्रसूतौ ॥५॥
शुभेषु तद्वद्यदि संश्रिताः स्युः
सर्वे ग्रहास्तं विदुरातपत्रम्।
सोऽल्पायुषः प्राक् सुखदो यदि स्या-
च्चिरायुषस्त्विष्टफलप्रदोऽन्ते ॥६॥

Testimonia

3a-b are quoted by Utpala on Bṛhajjātaka 12,1.

Apparatus

1b योगसंख्यानि यथास्ति N  1c इर्तिन्स N  4a गुणास्ति: N  4b °जास्ततत्स° N  4c-d no space in N  5d लुब्धा° N  6a रास्येषु N  6b °रत्रछत्रम् N  6d °षांस्त्विष्ट° N

36,7–12

मेषूरणाद्याद्धिबुकान्तरस्था:
पूर्वार्धचक्रे धनुरुच्यते स:।
तत्रापरार्धे वयसो धनाढ्या:
प्रख्यातशौर्याश्च समुद्भवन्ति ॥७॥
चक्रापरार्धे तु यदि स्थिता: स्यु:
सर्वे स कूटौ धनुराख्य एव।
स स्तेयहिंसातुरदुष्टकर्म-
बन्धातुराणां प्रसवं करोति ॥८॥
विशून्यकेन्द्रो धनुरर्धचन्द्र:
सर्वैश्चतुर्योगगतैर्निरुक्त:।
स नायकानां पृतनापतीनां
प्रसूतिकृच्छ्रेष्ठतम: सदैव ॥९॥
लग्नत्रिकोणद्वयसंस्थितेषु
सर्वेषु शृङ्गाटकसंज्ञमाहु:।
तत्रेश्वराणां प्रियविग्रहाणां
ख्यातात्मनां च प्रवदन्ति जन्म ॥१०॥
f.55v लग्नास्तयोर्यद्यशुभा: स्थिता: स्यु-
र्मेषूरणान्तर्जलयोश्च सौम्या:।
एवं तमित्याहुरवाप्तजन्म
क्लेशाश्रमाध्ववर्त(त)दु:खितानाम् ॥११॥
मेषूरणान्तर्जलयोरनिष्टा
लग्नास्तयोश्चापि शुभा: स वज्र:।
आद्यन्तभागे सुखिनो ऽत्र जाता
मध्ये वयस्याप्तबहुव्यया: स्यु: ॥१२॥

Apparatus

8b स चोको N  8c °कर्मा° N  8d प्रसवामदुष्ट: N
9b °श्चतु:स्थानगतै° N  9d °तमश्च सर्वे N  10c
तन्त्रेश्वराणां N  11a लग्नस्तमो° N  11c यावन्त° N
11d °श्रयाध्व° N  °दुःखितानां N  12a °योर्निविष्टा
N  12c सुसिनो N

36, 13–18

केन्द्रेषु शुक्रास्तदनन्तरं च
शुभाशुभस्थास्तमुशन्ति पद्मम्।
तत्रोद्भवा माल्यविभूषणस्त्री-
विस्तीर्णसौभाग्यधना नराः स्युः॥१३॥
सौम्येषु लग्नेष्वितरेष्वनिष्टाः
स्थिता यदा तं प्रवदन्ति मालाम्।
जातोऽत्र माल्याम्बरभूषणस्त्री-
प्रमाणमानान्नधनान्वितः स्यात्॥१४॥
यदि स्युरन्योन्यचतुर्थभस्थाः
केन्द्रं विना तं प्रवदन्ति वापीम्।
जातोऽत्र लोकस्थितिधर्मभोक्ता
ख्यातो भवेन्मन्दसुतश्च पश्चात्॥१५॥
परस्परस्थानत्रिकोणसंस्थाः
सर्वे यदि स्युः परिहृत्य लग्नम्।
स कर्षकाणां बहुसंचयानां
जितद्विषां जन्मकरो हलाख्यः॥१६॥
पापास्तु केन्द्रोपगता यदि स्युः
सौम्याश्च केन्द्रापगताः स सर्पः।
तत्रात्तहिंसातुरचोरधूर्त-
बद्धाधवगानां विहिता प्रसूतिः॥१७॥
प्राग्लग्नगास्तुङ्गतयोर्यथा स्युः
सर्वे यदा तं शकटं वदन्ति।
बन्धाधवरोगोपहृताल्पवित्त-
कुस्त्रीभृतां जन्मकरं तमाहुः॥१८॥

Apparatus

13b त्रयस्त्रियस्थास्त° N 13c तत्रोद्धृता N 14b तां N 14d °प्रयाण° N 15b तां N 15c °योक्ता N 16b लग्ना N 17a पापाः स्त्र N 17b केन्द्रपगताः N 17d °बन्धाधव° N 18a °तयोधर्यियोः N 18b यदास्तं N 18d °भृतं N

36,19–25

मेषूरणान्तर्जलयोर्यदि स्युः
सर्वे ग्रहास्तं विहगं वदन्ति ।
स्वतन्त्रदेशद्रविणप्रणष्टा
जाता विदेशे सुखमाप्नुवन्ति ॥१९॥
प्राग्लग्नगान्तर्जलयोर्यदि स्युः
सर्वे स्थितास्तं प्रवदन्ति मत्स्यम् ।
तत्रास्थि(रा)रम्भकुटुम्बवृत्ति-
र्नरः प्रसूतश्चपलो विहारी ॥२०॥
प्राग्लग्नमेषूरणयोर्यदि स्युः
सर्वे ग्रहास्तं ध्वजमित्युशन्ति ।
तत्र स्ववंशस्थितिलब्धमाना
जाता भवन्त्यर्थसमृद्धशब्दाः ॥२१॥
मेषूरणास्तङ्गतसंश्रितेषु
f. 56 सर्वेषु तं वक्रकसंज्ञमाहुः ।
तत्रानुदेशानुचरो दरिद्रो
ऽधृतिश्च सूतो विषमस्मृतिश्च ॥२२॥
जामित्रतोयाश्रयिणो यदि स्युः
सर्वे तु तं शंखमिति ब्रुवन्ति ।
प्राग्व्याधिदुःखा परस्त्रीं सचन्ति
जाता(स्तु पश्चात्) सुखिनो ऽत्र धीराः ॥२३॥
अनन्तरद्विभवनाश्रिताः स्यु-
र्लग्नप्रवृत्ता यदि सर्व एव ।
महागदं तं प्रवदन्ति योगं
सूतौ परप्रार्थनकिङ्कराणाम् ॥२४॥
स एव मेषूरणसम्प्रवृत्तो
विवर्धितक्षीणधनर्द्धिकानाम् ।
जामित्रभात् स्याद्व्रणपीडितानां
दीक्षाश्रितानां हिबुकप्रवृत्तिः ॥२५॥

Apparatus

19b विहगर्वगैम् N 20d नरं प्रसूते चपलो N 22c °चरद्ररिद्रो N 22d सूते N 23d no space in N 25b °नर्द्धि° N

36,26-30

रसातले तन्मुखपृष्ठयोश्च
सर्वैस्त्रिभस्थैः प्रवदन्ति कूर्मम्।
उत्पद्यते तत्र समृद्धकीर्ति-
र्नृपो बहुस्त्रीसुतबन्धुपक्षः॥२६॥
प्राग्लग्नगे ऽत्रैव धनी बहुज्ञः
स्यान्मध्यगे विग्रहधीरकर्मा।
जामित्रगे ऽन्याश्रवलब्धबुद्धि-
र्ध्यौतिश्च सूतो विधवाङ्गनश्च॥२७॥
लग्नाश्रयानन्तरभत्रिभस्थाः
सर्वे यदा तं मुसलं वदन्ति।
सो ऽश्मप्रहारोपहतं प्रसूते
प्राक् स्वैर्विरुद्धं सहजैरधन्यम्॥२८॥
तद्वद्ध्रुवं विद्धि जलात् प्रवृत्तं
प्राग्दुःखशोकश्रमपीडितानाम्।
पाशाख्यमस्ताद्युगपद्गतानां
मेषूरणादङ्कुशमीश्वराणाम्॥२९॥
लग्नाम्बरस्त्रीहिबुकेषु युक्तै-
श्चतुर्षु सर्वैस्तमुशन्ति दण्डम्।
अत्र प्रसूतो हृतपुत्रदारो
निःस्वो ऽन्यवृत्तिर्विकलः कुशीलः॥३०॥

Testimonia

28-29 equal Jātakasāradīpa 62,16-17.

Apparatus

27c ॰न्याश्रय॰ N 27d ॰द्धितश्च सूते N 28a लग्नात्त्रयो J ॰नन्तरभत्रिभस्थाः N, ॰नंतरित त्रिने स्युः J 28c अस्मिन् प्र॰ J 28d प्राच्चैर्वि॰ J 29a तन्मुद्गरं N, तं मुद्गरं J विद्धि J 29a-b प्रवृत्तैर्वाग्दुष्टशोकश्रम॰ J 29c प्रासाख्य॰ N ॰स्तात् हृद्गप॰ J 30a लग्नाचतुष्टा हि॰ N 30c प्रसूते N

36,31-34

अनन्तरं पंचगृहोपगेषु
सर्वेषु योगः शयनीति लग्नात्।
स्ववंशकीर्तिप्रतिवर्द्धमानो
जातो ऽभवेदत्र सुखी च नित्यम्॥३१॥
जलादितो यः स तु लाङ्गलाख्यो
जन्मप्रदः स्यात् परिकिङ्कराणाम्।
अस्ताश्रयान्निश्रयणीति धूर्तं
द्यूतप्रियाद्यव्यसनं प्रसूते॥३२॥
नभस्तलात् कुन्तमिति प्रवृत्तः
प्रसूतिकृन्मान्यकृतां च पुंसाम्।
चन्द्रप्रवृत्तस्तु रणोत्कटाना-
मन्यप्रवृत्तो न लभेत संचम्॥३३॥
f.56v अनन्तरं षट्सु गृहेषु विष्टाः
सर्वे यदा तं प्रवदन्ति पंक्तिम्।
लग्नात् प्रवृत्ते ऽत्र नृपं प्रसूते
केन्द्रप्रवृत्ते नृपमन्त्रिसख्यम्॥३४॥

Testimonia

31-35 equal Jātakasāradīpa 62,18-22.

Apparatus

31b शयनी वि° J 31c प्रतिलब्ध° J 32a तदुघलर्था-दपि जांगलाख्यो J 32b स्यात्य × किं° J 32d दूतव्यपाद्यन्यशनं J 33a नभस्थलात् J प्रचण्ड° JN 33b प्रसूतिकं N, प्रसूतिकृत् J सूर्यकृतेव J 33c चन्द्रात्प्रवृत्तास्तु J रणो° J 33d संत्रां J 34a बाहृगृहे° J °ष्वनिष्टाः N, °ष्वभिष्टां J 34b यद्दा तां N 34c प्रवृत्तो J 34d °मन्त्रिमैन्त्रिसुखं N

36,35-38

विहाय केन्द्राणि परप्रवृत्ते
स्यात् पंक्तियोगे ऽत्र चतुष्पदाढ्यः।
यथाभिलष्यं फलसुप्रसंविद्
विन्द्यात् फलोपायमलभ्यरूपैः॥३५॥
एकान्तरं षट्सु गृहेषु विष्टाः
सर्वे यदा तं प्रवदन्ति चक्रम्।
ज्ञातो ऽत्र रा〈ज्ञा〉 बहुभृत्यकोशो
लग्नात् प्रवृत्ते तु धनी सुभुक् स्यात्॥३६॥
तत्रान्यसंस्थेषु विपर्ययेण
योगो यदा तं कलत्रं वदन्ति।
प्रभूतधान्याकरसंचयानां
तमाहुरुद्भूतिकरं सतां च॥३७॥
जले तु यः कूर्मवदस्य लग्ने
द्विराश्रितावम्बरपार्श्वयोर्द्वौ।
तं पूर्णकुम्भं कु(ल)शब्दितानां
स्वकर्मविख्यातकृतां च सूतौ॥३८॥

Testimonia

37-42 equal Jātakasāradīpa 62,24-29.

Apparatus

35a केन्द्रैरितरप्रवृत्तैः J  तर° N  35b पङ्क्तियोगैर्नृ J  त्रिचतु° N  35c °लाषं J  °सुप्रसम्बिान् N, °सुक्रमस्मिन् J  35d वन्ध्यात् N, विद्यात् J  °रूप J  36a एकान्तारं N  गृहेष्वनिष्टाः N (cf. 34a)  36c °केसो N  36d त्वधनी N  37a तत्रास्वर° N, तत्रांबर° J  विपरायेन N  38a जलाश्रयः J  °दस्त J  लग्नो N  38b वामृतांबरपार्श्वपोहौ J  38c चक(ल)श° N  °शाह्निनानां J  38d °ख्यातिकृतं प्रसूते J

36,39–42

योगे फलं भावि विपर्ययेण
स्यात् क्षीणसौख्यद्रविणप्रसूतौ।
लग्नास्तयोर्वा यदि कुम्भवत् स्यात्
प्राक् पृष्ठतः साम्यशुभो निरुक्तः॥३९॥
सर्वे चतुर्लग्नगता यदि स्यु-
रन्योन्यसम्पर्कगता ग्रहेन्द्राः।
योगं तमाहुर्नगरं नृपाणां
जन्मप्रदं डिम्बकलिप्रियाणाम्॥४०॥
चतुर्थषड्कचतृतीयसंस्थै-
श्चतुर्भिरन्यैस्तु चतुष्टयस्थैः।
योगः स दोलेत्यभिशब्दिताना-
मुत्पत्तिकृद्बह्वटनोत्सुकानाम्॥४१॥
सव्यावसव्ये भवने विलग्ना-
दस्ताश्च चातुर्यमितीह सर्वे।
कुर्वन्ति वैद्यापरकिङ्कराणां
जन्माटनप्रव्रजितातुराणाम्॥४२॥

Apparatus

39a कुंभविपर्ययेण J   39b स्याक्षीण° J   °द्रविणं प्रसूते J   39c °योर्व्यार्ययदि N, °योश्चेदभि J   39d तत्पृष्ठतो वा न शुभो निरुक्तः J   40a-b स्युः-न्योन्य° N   40b ग्रहेषु J   40c गतं तमा° N   40d दम्भकलि° J   41b °श्चतुर्भि° JN   °रम्यस्ति N, °रन्यैस्त्रि° J   41c दोलो न्विभषष्ठिताना° J   41d °कृत्वहृटनो° N, °कृत्यट्टनो J   42a सव्यापसव्ये J   वलग्ना° J   42b °दस्ताव J   चात्वार्यधिभूत्य N, चर्यामधिकृत्य J   42c वेद्यां J   42d जन्मतुर-प्रोज्झितदत्तुणां J

36,43–48

नभोजलाभ्यामिममेव योगं
विद्याख्यमित्याहु(र्)धर्मभीताः।
जगत्यनिष्टा नृपताडिताः स्युः
पंचप्रयोगे कुशले ऽवमाश्च ॥४३॥
सादृश्ययोगा यवनैरितीमे
ये वाविशेषाः कथिताः प्रसूतौ।
योगास्तु राश्याश्रयसंश्रिता ये
संख्याफलांस्तानपरांस्तु वक्ष्ये ॥४४॥
एकत्र राशौ यदि पिण्डिताः स्यु-
स्तं गोलकं योगमुदाहरन्ति।
जन्माकृदुन्मार्गिकदुःस्थितानां
मलीमसानां कुपरिग्रहाणाम् ॥४५॥
f.57 द्विस्थानयुक्तेषु विना निरुक्तान्
योगं युगं तं विदुरस्थितानाम्।
प्रणष्टवित्तातुरविक्लवानां
पाषाण्डविभ्रष्टपराश्रितानाम् ॥४६॥
योगान्निरुक्तान् परिहृत्य योगं
त्रिस्थानयुक्तेषु वदन्ति शूलम्।
प्रपीड्यते शूलरुजात्र जातः
प्रणष्टपूर्वागतवंशवित्तः ॥४७॥
उद्दिष्टवर्जेषु चतुर्षु युक्तैः
स्थानेषु केदारमुदाहरन्ति।
तत्र प्रसूतः कृषिगोधनाढ्यः
कुटुम्बसस्यान्नसुहृज्जनेशः ॥४८॥

Apparatus

43b °मित्यत्मधर्म° N 43c नृपताधितात्मा N 44a स्यादृश्य° N 44b यवो विशेषाः N 44c योगांस्तु N रागाश्रयसंश्रितान्यान् N 44d संज्ञा° N 45c जन्मकृतात्मा° N 45d कुपरिष्टयाणां N 46a °यक्तेप N 46a-b निरुक्ताद्योगं N 47b स्त्रिस्थान° N 48c प्रसूते N 48d °सस्यन्नसुहृज्जनस्य N

36,49–53

विधिं च पूर्वोक्तमपास्य योगं
पंचर्क्षसंस्थेषु वदन्ति नाशम्।
हेतुर्नृपोपद्रुतबन्धनद्ध-
प्रभूतचित्रार्थकृतोद्यतानाम् ॥४९॥
षट्स्थानगेषूक्तविधानवर्जं
तं दामनीं योगमुदाहरन्ति।
दाता परद्रव्यभृदत्र जातो
भवेत् पराज्ञः सुरतक्रियासु ॥५०॥
सर्वे यदा सप्तसु सान्तरस्था-
स्तं प्राहुर्वीणामिति शास्त्रधीराः।
स्वविक्रमोपार्जितवित्तबन्धु-
प्रख्यातशास्त्रार्थगुणोऽत्र सूतः ॥५१॥
जामित्रषष्ठाष्टमगा यदि स्युः
सौम्या विलग्नादितरेष्वनिष्टाः।
तं श्रेष्ठजन्मस्वभियोगमाहु-
र्विमुक्तशत्रुश्रमरोगदुःखम् ॥५२॥
सादृश्यसंख्यान् भवनाश्रयाणां
हित्वैव संज्ञा स्वफलं विधत्ते।
अनामवीर्यैः शुभदैर्नृपोऽत्र
ख्यातः प्रसूतः परवित्तभाक् च ॥५३॥

Testimonia

52 equals Jātakasāradīpa 62,30.

Apparatus

49a विधिन्त्व N  49c तद्युर्नयो° N  °नार्हत् N  50d पराज्ञा N  51b प्राहु वीणा° N  51d °शास्त्रास्त्रगुणे N  सूते N  52c श्रेष्ठाभियोगे भवतीह राजा J  52d °शस्त्रश्रम° J  53a °संख्या N  53b हित्वैष N  53d प्रसूते N  परिविद्यभाक् N  after 53 N adds संख्यायोगः

36,54–59

चरेषु योगोपहिता यदि स्युः
    क्षेत्रेषु सर्वे तु स रज्ज्वभिख्यः ।
हित्वात्र योगे कुफलं प्रसूतः
    स्यादन्यदेशाटनसंश्रितार्थः ॥५४॥
सर्वे स्थिरस्था यदि मौसलाख्यो
    हित्वान्यसंज्ञं फलमादधाति ।
कुटुम्बिनां जन्म दृढास्पदानां
    बृहत्तनूनां कुलपुङ्गवानाम् ॥५५॥
द्विमूर्तिसंज्ञोपगतेषु योगो
    नलः स चान्यः कुफलं निधार्य ।
समुद्भवं नैकविधास्थितीनां
f.57v कुर्यान्नराणां निपुणक्रियाणाम् ॥५६॥
एते विमिश्रा बलवद्भिरन्यै-
    र्योगैर्यथोक्ताः फलदा यदा स्युः ।
स्वस्वोच्चभृद्योगविवृद्धवीर्याः
    स्वं स्वं यथोक्तं फलमुद्वहन्ति ॥५७॥
एते सहोद्भूतिफला निरुक्ता
    योगा ग्रहस्थानगुणा(स्त)था ये ।
शेषास्तु कालक्रमजैर्विपाकै-
    र्ज्ञेयाः सदाष्टस्वपि येद्दशासु ॥५८॥
इतीदमृक्षग्रहयोगकाल-
    व्ययाश्रयान्योन्यकृतैर्विकल्पैः ।
नानागुणव्यंजनलक्षणाङ्कं
    कृत्स्नं प्रजाजन्मविधानमुक्तम् ॥५९॥
〈यवनजातके〉 नाभसयोगफलम् ॥

Apparatus

54a °पहृता N  54b सर्वेषु स N  54c हित्वात्रि योगो N  55b °संज्ञो N  56b सवान्यो N  निशाम्य N  56c समुद्भवा N  57a वमिश्रा N  57c स्वे स्वोच्च° N  °वीर्यः N  58d सदाष्टाष्ववपि N  col. no space in N

37,1–5

आयूंषि राश्यंशकभारयोगाद्
    ग्रहाः प्रसूतौ ददति क्रमेण।
प्राग्लग्नभुग्भागसमानि होरा
    वर्षाणि तद्राशिसमर्पितानि ॥१॥
आत्मत्रिकोणे स्वगृहांशके स्वे
    वर्गोत्तमे च द्विगुणं प्रपन्नाः।
स्वोच्चे च वक्रोपगताश्च दद्युः
    समग्रवीर्यास्त्रिगुणाब्दसंख्याम् ॥२॥
नीचारिभे चास्तगते च तिष्ठन्
    स्वादर्धहृत् स्याद्भृगुसौरवर्जम्।
एकर्क्षगेष्वेकतरः स्वभागान्
    दायान् विनिघ्नत्यधिवीर्ययुक्तः ॥३॥
पापः स्वदायं सकलं शुभोऽर्धं
    लग्नाद्ग्रहो द्वादशगो हिनस्ति।
द्वौ चात्र यातावशुभौ समग्रं
    तत्स्था हरन्त्यायुरनिष्टदृष्टौ ॥४॥
अर्धादिषष्ठान्तमपक्रमेण
    स्वकाद्दशादेः प्रहरन्त्यनिष्टाः।
एभ्यः शुभास्त्वर्धफलानि विष्टाः
    स्थानेषु चायूंषि तु सर्वपिण्डाः ॥५॥
यवनजातक आयुर्दायः ॥

Testimonia

1a is quoted thrice by Utpala on Bṛhajjātaka 7,9.
5a-b equal Vṛddhayavanajātaka 5,15a-b.

Apparatus

1a °राशियोगाद् U'   1c °युग्भाग° N   2d °वीर्या तृगुणा° N   3c °ष्वेकतरे N   3d विनिघ्नन्त्य° N   °युक्ताः N   4d °रतीवदृष्टः N   5b त्वेकादशादेः M   5d पापानि तु N   col. °जातके N

38,1–4

लग्नाच्छशी नैधनगोऽशुभैर्वा
षष्ठेऽपि वा पापनिरीक्षितश्च।
सर्वायुराहन्ति शुभैरमिश्र-
स्तद्वीक्षितोऽष्टाब्दकपर्ययेण ॥१॥
नीचे गुरुर्भौमगृहोपगो वा
व्यालग्नहैः पापफलैश्च दृष्टः।
षष्ठाष्टमे वाप्यशुभा निविष्टाः
सानन्तरात् प्राणहरा निरुक्ताः॥२॥
२—भौमार्किदृष्टो मृगवृश्चिकस्थो
लग्नाद्गुरुर्मृत्युगृहप्रपन्नः।
f. 58 शुक्रेन्दुजाभ्यामनवेक्ष्यमाणो
मासेन जीवक्षयकृन्निरुक्तः॥३॥
शुक्रेन्दुजावप्यनवाप्तवीर्यौ
योगेऽत्र पक्षान्तरजीवनिघ्नौ।
जीवेक्षितावप्यभिनिघ्नतस्तौ
मासेन मूर्तावशुभांशयोगे ॥४॥

Testimonia

1 is quoted by Utpala and Rudra on Bṛhajjātaka 6,6(7).

Apparatus

1b ऽथवा U, तु वा R 1c शुभैर्विमिश्र° U 1d °स्तद्वीक्षिते R ऽब्दाष्टक° UR °मब्दकं वा U 2a नीचैर्गुरु° N 2b व्यालम्बभिः N 2d सामन्तरात् N प्राणहार N 3b लग्ना गुरु° N 3d °न्निरुक्ताः N 4d °योगैः N

38,5–8

पापेषु लग्नाभिमुखेषु सर्वे-
ष्व(ब)ाप्तवीर्येष्वशुभर्क्षयोगे।
पापर्क्षयोगे विबलास्तदा हि
सौम्या विनिघ्नन्त्यदयापसव्याः॥५॥
जामित्रगो लग्नपतिर्जितोऽन्यैः
पापैर्निहन्त्याशु शुभैरदृष्टः।
पापे वि(ल)ग्ने शशिनेक्षिते च
क्रूरेण युक्ते म्रियते मुहूर्तान्॥६॥
चन्द्रार्कगं लग्नमनिष्टदृष्टं
त्रिकोणगाः प्राप्तबलाश्च पापाः।
लग्नाधिपोऽन्त्योपगतः शशी वा
सानन्तरं जीवितहानिकृत् स्यात्॥७॥
भौमो विलग्ने शुभदैरदृष्टः
षष्ठाष्टमे चार्कसुतानुयुक्ते।
तौ वाष्टसंस्थौ शुभदृष्टिहीनौ
जातस्य सद्यः कुरुतः प्रणाशम्॥८॥

Testimonia

5a-b is quoted by Utpala and Rudra on Bṛhajjātaka 6,2 and by Rudra on Bṛhajjātaka 6,(3). 8 equals Bṛhajjātaka 6,(3) in the recension of Rudra.

Apparatus

5a पापेषु ग्रहेषु लग्नाभिमुखेषु U   नश्ये° R(BJ 6,[3])   5b °स्व(ब)ाप्त° N, °ष्वेवाप्त° U, °ष्वबाप्त R(BJ 6,2), °द्वाप्त° R(BJ 6,[3])   °वीर्येषु U   शुभर्क्षगेषु UR   7a चन्द्रारिस्थं N   7b तृकेन्द्रगाः N   7c न्त्योपगतः N   7d साम्रात्परं N   8a भौमे R   विलग्नः N   °दृष्टे R   8b षष्ठे ऽष्टमे R   °सुतेन युक्ते R   8c वाप्तसंस्थौ N, चार्कसंस्थौ R

38, 9–10

पापे विलग्ने ऽस्तगतः शशाङ्कः
  पापेक्षितः क्षीणतनुर्जितो वा ।
तथास्तगो वा निधनारिभेशः
  सद्यो हिनस्त्यायुरसौम्यमिश्रः ॥९॥
सौरे ऽस्तसंस्थे क्षितिजे जलस्थे
  लग्ने शशी वृश्चिकगो मृगे वा ।
शुभेष्वकेन्द्रोपगतेषु सद्यो
  जातस्य मृत्युर्यवनैर्निरुक्तः ॥१०॥
यवनजातके ऽरिष्टयोगः ॥

Apparatus

9a शशाङ्काः N  10a क्षितिजो जलस्थो N
10b लग्नः N  मृगो N  10c स्भोस्भेष्व° N

39,1–5

एवंप्रकारो विधिरायुषीयं
    दाय(ो)पवादैर्नियतः प्रजानाम्।
यो यस्य दायो विहितोऽब्दसंख्यो
    ग्रहस्य तां तस्य दशामुशन्ति ॥१॥
स्वं स्वं वयस्तुल्यमवाप्य कालं
    शरीरिणामायुरनुक्रमेण।
स्वैः स्वैर्गुणैर्दायफलैश्च पुंसां
    संवर्धमानक्षणदा भवन्ति ॥२॥
शशाङ्कभौमैन्दवशुक्रजीव-
    सूर्यार्कपुत्रा वयसः क्रमेण।
आ जन्मनः प्राणभृतां दशासु
    ज्ञेया विभागेषु जरापमान्त्याः ॥३॥
स्तन्योपभोगं शशिनो वयः स्वं
f.58v    भौमास्य विद्याद्दशनानुजन्म।
बौधं तु शिक्षाविधिकालमाहु-
    रा मैथुनेच्छाकुलि[त]प्रवृत्तिम् ॥४॥
शौक्रं युवत्वं विधिपूर्वदृष्ट-
    मा मध्यमाद्देवगुरोर्वदन्ति।
रवेर्वयोऽर्धात् परमन्यदस्मात्
    सौरेर्जरादुर्भगकालमाहुः ॥५॥

Testimonia

4–5 are quoted by Utpala on Bṛhajjātaka 8,9.

Apparatus

1d गृहस्य N 2d संवर्द्धमानां क्षणदा N 3d जराव-मानाः N 4a ततो प्रयोगः N, स्तन्योपभोगः U 4b भौमामस्य N विन्द्या° U 4c शिक्षापटकाल° U 4d no space in N 5a सौक्यं N, शौक्रं U 5b गुरू व° N, °गुरोर्व° U 5d सौरां जरा° N, सौरेर्जरा° U °कालनाम N, °कालमाहुः U

39,6–9

निशाकरादित्यविलग्नभानां
तत्कालयोगादधिकं बलं यः।
बिभर्ति तस्यादिदशेष्यते सा
शेषास्ततः शेषबलक्रमेण ॥६॥
वयोधिको यः प्रथमोद्भवो वा
ग्रहः स पूर्वं पठितो दशेशः।
बलाधिकश्चेत्यदि केन्द्रसंस्थः
पूर्वं स शेषास्तु यथा प्रदिष्टः ॥७॥
श्रेष्ठा दशा स्वे वयसि ग्रहस्य
स्वोच्चाश्रितात् कालबलाश्रिताच्च।
मूलत्रिकोणात् स्वगृहाच्च मध्या
मित्राश्रिताज्जन्मगृहाश्रिताद्वा ॥८॥
नीचारिभांशोपगताज्जिताद्वा
ग्रहात् परिध्वस्तविवर्णरूक्षा।
जन्मेशशत्रोर्निधनारिभेशाद्
या बाध्यते सा बहुदोषदा स्यात् ॥९॥

Testimonia

6a–c equal Vṛddhayavanajātaka 6,22b–d. 6–9 are quoted by Utpala on Bṛhajjātaka 8,19. 6 is quoted by Utpala on Bṛhajjātaka 8,1. 8a is quoted by Utpala and Rudra on Bṛhajjātaka 8,9.

Apparatus

6a °लग्नमध्ये U (BJ 8,1) 6b यत् N, यः U 6c °दशा प्रयोज्या M 6d मिष्टा ततः N, शेषास्त (स्त्व [BJ 8,19]) तः U 7a °द्भुतो N, °द्भवो U 7c बालो पि चोच्चैर्यदि N, बालाधिकश्चेत्यपि U 7d षेस्मोस्त N, शेषास्तु U प्रकृष्टाः N, प्रदिष्टः U 8b °श्रिता U °श्रितश्चेत् U 8c मध्यात् N, मध्या U 8d °श्रिता जन्म° NU °गृहाशृताद्वा N, °गृहाश्रिता वा U 9b गृहात् U °रूक्षात् NU 9d बाम्यते N, बाध्यते U

39,10

षष्ठाष्टमस्थो ऽशुभदस्तु रौद्रो
द्विषाशुभस्थानगतेन दृष्टः।
स्वायां दशायां स करोति मृत्युं
व्याध्यग्निबन्धार्थपरिक्षयान् वा ॥१०॥
यवनजातके दशाफलम् ॥

Testimonia

10 is quoted by Utpala on Bṛhajjātaka 7,8.

Apparatus

10a रिपुदृष्टरौद्रः U 10b पापैः सुहृत्स्थानगतश्च दृष्टः U 10c स्वान्तर्द° U प्रकरोति U 10d पाशाग्निबन्धादि° U °क्षयाद्वा NU

40,1–5

प्राप्नोति शश्वच्छशिनो दशायां
    फलानि शोकश्रमसम्भवानि।
स्त्रीसंश्रयान्माल्यरतिक्रियाभिः
    प्रतिग्रहान्मार्दवचेष्टिताश्च ॥१॥
मार्गाद्विभूषामणिशस्त्रशुक्र-
    सर्पिःपयोभ्यो ऽम्बुजहेतुकाद्वा।
तिलेक्षुमाषोर्णवर्णाश्च सद्भ्यः
    स्वमातृपक्षाद्द्विजसंश्रयाच्च ॥२॥
स्वपक्षविक्षेपमनिष्टसाध्यं
    संयोगवैरं दुहिताप्रसूतिम्।
ख्यातैः प्रचण्डैश्च विरोधमार्यैः
    स्वधर्मयुक्तैर्गुरुभिश्च मैत्रीम् ॥३॥
मेधाविनामार्जवतां मृदुत्वं
    क्रियालसत्वं रतिवश्यतां च।
स्वधर्मदेवद्विजतत्परं च
    पानाशनस्वप्ननिषेवणं च ॥४॥
लाभं धनानां द्व्यमध्यमं स्या-
    द्रोगाबलं संस्तुतिवन्दितं च।
f.59 सत्कीर्तिमस्त्वं शमसद्गुणाप्तिं
    ततो लभेतेन्दुशरीरवश्च ॥५॥ ⟨चन्द्रः॥⟩

Testimonia

With this chapter compare Vṛddhayavanajātaka 6,3–16.

Apparatus

2a मार्गा विभूषामणिमस्त्रशुक्र° N 2c °माषोणवणाश्च N साध्य N 2d °पक्षाद्द्विजसंशयाच्च N 3a °निष्टयाध्वं N 5a °मध्यकस्मा° N 5b °द्रोगवले N °बिन्दिते N 5c °मस्वे N समसद्गुणाप्तिं N col. no space in N

40,6–11

प्राप्नोति भौमस्य दशाविपाकै-
र्धनानि चौर्याहवसम्भ्रमेभ्यः।
वैरारिमर्दाहवडिम्बभेदा-
न्कूटयोगादृणकर्मतश्च ॥६॥
सुवर्णताम्रक्षितिपाग्निकर्म-
भूम्याविका(जौ)र्णवसम्प्रयोगैः।
क्षिप्रैः सतीक्ष्णैः कटुकैर्विकारैः
संवर्द्धते पुत्रसमुद्गतैश्च ॥७॥
स्वभ्रातृपुत्रात्मकलत्रमित्र-
प्रद्वेषमन्यैश्च विवादसिद्धिम्।
तृष्णाज्वरासृग्विषपित्तमूर्च्छा-
व्रणाङ्गभङ्गाधिकृतांश्च रोगान् ॥८॥
अकारणं तैक्ष्ण्यममर्षतां च
व्याधिक्रियोत्साहमधर्मवृत्तम्।
सत्त्वावबोधं कटुकाभिधान-
प्र(वृ)त्तिमन्यद्रविणाङ्गनेच्छम् ॥९॥
सद्वृत्तिभृद्भिर्गुरुभिश्च वैरं
पापैः प्रचण्डैर्बलिभिश्च मैत्रीम्।
तदा मनुष्यो लभते श्रुतिं च
नैकक्रियासङ्गपरिक्रमं च ॥१०॥ अङ्गारः॥
बौधीं दशां प्राप्य गुणप्रशंसाः
प्राप्नोति शश्वत् प्रियतां च सत्सु।
गणेषु वाक्यग्रहणप्रसादं
सौमुख्यमृद्धिं सुहृ(द)र्जनं च ॥११॥

Apparatus

6c °मार्दाहव° N 6d °न्कूटप्रयोगा° N 7b °विकासव° N 7c क्षिप्रः सतीक्ष्णः N 8a सुभ्रातृ° N 8b °मन्त्रैश्च N 8d °कृतां च रोषान् N 9b अधिक्रियो° N 9d no space in N 10b °र्बलभिश्च N 10d नैकाक्रिया° N °क्रमां N 11a गुणा प्रशंसा N 11d no space in N

40, 12–17

पाकं कलापण्यविवादशिल्प-
नैपुण्यहास्याभवकथाश्रयेभ्यः।
क्रियाप्रदेशाक्षिपिलेख्यपाठ्य-
विज्ञानभात्वर्थकविक्रियाभ्यः ॥१२॥
दौत्येश्वरोपासनरङ्गचर्या-
मित्रात्मजोपायगुरुद्विजेभ्यः।
समर्थतागैष्मिकसस्यचेष्टा-
नृपप्रतीहारिकलाश्रयेभ्यः ॥१३॥
सुवर्णरत्नाम्बरभूम्यपत्यै-
श्छिद्रग्रहोपग्रहनिग्रहैर्वा।
श्रमैर्मनस्तापकरैः स्वबन्भ-
प्रद्वेषपारुष्यकृतैश्च शोकैः ॥१४॥
बहुक्रियाश्चित्रफलैश्च लाभै-
र्ज्ञानागमैर्धर्मपरिग्रहैश्च।
संयुज्यते वातसमीरितैर्वा
रोगैर्भृशं पित्तकफाभिसृष्टैः ॥१५॥ बुधः ॥
भृगोर्दशायां लभते सुखानि
प्रामोद्यसौभाग्यवपुष्कराणि।
इष्टान्नपानाम्बरगन्धमाल्य-
प्रवादितोद्गीतरतिप्रभाणि ॥१६॥
रत्नैर्विचित्रैर्मणिमौक्तिकाद्यै-
f.59v र्ब(हु)ङ्गनानन्दनतत्सुहृद्भिः।
संयुज्यते गोबलिवर्दभूमि-
प्राचारतिख्यातिकरैश्च वित्तैः ॥१७॥

Apparatus

14b °श्छिद्रिग्रहो° N 14c समैर्मन° N 15c संसुक्यते N °समीरतैर्वा N 16d °तोगीत° N °प्रवानि N 17c संपूज्यते N

40, 18–23

कृषिप्रयोगात् क्रयविक्रयाद्वा
स्त्रीहेतुकाद्गोमहिषाश्रयाद्वा ।
लाभान्निधीनन्यपरिग्रहान् वा
धनान्यवाप्नोत्यकृशान्युपायैः ॥१८॥
नृपैर्निषादैः कुलवृन्दमुख्यै-
र्विरुध्यते धर्ममपाश्रितैश्च ।
सम्प्रीयते वैश्यवधूकुटुम्बा-
च्छशूर्पवीथ्यापणसार्थवृद्धैः ॥१९॥
कुयोषिदावर्जमनिष्टबन्धुं
दुर्वृत्तसौहार्दकृतांश्च शोकान् ।
देहे च रोगांल्लभते कफोत्थान्
रतिप्रसङ्गासनयानजांश्च ॥२०॥ शुक्रः ॥
गुरोर्दशायां लभतेऽभिमानं
गुणोदयं बुद्ध्यवबोधमग्र्यम् ।
धनं सुनीतिव्यवहारमन्त्र-
संवृद्धिचेष्टाभिषगाश्रयेभ्यः ॥२१॥
सुरद्विजामात्यगुरुव्रतीश-
यत्नार्थशिल्पाश्वरथाश्रयेभ्यः ।
॥22॥

श्रेणीपुरग्रामगजाश्वयान-
च्छत्रध्वजाडम्बरकांम्नानाम् ।
सत्पुत्रश्रेष्ठागमदारभृत्य-
रत्नाकराणां प्रततां समृद्धिम् ॥२३॥

Apparatus

18a °प्रयोगां N 18c °न्निधिभिरन्य° N °ग्रहाद्वा N 18d °वाप्नोत्यि N 19c वैश° N 19d °च्छाहार्य° N 20a कुयोषितावर्जनः इष्ट° N 20d नभिप्रसङ्गा° N °पानपाश्च N 21d °भिषपश्रुतेभ्यः N 22b °यच्चास्त्र° N 22c–d no space in N 23a °पुराग्राम° N 23c °श्रेष्टाग्रम° N

40, 24–29

स्वाध्यायवृद्धैर्नृपमन्त्रिमुख्यैः
सद्भिर्महद्भिः सह याति सख्यम्।
तत्कालसिद्धं भजते स्वधर्मं
प्रद्वेष्टि चाधर्मरतान् द्विजारीन्॥२४॥
सूक्ष्मा(र्थ)चिन्तागमनप्रवेश-
मीक्ष्य प्रमोहैश्च लभेत शोकम्।
रोगांश्च पुंस्त्वक्षयमोहकारान्
मेदोश्रयश्रोत्रसमुद्भवांश्च॥२५॥ गुरुः॥
रवेर्दशायामतितैक्ष्ण्यमौग्र्य-
मोजस्विनां सत्त्वविभूतिमौष्ण्यम्।
ख्यातिं पुरस्कारमजस्रचेष्टं
प्राप्नोति मानोपचयं महच्च॥२६॥
धनानि चामीकरताम्रशस्त्र-
क्षुद्रास्थिचर्मौर्णिकतान्तवानि।
नृपाद्वस्तेयपरोपसन्न-
हिंसाप्रमादध्वभिषक्रियाभ्यः॥२७॥
भार्यात्मजव्याधिभदमर्थहानिं
स्वबन्धुभृत्यान्यतमैश्च वादम्।
नृपानलद्विद्विषशास्त्रबाधं
मिथ्याभिमाना(दि)भिरुल्बणश्च॥२८॥
f. 60 वैघृण्यमस्वप्ननिषेवणं च
क्षुद्रत्त्ववस्थैर्यमनार्जवं च।
प्रियाभिषाशिं यमधर्मवांछां
त्यागप्रवृत्तिं रतिविक्रियं च॥२९॥

Apparatus

24d °रतां द्विजातीन् N   25a सूक्ष्म(र्थ)चिंतैतान्ता° N
25b °मीक्ष्य प्र(प)मथ्यैश्च N   मैसोकं N   25c पूस्त्व°
N   °कर्मा N   26c स्यातं N   27c °परोपपच्च° N
27d °श्रमानध्वभिशाक्रियाभ्यः N   28b वादा N   28c
°द्विद्विष° N   °बाधा N   28d °रुल्बणं च N   29b
क्षुद्रद्रुव° N   °वन्धं N   29d °विक्रयं N

40,30–34

हृद्बस्तिरोगज्वरपित्तमोह-
    क्षुत्तृड्विकारैर्जठरामयैर्वा ।
तस्यां दशायां लभते शरीरे
    काष्ठप्रहारादिभिरर्दनां च ॥३०॥ सूर्यः ॥
प्राप्नोति सौरस्य दशामुपेत्य
    क्लमश्रमोपद्रवसम्भ्रमा⟨र्तिम्⟩ ।
आलस्यमीर्ष्यामपरूपतां च
    (⟨मा⟩)याविधानं च कु(ध)र्मतां च ॥३१॥
स्त्रीवृद्धभृत्यत्रपुसीसशस्त्र-
    प्रभिन्नशीर्षाश्मगृहादिभाण्डैः ।
कुठारजीर्णाम्बरगर्दभोष्ट्रैः
    संयुज्यते ऽश्वैर्महिषादिभिश्च ॥३२॥
पूज्यां पुरग्रामगणाधिकारं
    प्राप्नोत्यपि स्थानविशेषदायम् ।
फलानि नीचैरतिदारुणैर्वा
    तैस्तैरुपायैर्भृतिघातनाद्यैः ॥३३॥
यत्नार्जितद्रव्यविपत्तिमोषं
    भृत्यार्दनं पुत्रकलत्रनाशम् ।
साध्येष्वसिद्धिं समरेषु भङ्गं
    स्वजातिदारात्मजताडनं च ॥३४॥

Testimonia

With 32c–33b compare Jātakapārijāta 18,121.

Apparatus

31d (x)याविधातां N    32b °शीर्ष्णश्म° N    32c कुद्धाराजीर्णा° N    33a पूज्यं N    34a रत्नार्जित° N    34b भृत्यार्द्धनं N    34d °तत्मनभ्य N

40,35

पथ्येष्वलाभं व्यसनेषु शक्तिं
सत्त्वं कथाकारितवैरतां च।
क्षुद्रोद्भूततृष्णानलकोपतन्द्री-
मोहादिरोगांल्लभते तु शश्वत्॥३५॥〈शनिः॥〉
यवनजातके दशापाकफलम्॥

Apparatus

35b कथाकारण° N    col. no space in N

41,1–5

एते विलग्नोपचयर्क्षसंस्थाः
स्वमूलमित्रोच्चगृहेष्वदीनाः।
स्विष्टं दशापाकफलं प्रदद्यु-
र्विपर्यये ऽनिष्टतरं ग्रहेन्द्राः॥१॥
अन्तर्दशास्त्वितरेतरेषां
काला ग्रहाणां विहिता दशानाम्।
दशापतेर्दायफलं विहृत्य
स्थानक्रमाद्वा बलिमाहरन्ति॥२॥
कालार्धभागैकगृहाश्रितः स्याद्
ग्रहस्तदर्धं लभते चतुर्थे।
त्रिभागभागीति त्रिकोणसंस्थ-
स्तदर्धभाक् स्याच्च पृथक्त्रिकोणे॥३॥
स्यादष्टमे सप्तमभागभाक्च
स्थितो ग्रहश्चारगृहाद्ग्रहस्य।
अन्तर्दशानामपि कालभागा
ज्ञेया यथा वीर्यवयःक्रमेण॥४॥
f.60v |अन्तर्दशाभागहृदप्रशस्तो
ज्ञेयः सदानिष्टफलोदयश्चेत्।
पापग्रहो ऽनिष्टदशाकृतं तु
श्रेष्ठो ऽपहृत्येष्टतमं विधत्ते॥५॥

Testimonia

3–4b are quoted by Utpala on Bṛhajjātaka 8,3.

Apparatus

1d नेष्टतरं N 2a °दशाद्या° N 2d स्थानापमर्दद्बलिमा° N 3a °भागैक° NU °श्रितस्य U 3b तदर्धभागं U 3c °भागी च U 4a स्यात् सप्तमे सप्तम° U °भागतस्तु N, भागभागी U 4b °श्चारवशाद्ग्र° U 4c कालेया N 5a °भाग्य° N

41,6–11

अन्योन्यराश्यंशकभागयुक्त्या
दशासु सन्दर्शनसङ्गमैश्च।
सौम्योग्रजिह्मार्जवदारुणानि
कुर्वन्ति चेष्टाफलसाधनानि ॥६॥
होरादशा स्थानभृ(दं)शपाभ्यां
वाच्याः स्वभावाः स्वगुणैश्च पुंसाम्।
स्यादन्तराख्यः प्रभवान्तकालः
स चापि तद्वल्लभते तदाख्याम् ॥७॥
अस्यायुषो हानिकृदन्तराख्यो
होरेश्वरारिर्विहितो विपाके।
सुहृत्त्वभीष्टानि ददाति तस्यां
फलानि देहेषु फलं च यत् स्वम् ॥८॥
उपस्थितान्योपहृतं फलं यत्
तद्वांछितं लब्धतमेति नाशम्।
दशाफलं कालबलप्रसिद्धं
शुभाशुभं सिद्धिमुपप्रयाति ॥९॥
यस्यां विकल्पोपगता दशा स्यात्
सम्पूर्णनिर्दिष्टफला मता सा।
जन्मन्यभूद्यश्च विवृद्धवीर्यः
सोऽन्याष्टवर्गागतमाशु हन्यात् ॥१०॥
एवं दशापाकफलानि पुंसां
क्रमोपसर्पीणि शुभाशुभानि।
मनःसमालम्बनहेतुकानि
क्रियासमारम्भविधौ भवन्ति ॥११॥

Apparatus

6a °युक्त्वा N 7c °राख्याः प्रभवन्ति कालाः N 7d तदाख्याः N 8c सुहृद्वती ददाति N 8d देहेष N 9b तद्वाच्छितां N 9d सत्त्वासनं सिद्धि° N 10c °भूम्यश्च N 10d न्यष्टवर्गा° N

41, 12–14

नानाविधालोकविधानवार्त्ता-
देशाकुलख्यानविलोभनञ्च।
समीक्ष्य यच्चाद्विहितं दशायां
तत्तत्फलं तत्सदृशं विदध्यात्॥१२॥
निष्ठो दशायां परमेऽहि देही
मुक्तक्रियः क्षीणफले विपाके।
त्यक्त्वा शरीरं ग्रहजैर्विकारैः
समीरितो याति यथाविधानैः॥१३॥
ग्रहर्क्षरोगान् प्रभवस्वभावान्
स्वामिप्रभावाश्रयिभिर्निदानैः।
विपच्यते प्राणभृतां शरीरं
गतायुषां यैरिह तान् प्रवक्ष्ये॥१४॥
यवनजातकेऽन्तर्दशाफलम्॥

Apparatus

12b °कुलं जातिबलो गुणश्च N   13b °फलैर्विपाकैः N
14a देहर्क्षगं मान्यभव° N   14c °भृत्यां N

42, 1–6

यो नैधनेशः स समान्तयोगी
द्रेक्काणभृत् सम्पठितो ग्रहेन्द्रः।
स चात्मतुल्यैः कुरुते विकारै-
र्मृत्युं नृणां जातकलब्धवीर्यः॥१॥
सूर्येण वह्नौ शशिनाप्सु मग्नै-
f. 61 र्भौमेन शस्त्राग्निपरिप्लवेषु।
जीवेन रोगैर्जठरामयोत्थै-
र्बुधेन शिल्पागमजैर्ज्वरैश्च॥२॥
स्त्रीमानदोषैः कफजैर्विकारैः
शुक्रेण गुह्योदरसम्भवैर्वा।
वृषेण कृष्णेन चतुष्पदेन
क्षुद्घातजैर्वा म्रियते ऽर्कजेन॥३॥
औत्पत्तिकं नैधनमाश्रितो वा
क्रूरो विघातेन विपत्तिकृत् स्यात्।
सौम्यस्तु तत्स्थो विजितः प्रसूतौ
रोगेन देहप्रभवेन हन्यात्॥४॥
स्थानग्रहाभ्यां स्वगुणोद्भवाश्च
नानाविकल्पा विहिता निदानाः।
जामित्रभागांशवशाच्च कालो
द्विमासभाक् स्याच्चरमो दशायाम्॥५॥
मृत्युप्रदो ऽर्को नखदन्तशृङ्गि-
व्याडाग्निकास्वार्तिविषाश्मशस्त्रैः।
क्षेत्राश्रयैर्मृत्युपदाश्रितः स्या-
त्क्षुद्राटवीम्लेच्छनृपोद्भवैश्च॥६॥

Apparatus

1a नैधने माससमान° N 1c °तुल्यः N 2a मग्नौ N 2b भौमेन N 2d शिल्पाश्रम° N 3d मृयते N 5d °भाक्स्याच्चरमा N 6a °दन्ति° N 6b °स्वार्ति° N

42,7–12

चन्द्रः कफासृग्जठरामयाम्बु-
प्रमेहशीतज्वरदुर्दिनाद्यैः ।
जीवः शिरोरुग्गलगण्डमोह-
श्लेष्मातिसारामयजैर्विकारैः ॥७॥
शुक्रो ऽतिपानाशनमैथुनाम्भः-
कफाज्वराजीर्णगुदोद्भवाद्यैः ।
भौमस्य चौरावहशास्त्रवह्नि-
पित्तज्वरासृग्विषरोषदोषैः ॥८॥
बुधस्तु कालक्रमसंनिपात-
ज्वरव्ययश्वासगलभ्रमाद्यैः ।
सौरो ऽश्मशस्त्रव्रणलोष्टरज्जु-
क्षुद्दंशवाताङ्गविशोणिताद्यैः ॥९॥
संसृत्य कुर्वन्ति हि नाशमेते
मूर्त्याश्रयं मृत्युपदाश्रयं च ।
क्रूरा(स्तु) तद्वच्चतुरस्रसंस्था
घ्नन्त्यग्रवीर्याधिबलेषु सत्सु ॥१०॥
आरण्यसंज्ञे निधने ऽर्कदृष्टे
भवेन्मरौ मृत्युररण्यजेभ्यः ।
(कुजेक्षिते तत्र † तस्य †
सौरेक्षिते चाष्टमभे )॥११॥
नैर्याणिकं वारिजमृक्षमस्य
नरो भवत्यम्भसि मूर्तिहानिः ।
तमाम्भसा तत्र तु सूर्यदृष्टे
रक्तस्रुतिच्छर्दिभिरारदृष्टे ॥१२॥

Apparatus

8a शुक्रे N    8c भौमेन N    9b °गलस्त्रहाद्यैः N
9d °क्षतश्म° N    10c no space in N    10d वत्सु N
11d अष्टमभे N    12a भौमार्त्तवं वारिजमृत्युपक्ष्य N
12c °दृष्ट N    12d °स्रुतिच्छर्दितिरा° N

42,13–18

दृक्कोट्टेरेणार्कसुतेन दृष्टे
शोकैः स्वकैः स्थानकृतैश्च रोगैः।
ग्राम्याश्रितोऽन्यैरनवीक्षितो वा
यत्तत्तु चेन्दुः कफजेन हन्यात्॥१३॥
दाहज्वराभ्यां रविवीक्ष्यमाणो
महा ।
f. 61v <भौमे> गलव्याधिभिः शुष्ककृशै-
र्निहन्ति लब्धैः स्वकृतैर्विकारैः॥१४॥
मत्तेन भूत्वा निधने प्रजा<र्णां>
करोति चन्द्रो रविजे विनाशम्।
तोयाश्रये मृत्युपदे शशी वा
तिष्ठन् विपत्तिं सलिले विधत्ते॥१५॥
क्रूरग्रहर्क्षे निधनेऽर्कदृष्टे
तत्स्थे रवौ वा म्रियते स<दै>व।
गुह्य<ामय>ाद्यैश्च तथा कफ<ात्मै->
र नैर्वा॥१६॥
सरीसृपाख्ये निधनेऽर्कदृष्टे
सर्पाभिदुष्टं विजहाति देहम्।
विषाग्निना भूमिसुतेन दृष्टे
सौरेण भूताहिभिरर्दितः स्यात्॥१७॥
ग्रामाटवीवारिबिलाश्रयाख्य-
क्षेत्रांशसंस्थस्तनुगो बलीयान्।
तांस्तान् प्रदेशान् चरमाहि संज्ञे
पुंस्त्रीमृ<गां>शाद्यचतुष्पदांशे॥१८॥

Apparatus

13b सोवैः N 13c ग्रामाश्यने न्यैरणवैक्षितम्वा N 14c कुलव्याधिभिनि N शुष्कसृग N 14d °र्विशेषैः N 15a मत्तस N 15b चक्रात्कुवको विनाशं N 16a °ग्रहार्क्षा N 16b तस्थे N मृयते N 16c गुह्य x x ामन N 16d न्वो N 17b °दुष्टो N 17c विषाङ्गना N 17d °रर्द्दित N 18b °स्तनुनिर्ब° N 18d °मृसाद्यविपुष्पदाङ्गः N

42, 19–22

देहे यद्दृक्काश्रयिणो ऽन्तरस्य
तदङ्गघातो नियतः कृतान्ते।
रौद्रा भवन्त्यज्ज्वलिनो ऽष्टमे वा
तेष्वङ्गभङ्गाधिकरा निरुक्ताः॥१९॥
योगान्निरुक्तान् विबलान्निशाम्य
षष्ठर्क्षसंस्थो ऽपि शुभैरदृष्टः।
स्थानात्मजव्याधिभिरर्दितानां
वशाद्ग्रहो हन्त्यपि देहकृत्स्नम्॥२०॥
पापा ग्रहा मारकराः ⟨व⟩पा⟨यां⟩
घ्नन्त्यात्मतुल्येन गुणक्रमेण।
सिते जगुर्मृत्युविधानयोगाः
स्थानस्वभावाश्रयिणो विधार्याः॥२१॥
भावेषु मित्रादिषु शङ्किताश्च
ये येषु तेषां विधिरेष चैव।
गतिप्रवृत्तिर्मृतिदे यमान्ते
गृहाश्रयानेकफला ग्रहाणाम्॥२२॥
यवनजातके मृत्याश्रयनामः॥

Apparatus

19a यदगाश्रयिमन्त्यवन्तं N   19d °भङ्गातिकरा N   20b षष्टार्के° N   20d वाराद्ग्रहो हन्त्यशु देहकृत्स्नं N   21a घ्नारुधरो समा× N   21c शिते जगन्मृत्यु° N   21d °श्रयिमा N   22b येषु एषां N   °रेष एव N   22c °गमिते यमाद्ये N   22d ग्रहाश्रया° N   col मूर्त्या° N

43,1–5

शस्त्राश्रयं मृत्युपदाश्रयं च
(द्रेक्काश्रयं जामित्रभाव<जं> च)।
नैर्याणिकं भूरिजग<द्धि>भागं
विधानमन्यत् प्रतिभाविलब्धम् ॥१॥
विधानलोमैर्नियतैर्विधानै-
द्रेक्कापतेर्देशगुणं प्रणेयम्।
प्रपद्यते तद्गुणवच्चतुर्षु
प्रवृत्तिमार्गेष्वपकृष्यमाणः ॥२॥
तिर्यक् त्वधः सूर्ध्वं मनुष्यलोकात्
स्युः कालमृत्यौ गतयश्च तिस्रः।
अनेकजात्याकृतिलिङ्गभेदान्
f. 62 पशूः प्रणष्टे स्वगणो विधत्ते ॥३॥
सौम्यग्रहाः स्वोच्चगृहे स्ववर्गे
केन्द्रोपगा मृत्युविधानकाले।
सौम्यो ऽत्र योगे निधनेश्वरो वा
सूर्याधिवासे गतिमादधाति ॥४॥
जामित्रषष्ठाष्टमधोच्चसंस्थाः
शुभा गतिं स्वर्गकृतां विदध्युः।
अत्रैव योगे ऽशुभदाः प्रवृत्तिं
कुर्वन्ति यक्षासुरराक्षसेषु ॥५॥

Apparatus

1a मूर्त्याश्रयं N  1b जामित्रत्मम × N  1c तुद्दि × जग × भाग N  1d प्रतिमाविलब्धाः N  2a विधानह्रोमै° N  2b °र्देहं प्रतेर्देहगणं N  2c प्रयुद्यते नेदव × × न् चतुर्षु N  3a तिर्यक्वसू-रूपतमनुष्यलोका N  3b स्मात् कालवायौ N  3d यथूप्यौनिष्टेष्वदना विसुमा × N  4a स्वोच्चगृहा N  4c निधनेश्वश्वरो N  4d °वास N  5a स्वमित्र° N  °संस्थः N  5c एष्वेव योगेषु यदा N

43, 6–10

स्वक्षे(त्रमि)त्रांशत्रिकोणसंस्था
    जा(स्याद्दृ)ष्टांशेष्वजिता गृहेषु।
मनुष्यलोकोद्भवदाः स्युरेते
    दिग्देशजन्मर्क्षवशाच्च तत्र॥६॥
ग्रहाश्रयाज्जात्युपपत्तिरेषां
    जामित्रसंस्थान्निधनाश्रिताद्वा।
अस्तङ्गतर्क्षं ग्रहभागवद्वा
    स्थानाश्रयं जातिविशेषमाहुः॥७॥
नीचारिभेष्वन्यनवांशकेषु
    स्थिता जिताः क्षामविवर्णरूक्षाः।
षष्ठाष्टमास्तङ्गतभेश्वरास्ते
    सौम्यैरदृष्टा निधनाय दृष्टाः॥८॥
त एव क्रू(रै र्वि)र्जिता यदा स्युः
    क्रूरेक्षिताः पापगृहे यदा वा।
कुर्वन्ति तिर्यग्गतिषु प्रवृत्तिं
    क्षेत्रस्वभावाश्रयजैर्विकारैः॥९॥
इतीदमाधानिकजन्मवार्त्ता-
    वैनाशिकं कृत्स्नजगद्विधानम्।
निदर्शितं लक्षणतः फलैश्च
    कालग्रहक्षेत्रकृतैर्विकारैः॥१०॥

Apparatus

7a ग्रहाग्रया° N    7b °नासृताद्वा N    8a °न्यतमांशकेषु N    8c °भेश्वसंस्ते N    9c तैर्यग्गतिषु N    10a °वार्त्ता° N

43, 11–15

यद्वृद्धिधानं नियतं प्रजानां
    ग्रहर्क्षयोगप्रभवं प्रसूतौ ।
भाग्यानि तानीत्यभिशब्दयन्ति
    वर्षानुयोगे सदृशं नराणाम् ॥११॥
तदप्यभिज्ञैर्द्विविधं निरुक्तं
    स्थिराख्यमौत्पातिकसंज्ञितं च ।
कालक्रमाज्जातकनिश्चितं यत्
    क्रमोपसर्पि स्थिरमुच्यते तत् ॥१२॥
सप्त ग्रहाणां प्रथितानि यानि
    स्थानानि जन्मप्रभवानि सद्भिः ।
तेभ्यः फलं चारग्र[हक्रम]स्था
    दभ्युर्यदौत्पातिकसंज्ञितं तत् ॥१३॥
अष्टस्वभावा भुवि लोकवृत्त्या
    निगद्यते या बहुलक्षणार्थी ।
जन्माश्रया तद्विधिपूर्वकेण
    चारक्रमस्था फलदा निरुक्ता ॥१४॥
सौम्योग्रमित्रारिगृहोच्चनीच-
    स्ववर्गसंस्थानबलाबलोकैः ।
ग्रहा दशायोगवशाच्च दद्युः
    फलान्यसक्राश्रयसङ्कुलानि ॥१५॥

Testimonia

11–13 are quoted by Utpala on Bṛhajjātaka 1,3 and by Balabhadra.

Apparatus

11b ग्रहङ्क° N, ग्रहर्क्ष° BU  11c भास्यानिक्यनी° N, भाग्यानि तानी° BU  11d वान्तानु° N, वार्त्तानि B, वर्षानु° U  सदृशो N, ऽतिदशा BU  12a तद्यप्यभिज्ञोर्विविधं N, तदप्यभिज्ञैर्द्विविधं BU  12b °संचकं NB, संज्ञितं U  13d °दौत्पातिकसंचकं N, °दौत्पातिकसंज्ञितं BU  14a लोकवार्त्ता N  14d °क्रमस्थाः N

43, 16–17

f. 62v इष्टा मतास्त्विष्टफला बलाढ्या-
निष्टास्तु ये ऽनिष्टफला बलाढ्याः।
इष्टैर्ग्रहैरिष्टफलाश्च दृष्टा-
श्चेष्टा न तु क्लिष्टफलैरनिष्टाः॥१६॥
दशापतिः श्रेष्ठबलाधिवीर्यो
हन्त्यष्टवर्गोद्गतमप्यनिष्टम्।
तत्स्थानयोगात् फलदास्तु सर्वे
स चापि सर्वं तु फलं ददाति॥१७॥
यवनजातके निर्याणगतिः समाप्ता॥

Apparatus

16a मतान्विष्ट° N  बलस्था° N  16b नष्टास्तु N निष्टफल बलाढ्यं N  16c °रिष्टग्रहैश्च N  16d °रनिष्टैः  17b हन्त्याष्ट° N  17c तस्थान° N  col. समाप्त N

44, 1–5

स्वस्थानगो ऽर्को द्युतिमानकारी
    द्वितीयसंस्थो धनपुष्टिकृत् स्यात् ।
द्विट्पक्षविक्षोभकरस्तृतीये
    चतुर्थगो बन्धुगणप्रशंसी ॥१॥
पित्तज्वराजीर्णसुतार्तिकृच्च
    स्यात् पंचमे रुग्भयकृच्च षष्ठे ।
आरोग्यदः सप्तमगो ऽरिहन्ता
    वपुर्बलप्राप्तिकरो ऽष्टमस्थः ॥२॥
क्रोधाध्वपीडा नवमाश्रितो ऽर्कः
    प्रहर्षकृत् स्याद्दशमे ऽर्थदश्च ।
स च क्रियारम्भफलप्रसिद्धि-
    मेकादशे (द्वादशे)गो ऽर्तिकारी ॥३॥
स्थाने ऽर्कजस्यागमकीर्तिदो ऽर्क-
    स्तस्माद्धृत्प्रीतिकरो द्वितीये ।
तृतीयगो वित्तयशःप्रणाशं
    कुर्याच्चतुर्थे तु कलत्रसिद्धिम् ॥४॥
सुतात्मयोगोद्भव(कृ)च्च सूर्यः
    स्यात् पंचमे हर्षकरश्च षष्ठे ।
द्विड्मानकृत् सप्तमगो ऽन्नदश्च
    द्विड्विग्रहृत्प्रीतिकरो ऽष्टमस्थः ॥५॥

Testimonia

With this chapter compare Jātakatilaka, Aṣṭakavarga 1–28.

Apparatus

Inc. L   1c द्विट्पृक्ष° N   शत्रुक्षोभ Kam.   1d बन्धुप्रशंसा Kam.   °गुणाप्रसंघ्नी N   2a °सुरार्ति° L   2d °प्राप्तकरो N   3a सुखाध्वसौख्य Kam.   °ध्ववीडा N   4b °स्तस्माबहृ° N   °स्तस्माद्धृपर्कान्तिकरो L, पुष्टि ... कीर्ति Kam.   4c °यशोविरामं L   4d °श्चतुर्थस्तु N   5a सुत्मात्म° L   कुलोद्वेग Kam.   5b असुख Kam.   5c विमान° L   सप्तकगो N   5d हि विग्रह° L

44, 6–10

स्थानर्द्धिदः स्यात्तनमर्थगो ऽर्के-
श्चेष्टासमृद्धि(दिं)शमे सुखञ्च ।
एकादशस्थो विविधार्थकीर्ति-
प्रीतिप्रदो व्याधिकृदन्त्यराशौ ॥६॥
रविर्गुरुस्थानगतो विषाद-
संमोहकृद्वित्तकरो द्वितीये ।
स्थानार्थमानव्व(य)कृत्तृतीये
चतुर्थगो बन्धुजनप्रणेता ॥७॥
समानसौहार्दसुतार्थदो ऽर्कः
स्यात् पंचमे चेन्द्रियजिच्च षष्ठे ।
मोहाधिकृत सप्तमगो ऽर्तिदश्च
प्रद्वेषरोगाधिकृदष्टमस्थः ॥८॥
धर्मार्थदो ऽर्को नवमे ऽरिजिच्च
स्थितिक्रियाकृद्दशमे ऽर्थदश्च ।
एकादशे मानसुखार्थसिद्धिं
कुर्याद्विद्वादशगो ऽपमानम् ॥९॥
f. 63 स्थाने | भृगोर्दैन्यरुगाधिदो ऽर्को
द्वितीयगः स्त्रीधनधान्यकृत् स्यात् ।
तृतीयगः स्त्रीकलहप्रदो ऽर्कः
स्ववंशवैकृत्यकरश्चतुर्थे ॥१०॥

Apparatus

6a स्थानप्रदः L   6b °(दिं)शमः N   सुखं च L   6d °प्रीतिपदो व्याधिना° N, करोति वृधिं हि° L °उथान्त्यराशौ L   7b °द्वित्तहरो L, स्वहानिः Kam.   7c स्थानार्थ्यमानन्व(प)कृ° N   7d बन्धुनिन्द्य Kam. °प्रयाता L   8a °सुखार्थ° L   8b रुद्रिप्रजिच्च L, ऽरिरुक्त्वमे Kam. (from चेद्रिपुजिच्च)   8c मोहार्थ° LN ऽर्थदश्च L, ऽर्थकृच्च N   8d मोहहानिपथिश्रम Kam. °रोगान्धना° L   9b स्थानहानि Kam.   °द्दशमो N   9d विमानं L   10a स्थानाद्धृगो° N   10b अर्थविधूहानि Kam.   10d °श्चतुर्थः N

44,11–15

व्ययप्रदः पंचमगोऽरिदश्च
षष्ठे बहुस्थानविनोदकारी।
स्त्रीसौख्यदः सप्तमगो वपुष्कृत्
सूर्योऽष्टमे देहसुखं हिनस्ति॥११॥
क्रोधानसूयां नवमोपगोऽर्कः
कुर्याद्विघातं दशमे क्रियायाम्।
एकादशे कीर्तिकृदन्त्यराशौ
शुक्राद्रविः कर्मधनप्रसिद्धिः॥१२॥
स्थाने कुजस्यार्थसुतप्रदोऽर्कः
स्यात्तु द्वितीये बहुवित्तकृच्च।
प्रमोषभङ्गादिकरस्तृतीये
वपुर्बलारोग्यकरश्चतुर्थे॥१३॥
पित्तज्वराजीर्णसुतार्तिकृच्च
स्यात् पंचमे रुग्भयकृच्च षष्ठे।
आरोग्यदः सप्तमगोऽरिहन्ता
प्रमोदकल्याणकरोऽष्टमस्थः॥१४॥
स्थानप्रदोऽर्को नव(मे)ऽघहन्ता
प्राप्तिं फलानां दशमे करोति।
बह्वङ्गनामोदयशस्करः स्या-
देकादशेऽर्कः श्रमदुःखदोऽन्त्ये॥१५॥

Apparatus

11a यक्ष्मारिवर्धन Kam. ऽरिकृच्च L 11b षष्ठो N वपुःस्थान° L °विमोद° LN अरिहानि . . . स्थानाप्ति Kam. 11d कष्टमसुखं Kam. °सुखा N 12a क्रोधान्य° LN °सूयं L, सूर्या N क्रोधोपछन्नता Kam. नवमे हि कुर्यात् L 12b दशम N 12c °कृदेव सूर्यः L 12d स्याद्द्वादशे L मानधनप्रसिद्धिं L, मानधर्माप्ति Kam. 13a °सुतद्विदो L 13b स्याद्वा L, स्यात्त N 13c प्रसादभङ्गो ऽधिना° L 14a °कृत् स्याद् L 14b रविस्त्रिकोणे L 14c रिहन्तो N 15b बलानां L दशमं N 15c °नानाद° L 15d ऽन्ते L °दुःसितो N ऽर्कः L

44, 16–19

स्थाने बुधस्य स्मृ(ति)मोहभङ्ग-
    व्याधिप्रदो ऽर्कः कलिकृ(द्) द्वितीये।
तृतीयगः स्थानधनोपकर्ता
    चतुर्थगो वैरभयाधिकारी ॥१६॥
सौभाग्यकृत् पंचमगो ऽशुभघ्नः
    षष्ठे रविर्मानधनप्रणेता।
वागङ्गनाहारकरस्तु सूर्यः
    स्यात् सप्तमे व्याधिकृदष्टमस्थः ॥१७॥
ज्ञानप्रदो ऽर्को नवमे ऽर्तिहश्च
    श्रेष्ठप्रशंसां दशमे करोति।
ज्ञानार्थसौभाग्यकृदिन्दुसूनो-
    रेकादशे द्वादशगस्तु सूर्यः ॥१८॥
[हृ]द्रोगशोकाधिविवाददैन्य-
    क्रोधाध्वव्याधिभयार्तिमोषान्।
स्थाने शशाङ्कस्य रविः करोति
    व्ययश्रमोद्वेगमपि द्वितीये ॥१९॥

Testimonia

19–24 are quoted by Utpala on Bṛhatsaṃhitā 103, 5–7.

Apparatus

16a रतिमोह° L   16b कलिकृ(त्) N   16d वैरभयधव° N, वैरिभयाद्धि° L   17a ऽथकृत् स्यात् L   17b रविर्वै धनधान्यकारी L   17c रुग° L   °हारिकर° N, °दारहर° L   17d पंचमे L   18a ऽतिकृच्च L   18c स्थानार्थसौभाग्यलब्धाय: Kam.   °सूनु° L   18d रोगकृद्दैव चान्ते L   19a–b om. L   19a °विवाह° U   19b °दोषान् U   19c रवे वरं स्याद् L   19d व्ययाश्रयो° N, व्यर्थश्रमो° U

44,20–23

तृतीयसंस्थो धनधर्ममान-
स्थानप्रियप्रीतिसुखप्रदो ऽर्कः।
चतुर्थगस्तु क्षतजप्रवृत्ति-
ज्वरामयोद्वेगविवादकारी ॥२०॥
[नृपावमानात्मजबन्धुशोक-
व्याधिप्रदः पंचमसंस्थितो ऽर्कः।
आरोग्यसौख्यारिविनाशहर्ष-
ख्यातिक्रियासिद्धिकरश्च षष्ठे ॥२१॥
जामित्रसंस्थो रुधिरप्रवृत्ति-
ज्वरक्लमाज्जीर्णविषाधवकारी]।
f. 63v सूर्यो ऽष्टमे स्त्रीसुतबन्धुदुःख-
व्याधिभयोपद्रवमृत्युकृत् स्यात् ॥२२॥
दैन्यस्थितिभ्रंशगुरुस्वबन्धु-
प्रद्वेषकृत् स्यान्नवमाश्रितो ऽर्कः।
मेषूरणस्थो द्विचतुष्पदस्त्री-
हिरण्यभूम्यम्बरलाभकर्ता ॥२३॥

Apparatus

20a धनमानधर्म° U, धनधर्मरिष्टं L 20b स्थानासन° U करोति जन्तुं च सुखार्थयुक्तं L 20d °ज्वरामयोद्वेगविरोधकारी L 21a–22b no space in N 21a नृपावमर्दा° U 21d षष्ठः U 22a रविरप्रवृत्ति° L 22b °ज्वराश्रमाजीर्णविवादकारी L 22c स्त्रीसुतदुःखबन्धु° N 22d °व्याधिप्रदो पद्रव° U °मृत्युदश्च L 23b °वमासृतो N, °वमे स्थितो L 23c द्विचतुष्पदादि° L 23d °हिरण्यरौप्याम्बर° U

44,24–27

एकादशे स्थानयशःप्रहर्ष-
मिष्टाशनारोग्यधनप्रदो ऽर्कः।
स्थाने निरुक्तः शशिनो ऽधिदृग्भिः
क्रियाफलाघातकृदन्त्यराशौ॥२४॥
मानाशनस्थानधनर्द्धिमान-
प्रख्यातिभृत्यान्यहिरण्यदो ऽर्कः।
होरागतः कृच्छ्रमरुत्प्रदश्च
द्वितीयगः सम्भृतिवित्तनिघ्नः॥२५॥
तृतीयसंस्थो विजयप्रमोद-
स्थानेष्टवित्तान्नसुहृत्प्रदो ऽर्कः।
चतुर्थगो मान्यरतिप्रहर्ष-
स्वबन्धुसंयोगविभूतिकर्ता॥२६॥
कुलश्रमोद्वेगविवादरोग-
व्ययप्रदः पंचमगो ऽध्वदः स्यात्।
षष्ठे ऽरिरुक्क्षामयशःप्रताप-
प्रमोदसंमानधनप्रदो ऽर्कः॥२७॥

Apparatus

24a °यशःप्रदो ऽर्कौ L, °यशःप्रहर्षौ° N  24b °स्त्विष्टाङ्गना° N  मिष्टान्न Kam.  °रोग्यसुखप्रदो U
24c–d in L:
स्थाने विरोधाद्व्ययकृद्धि सूर्यः
फलस्य घातं हि करोति चान्ते॥
24c स्थानं N  निरुक्तं U  विधिज्ञैः U  25a यामामच° N  मानयानसुहृद्व्यय Kam.  25b °सुखार्थ° L  °कृत्यान्न° N  25c °गतो L  कृच्छ्रमरुक्प्रदश्च N, वै जनधान्यकारी L  25d सम्भृततुष्टिहृद्वा L  26a विजयप्रदो ऽर्कः L  26b स्थानस्य वित्तस्य सहस्रकारी L  26c मान्य° L  26d °संयोगमहो करोति L  27a कलिं गुरुद्वेष° L  27b ऽरिकृच्च L  27c धनस्य प्रवृत्तिं करोति L  27d स्वबन्धुसौख्यं च सुखस्य वार्तिं L  27c रिरुक्क्षाश° N  अरिरुक्काश Kam.

44,28-30

क्रोधाध्वमोहामयमोषयोषि-
    द्रुगार्तिकृत् सप्तमसंश्रितोऽर्कः ।
शस्त्रज्वरद्विड्भयबन्धभङ्ग-
    व्यालादिदाहान्तकृदष्टमस्थः ॥२८॥
नीचावमानव्ययधर्मकर्म-
    विघ्नप्रदोऽर्को नवमर्क्षसंस्थः ।
चतुष्पदच्छादनभूम्यपत्य-
    स्त्रीभृत्यदोऽर्को दशमर्क्षसंस्थः ॥२९॥
प्रभूतगोभूमिसुवर्णताम्र-
    यानासनस्थानसुखप्रदोऽर्कः ।
एकादशे द्वादशगस्तु लग्नाद्
    वृतार्थहृत् कृच्छ्रमशोककारी ॥३०॥
⟨यवनजातके⟩ सूर्यचारः ॥

Apparatus

28b in place of 28a in L   28a °मोहामहमेष° N
क्रोध . . . अध्व . . . चौरभी Kam.   in place of
28b L has: यत्रज्वरद्विड्भयभङ्गमेव (cf. 28c)   28b
°संश्रृतो N, °संस्थितो L   in place of 28c L has:
नृपाद्भयं वै सुतदुःखकारी   28d व्यालादिदो
ऽर्थार्थकृ° L   29a °मानस्यय° N   29c चतुष्पदा-
च्छेदनभृत्यमान्या° L   29d °स्त्रीभृत्प्रदो N   30b
°धनाशन° L   30c एकादश L, एकादसो N
द्वादशस्तु L   30d वृतार्थकृत् कृच्छ्रमशोककारी N,
व्ययं हि शोकस्य ल L   col.: इति सूर्यस्य L
no space in N

45, 1–4

यस्त्रव्रणव्याधिकृदर्कसूनुः
स्वस्थानगो मानहरो द्वितीये।
रोगारिजेता स्थितिकृत्तृतीये
सौरश्चतुर्थे गुणसौहृदघ्नः॥१॥
पुत्रप्रदः पंचमगोऽर्थदश्च
षष्ठेऽर्कजः स्थानधनाधिकारी।
जामित्रगो मार्गकृदङ्गनाघ्नो
व्याध्यर्थनाशारिकृदष्टमस्थः॥२॥
वित्तागमघ्नो नवमर्क्षगोऽर्किः
कर्मापहर्ता दशमर्क्षसंस्थः।
एकादशो नैकसुखार्थसिद्धिं
सौरोऽन्त्यगस्त्वधनव्ययं करोति॥३॥
f. 64 स्थानेऽर्कजोऽर्कस्य सुखार्थहर्ष-
प्रीतिप्रदः स्याद्धनदो द्वितीये।
तृतीयगो मानवपुर्बलघ्न-
श्चतुर्थगो बन्धुसुखोपकर्ता॥४॥

Testimonia

With this chapter compare Jātakatilaka, Aṣṭakavarga 168–175.

Apparatus

1b °हर N 1c मेधानिनुहां स्थितिनृत्तृतीये L 2b षष्टो N 2c मानहृत° L 2d व्याख्यार्थ° L 3a वित्तशमघ्नो L, वृत्तागमघ्नो N, लाभहानि Kam. नवमे ऽर्कजस्तु L 3b कर्मप्रहर्ता L 3c एकादसो N अनेकसुतार्थाप्ति Kam. मानसुखा° L 4a सुतप्रहर्षं L 4a–b प्रीतिहर्षधनात्मज Kam 4b °प्रदस्तत्परदो L अरिनाश Kam. 4d °श्चतुर्थे L बन्धुसुखप्रहर्ता L, बन्धुसौख्य Kam.

45, 5-9

रोगात्मजोद्वेगकृदर्कसूनुः
पृथक्त्रिकोणे कलिकृच्च षष्ठे।
जामित्रगः स्त्रीसुतसौख्यदाता
सौरोऽष्टमे व्याध्यरिसम्भ्रमघ्नः॥५॥
पापप्रवृत्तिं नवमे विधत्ते
क्रियासु पुष्टिं दशमे च सौरः।
एकादशे स्फीतशुभार्थलाभं
व्यापारहानिं कुरुतेऽन्त्यराशौ॥६॥
मोहं गुरुस्थानगतोऽर्कसूनुः
कुर्याद्द्वितीये तु शुभं हिनस्ति।
तृतीयगो विग्रहवैरकारी
बन्ध्वालयोद्वेगकरश्चतुर्थे॥७॥
पृथक्त्रिकोणे सुतवित्तमान-
यशःप्रदः ख्यातिकरश्च षष्ठे।
जायालयक्षोभकरश्च सौरो
जामित्रगस्त्वन्तकृदष्टमस्थः॥८॥
स्वभृत्यनीचाद्भयतापदोऽर्किः
स्या(त्त्रि)त्रिकोणे दशमे वपुर्घ्नः।
एकादशेऽल्पश्रमसंचयाप्ति-
मूर्जं च देहे कुरुतेऽन्त्यराशौ॥९॥

Apparatus

5a °जेद्वेष° L   5c स्त्रीपुत्रजं सुखं Kam.   °सुखसौख्य° N
5d ऽष्टमस्थो ह्यरिशस्त्रकघ्नः L   6a °प्रवृद्धिं L   नवमो N   6b पुष्टिर्दशमे L   सौरे L   6c स्फीतसुखार्थ° L
7b हिनस्त N   7c °वैरि° L   7d देहदैन्य Kam.   8b जयप्रदः L   8c जायालयव्योम° N, प्रचलयव्याम° L
8d °गस्त्वन्य° N, °गो व्याधिभ° L   देहपीडन Kam.
9a ²भृत्यनीचापवाद Kam.   °नीचाद्भवतापमर्किः L
9b स्या(त्तृ)त्तृकोणे N   देहपीडन Kam.   9c ल्पाग्रम-संचयार्ति° N, शिल्पस्वसंचयं च L, अल्पश्रम · · · शुभ Kam.   9d प्रज्ञां L, सम्मानाप्ति Kam.

45, 10-14

भृगोर्वपुर्दारहृदर्कसूनुः
स्थाने स्थितः स्याद्धनहृद्द्वितीये।
तृतीयगोऽनिष्टवियोगदुःख-
द्वेषप्रदः स्त्रीकलिकृच्चतुर्थे ॥१०॥
बन्धाधवकृत् पंचमगोऽर्कसूनु-
रैश्वर्यमानार्थकरश्च षष्ठे।
स्त्रीहेतुकोद्वेगविषादकारी
जामित्रगो व्याधिकृदष्टमस्थः ॥११॥
दैन्याधवकारी नवमर्क्षसंस्थः
सौरः समृद्धिं दशमे हिनस्ति।
स्थानस्तुतिप्रीतिधनप्रसूति-
भृत्यप्रदो भद्रपदेऽन्त्यभे च ॥१२॥
स्थाने कुजस्यार्किरधर्मवैर-
व्याधिप्रदोऽर्किः क्षयकृद्द्वितीये।
वैरक्षयोत्साहकरस्तृतीये
च(तुर्थ र)ाय़(ारी) बहुबंध(न)ाकृत् ॥१३॥
आज्ञासुतार्थागमकृत्त्रिकोणे
गुणोदयैश्वर्यकरश्च षष्ठे।
वैराग्यभङ्गादिकृदर्कसूनुः
स्यात् सप्तमेऽग्निव्रणदोऽष्टमस्थः ॥१४॥

Apparatus

10a वसुमानकृद° L  10b स्थितस्तु धन° L  10c °गस्तु प्रबियोग° L  10d विषप्रदः L  स्त्रीकृति° N, कलत्रकलह Kam.  11a बन्धवधव° L, वधमार्गश्रम Kam.  11b अर्थमारवैराग्नि Kam.  °मेकार्थ° L  11c °विवाद° L  12a दैन्याधि° N, दैन्यं मार्गश्रम Kam.  12c स्थाना° N  12d भार्गवभे ऽन्त्यभावे L  13b °प्रदश्च क्षय° L  13c वैरिक्षयासह° L, उत्साहोऽप्यवैरता Kam.  13d भावे चतुर्थे L  °वंशनाशः L, भूयसीबन्धनाबन्धौ Kam.  14c वैसङ्ग° N  वैरश्रमामय Kam.  °र्कसूस्थः N

45, 15–18

भेदाभ्यसूयान्नवमे ऽसिताङ्गो
  मेषूरणे मानसुखार्थसिद्धिम्।
एकादशे श्रेष्ठफलं च लाभं
  ददाति देहे सुखमन्त्यराशौ ॥१५॥
f. 64v सौरो बुधास्था[नगतो] मतिघ्नो
  रुजामनोव्याकुलतां द्वितीये।
स्वपक्षभेदं कुरुते तृतीये
  सौहार्दविश्रम्भव(धं) चतुर्थे ॥१६॥
सुतापचाराकुलतां त्रिकोणे
  षष्ठे मतिख्यातिगुणार्थसिद्धिम्।
जामित्रगो वागशुभप्रवृत्तिं
  सौरो ऽष्टमे देहसुखं करोति ॥१७॥
धर्मार्थसिद्धिं नवमे ऽर्कसूनु-
  र्मेषूरणे वाग्मतिकर्मलाभम्।
एकादशे भूमिचतुष्पदाप्तिं
  करोति मानागममन्त्यराशौ ॥१८॥

Apparatus

15a भेदाधनकारी नवमे L  15b सुखार्थमानसिद्धि Kam. °सुतार्थ° N  15c लाभा N  16a बुधास्थो ××× N  16b व्याय:स्थितो मतिव्याडालता N, अर्थाङ्गपीडा हृताच्चता · · · व्याकुल्य Kam.  16d सोहाच्च विस्त्रम्भवधाच्च° L, सौहार्दविस्त्रस्तव(धं) च° N, सुहृदविश्वास Kam.  17c वाचशुभ° L  17d ष्टमो N  18b वान्छति° L  18c भृत्यपशुप्राप्ति Kam.

45, 19–22

बन्धाध्वशस्त्रानिलरुग्विषाग्नि-
    द्विडर्दनस्त्रीसुतवित्तनाशम्।
स्थाने विधत्ते शशिनोऽर्कसूनु-
    स्ततो व्ययायासकरो द्वितीये ॥१९॥
तृतीयगोऽरिक्षयमानहर्ष-
    सौभाग्यबह्वागमदोऽर्कसूनुः।
चतुर्थगो बन्धुवधावमान-
    च्छायाविघाताधिभयाध्वकारी ॥२०॥
स्थितिक्रियारम्भसुतार्थनाश-
    स्वबन्धुविद्वेषविवादकारी।
शनैश्चरः पंचमगोऽथ षष्ठे
    शत्रुक्षयामोदसुखार्थदाता ॥२१॥
छायाविघातश्रमगुह्यरोग-
    स्त्रीमित्रनाशाध्वकृदर्कसूनुः।
जामित्रसंस्थोऽष्टमगस्तु मोष-
    सुहृद्बन्धुमृत्युव्यसनार्तिकारी ॥२२॥

Testimonia

19–24 are quoted by Utpala on Bṛhatsaṃhitā 103,39–45.

Apparatus

19a °रुग्विषार्ति U, °दष्टमान्य° L  19b °वित्ताम्बरस्त्रीसुतबन्धुनाशं L  °द्विडदर्न° N, विडम्बन° U  19c ऽर्कपुत्र° U  19d व्ययायसुकरो L  20b °बाहुबलदो L  20c बन्धुजनापमान° N  20d °च्छायाभिघातानारिभयार्थ° N  °विघाताध्वभयार्ति° U  21a °क्रियाभङ्ग° L  21c °गो ध्व N, °गश्च L  षष्ठः N  21d °क्षयलाभ° L  °सुतार्थ° U  °कारी L  22b कान्तिहानि Kam.  °नाशाध्व° N  22c ऽष्टमगो ऽथ U  मेष° L, शोक° U  22d बन्धुसुतानार्तिकरः प्रदिष्टः L (सुहृद् om.)  °सुहृद्बन्धुभृत्य° U

45,23–27

व्याध्यध्ववैरश्रमवित्तनाश-
    त्वक्क्लेशदोऽर्किर्नवमर्क्षसंस्थः।
ऐश्वर्यचेष्टाफलसंचयघ्नो
    मेषूरणे व्याध्यपकीर्तिकृच्च ॥२३॥
यशःपरस्त्रीधनभृत्यलाभ-
    क्रियासमृद्धिस्थितिमानदोऽर्किः।
एकादशे द्वादशगस्तु चेष्टा-
    नैपुण्यकीर्तिद्युतिमानहर्ता ॥२४॥
पूजां पुरग्रामगणाधिपेभ्यः
    शश्वच्च लोहान्यसितोऽर्थलाभम्।
कुर्वीत लग्नोपगतोऽर्कसूनु-
    र्द्वितीयगोऽर्थापचयाययशस्कृत् ॥२५॥
अनिष्टनाशेष्टफलप्रसिद्धि-
    मानर्द्धितारोग्यकरस्तृतीये।
लग्नाच्चतुर्थे (ऽर्क)सुतो गृहार्थ-
    सम्बन्धिसौहार्दविभूतिकारी ॥२६॥
पृथक्त्रिकोणे विजयार्थपुष्टि-
    प्रजासुतोत्पादकृदर्कसूनुः।
आरोग्यहर्षद्युतिशत्रुनाश-
f. 65    स्त्यात्युद्यमोत्साहकरश्च षष्ठे ॥२७॥

Apparatus

23a व्याध्यादिवैरश्रुति° L 23b °त्वक्क्लेश° N °दः स्यान्न° U, °मार्किर्न° L 23c °संचयाघ्नो N, °कृच्च सौरो L 23d याध्वनि कीर्तिकृत् स्यात् L 24b प्रिया° L 24a-b पयोभृत्यवरस्त्रीधनलम्भन Kam. 24b °मानवृद्धिं L, °मानदस्तु U 24d °हर्षान् L 25a प्रज्ञा L 25b लोहानि सुस्वार्थ° L 25d °यशश्चत् L 26a °फलाप्त° L 26b °मानान्विडारोग्य° N 26c °श्चतुर्थो (अर्क)सुते N 26d °मुपेत्य मोहात्म° L 27b °सुतोत्साद° N 27c–28b om. L

45,28–30

योषिद्विनाशश्रमविप्रवास-
    व्याधिप्रदः सप्तमगो ऽर्कसूनुः।
स्त्रीपुत्रवित्तव्ययबन्धमृत्यु-
    व्याधिप्रदः सूर्यसुतो ऽष्टमस्थः॥२८॥
दीर्घाध्वरोगारिविवृद्धिदेह-
    विशोषकर्ता त्रित्रिकोणसंस्थः।
मेषूरणस्थो ऽर्कसुतस्तु मान-
    चेष्टासुखस्थानसमृद्धिकारी॥२९॥
एकादशे लोहचतुष्पदादि-
    स्त्रीधान्यभृत्यासितवासननानाम्।
दातार्कजो द्वादशगस्तु लग्ना-
    दनर्थवैकृत्यविषादकारी॥३०॥
⟨यवनजातके⟩ शनैश्चरचारफलम्॥

Apparatus

28c °मित्रव्ययमृत्युबन्धु° L   29a °विवृद्ध° N   29b °प्रद्वेषकर्ता N   29d °चन्द्रसख° L   सुतस्थान Kam.
30b °वासम्मांश्च N, °वाससमं च L   30c यतो ऽर्कजो L
30d °विवाद° L   col. इति फलाष्टकवर्गस्समाप्तः L
no space in N

46, 1–4

स्वस्थानगः स्थानसुतार्थमान-
 प्राप्तिं द्वितीये च गुरुः करोति।
तृतीयसंस्थो विजयार्थसिद्धिं
 चतुर्थगः प्रीतिसुखोपपत्तिम्॥१॥
विषाददैन्याध्वगतिं त्रिकोणे
 षष्ठेऽरिविक्षोभभयश्रमार्तिम्।
करोति जामित्रगतोऽष्टमे च
 भोज्याङ्गनारोग्यसुतार्थलाभम्॥२॥
बुद्धिस्थितिघ्नस्त्रित्रिकोणसंस्थो
 मेषूरणे स्थानयशोऽर्थदः स्यात्।
एकादशस्थो गुरुरागमानां
 सम्पत्तिकृत् स्याच्छ्रमदोऽन्त्यराशौ॥३॥
स्थाने रवेर्बुद्धिसुहृद्धनाप्तिं
 करोति जीवो धनदो द्वितीये।
रुग्दैन्यशत्रुव्ययकृत्तृतीये
 स्थितिश्रुतिख्यातिकरश्चतुर्थे॥४॥

Testimonia

1a–b and 4a–b are quoted by Utpala on Bṛhajjātaka 9,5. With this chapter compare Jātakatilaka, Aṣṭakavarga, 113–140.

Apparatus

1a स्थानसुवर्ण° U 2a विवादधैर्येध्व° L °गतिस्त्रि° N 2b रिनाशं च भयं श्रमं च L °यशः श्रमा° N 2c ष्टमस्थो L 2d भोज्यङ्ग° N °सुखार्थ° L 3a स्थितिधीहानि Kam. °स्मृतिघ्नस्तु N 3b मेषूरण L 3c गुरुराजमानं L 3d स्यात्क्रमदो L 4c °शत्रूव्यय° N

46,5-8

रुग्राजपीडाभवकृदिन्दुसूरि:
स्यात् पंचमे बन्धनक(र)श्च षष्ठे।
जामित्रगः प्रीतिसुखप्रवृत्तिं
व्याध्यर्थहानिं कुरुते ऽष्टमस्थः॥५॥
धर्मार्थसिद्धिं नवमे सुखं च
क्रियासु लाभं दशमे सुखाढ्याम्।
एकादशे वस्त्रहिरण्यलाभं
कुर्याद्गुरुर्द्विड्भ्रमशोकदो ऽन्त्ये॥६॥
स्थाने गुरोर्विभ्रमदो ऽर्कसूनोः
व्ययं धनानां कुरुते द्वितीये।
तृतीयगो भूमिधनार्थलाभं
ददाति बाधां विविधां चतुर्थे॥७॥
सुतोत्सवोत्साहकरस्त्रिकोणे
षष्ठे गुणाढ्याविजयार्थकृच्च।
स्यात् सप्तमे क्लेशरुगार्तिकारी
जीवो ऽष्टमे व्याधिकृदर्थहृच्च॥८॥

Apparatus

5b बन्धनु° N, लाभन° L  5d व्याख्यार्थ° L  6a बलं च L  6b सुखाद्यं L  6d °द्विड्क्रम° N, °द्रोग्भ्रा-म° L  7b क्षतिं L, कृतं N, धनव्यय Kam.  7d लाभं विविधां L, लाभहानि Kam.  विविधां N  8a सुतोदयं सौख्यकर° L  8b गुणज्या° L  8c सप्तमः N  क्लेशरुजाभव° L  8d अर्थहानिर्व्याधिश्च Kam.  °दर्थकृच्च N

46,9–12

पापप्रवृत्तिं नवमे श्रमं च
f. 65v (क्रो)धं विवादं दशमेऽपवादम्।
ददाति वित्तान्यकृशानि जीवः
सद्वादशे भद्रपदे निविष्टः ॥९॥
गुरुर्मनस्तापविषादकारी
स्थाने भृगोः स्त्रीधनदो द्वितीये।
तृतीयगः स्त्रीकलिकोपवृद्धिं
कुर्याच्चतुर्थे गुरुबन्धुवैरम् ॥१०॥
धनात्मजोद्भूतिकरस्त्रिकोणे
षष्ठे गुरुर्द्विड्मर्दनार्थकृत् स्यात्।
जामित्रगः स्त्रीकलहाध्वमोह-
प्रदोऽष्टमे प्रीतिसुखार्थहर्ता ॥११॥
गुणार्थधर्मोदयकृच्च जीवः
स्यात्त्रित्रिकोणे दशमेऽर्थदश्च।
एकादशे स्त्रीधनधान्यलाभं
दद्याद्गुरुस्तत्व्ययमन्त्यभे च ॥१२॥

Testimonia

9ab is quoted by Utpala on Bṛhajjātaka 9,7.

Apparatus

9a °प्रवृद्धिं L   बलं च L, विधन्ते U   9b क्रोधं L, बाधं U   9c °न्यधिकारि L   9d स्याद्वादशे L भद्रपदा L   लाभे स्याद्दशभं व्ययगे धनं Kam. 10a गुरुर्मे(न)स्थान° N   ताप Kam.   10c °कलिलोभ° L   11a °जोद्भूत° L   11b °र्द्विड्मदनार्ति° N, °रात्ममानार्थ° L, अर्थारिजय Kam.   °कृच्च L   11c °गो N, °भे L   स्त्रीकलिलब्ध° L   12d करोति जीवो व्यय° L   °स्तत्विति° N, दैन्य Kam.

46, 13–16

गुरुः कुजस्थानगतोऽरिहन्ता
    द्वितीयगस्तु स्तुतिहर्षदाता।
तृतीयगः ब्वोभविवादकर्ता
    चतुर्थगः सौहृदमानयुक्तः ॥१३॥
स्यात् पंचमोद्गोऽरिभयापनेता
    षष्ठे श्रमोपद्रवजीर्णकृच्च।
जामित्रगो व्याध्यरिशोककारी
    जयप्रहर्षाश्रयहाष्टमस्थः ॥१४॥
सौभाग्यहारी नवमेऽर्थहा च
    मेषूरणे स्थानगुणर्द्धिकर्ता।
एकादशे भूमिहिरण्यलाभं
    करोति जीवो व्ययमन्त्यभे च ॥१५॥
स्थाने गुरुर्वाग्मतिभूतिकारी
    बुधस्य मानोदयकृद्द्वितीये।
तृतीयगो मानसुखस्थितिघ्न-
    श्चतुर्थगो मानफलार्थभागी ॥१६॥

Testimonia

13a–b are quoted by Utpala on Bṛhajjātaka 9,5.

Apparatus

13b °गतस्सद्भुति° L   वाहनाप्तिः शुभं सुखं Kam   13d °युक्तं N, हर्षं L   14a पंचमे क्रोधभयं च जीवे L   भूर्बहकोपता Kam.   14b वंचनोपद्रव Kam.   °जीवहृच्च LN   order in L: 17c–18d, 16a–17b, 14c–15d   14c व्याधिभविशोक° L   14d नावत्रागर्हण Kam.   °र्षास्त्रजदैन्यसंस्थः L   15a सौभाग्यकारी N, दुर्बुद्धिहन्ता L   नवमो N   चं जीवो L   15b गुणोद्धिकर्ता N, °गुणप्रहर्षं L   15c दस्याद्बुधभो L   15d कुर्याद्गुरुर्ज्ञानसुखप्रलोपं L   16a गुरुलङ्गम° L   16d ज्ञानफलार्थवाहं L, मानकलावाप्ति Kam.

46,17-20

ख्यातिं धनं पंचमगो निहन्ति
षष्ठे वपुस्तुष्टियशोपघाती।
जामित्रग: प्रीतिगुणोपकर्ता
जीवो ऽष्टमे वाग्मतिकल्यकारी॥१७॥
वाग्बुद्धिहन्ता नवमर्क्षसंस्थो
धर्मायलाभं दशमे ददाति।
एकादशे ज्ञानसुखार्थसिद्धिं
दद्याद्गुरुर्द्वादशगश्च मौर्ख्यम्॥१८॥
मोहार्थनाशेस्मितिमानभङ्ग-
श्रमाधवङ्गज्ञातिनिरोधवैरान्।
गुरु: राशिस्थानगत: करोति
स्थानात्मजाज्ञाधनदो द्वितीये॥१९॥
f. 66 गुरुस्तृतीये स्वजनार्थनाश-
क्रियावधाधबन्धमबंचनाकृत्।
विमाननेष्टापचयापवाद-
बन्धुव्ययोद्वेगकरश्चतुर्थे॥२०॥

Testimonia

19–24 are quoted by Utpala on Bṛhatsaṃhitā 103, 25–31.

Apparatus

17a यशोर्थानि Kam. निहन्ति N, हिरण्यं L 17b वपु:स्थान-यशोजयार्थं L पुष्टिर्यशोर्थं Kam. 17c after °त्रगो N inserts (in parentheses by N²) 16c मान°– 17b; जमित्रग: मद्गुणोपलकृतिव्यय Kam. 17d जीवे L वाग्यति° L वागशुभ Kam. 18a बन्धुद्धिहर्ता नवमे च ऽथौमाद् L 18b धर्मार्थ° L 18c स्थानसुखार्थ Kam. 18d °गस्तु L मौर्त्यं N, ऽथेटं L 19a महा° L 19b °ग्रामा° U °श्रमादरस्तुतिविवादकारी L 19d °त्मजो N ज्ञानधनो N, ज्ञानधनं L 20b °प्रियंवदस्य L °नार्थं L 20c °नेच्छा° N, °सेष्टा° U, °नाज्ञा° L °नभयाप° L 20d °करं चतुर्थे L

46,21–25

भृत्याम्बरस्थानसुवर्णमान-
पुत्रप्रदः पंचमगो ऽरिजिघ्न।
षष्ठे गुरुर्बन्धुविवादवैर-
त्रासप्रयेष्टाफलहानिकारी ॥२१॥
जामित्रगः स्त्रीवसनान्नपान-
सौसुख्यसस्फीलफलाधवकर्ता।
जीवो ऽष्टमस्थो धनबन्धुभङ्ग-
व्याधिश्रमानर्थविवादकारी ॥२२॥
करोति जीवो नवमे सुतस्त्री-
भूस्थानमानार्थसमृद्धिमग्र्याम्।
मेषूरणस्थो (ऽधि)रुगिष्टहानि-
श्लेष्मामयायाससुतान्तकारी ॥२३॥
एकादशे भूवसनात्मजस्त्री-
हिरण्यधान्याम्बरवाहनानाम्।
दाता गुरुर्द्वादशगो ऽथ चन्द्रा-
द्विदेशचर्याश्रमदैन्यकारी ॥२४॥
सुवर्णगोश्वात्मजभूम्यपत्य-
विद्यारतिस्थानयशोन्नदाता।
होरागतो देवगुरुर्नराणां
द्वितीयगो मानसुखार्थकर्ता ॥२५॥

Apparatus

21a भृत्यसुत° L 21b °धनप्रदः L रिहृम्न L 21c °र्बन्धवपवाद° L 21d त्रुमप्रदो ष्टाफलदे तिकारे L 22a °न्नमानं L 22b °कलाधव° U °महेत्तफलप्र-दक्ष L 22c स्यादिष्ट° L बधाभङ्गबन्धु° U, बधाबन्धु-भङ्ग° L 23a स्थितस्तु L 23b °मग्र्यं N, सौख्यं L 23c र्वधिचिदिष्ट° L 23d om. L °सुतार्थहारी N 24a °दशस्थो भवनात्म° L भूभवनात्म° U 24b °वाहनानिं L 24c ऽथ LU, द्वि N 24d °देशदाया° L °श्रमशोक° U, °व्रणदैन्य° L 25a °गोजात्मजभूमिपत्नी° L 25b °यशोर्थधैर्यं L

46,26–29

तृतीयगो बन्धुसपत्नवैर-
क्रोधापवादापचयप्रवृत्तिम्।
करोति जीवस्तु चतुर्थसंस्थः
स्वधर्मदारालिगृहार्थसिद्धिम् ॥२६॥
लग्नाद्गुरुर्गौरवमानसूनु-
स्त्र्यौतिप्रदः पंचमगोऽर्थदश्च।
षष्ठे गुणोद्भूतियशोधनाप्ति-
शत्रुव्ययोत्साहवपुर्विधाता ॥२७॥
भोज्याङ्गनाच्छादनगन्धमाल्य-
प्रमोदकृत् सप्तमगोऽरिहन्ता।
गुरुः कफाजीर्णरुजश्रमाध्व-
बन्धारिवित्रासकृदष्टमस्थः ॥२८॥
स्थानार्थविद्यासुतधर्मलाभं
करोति जीवो नवमे सुखं च।
आज्ञां नृपेभ्यो धनमानलाभं
क्रियासमृद्धिं दशमे च कुर्यात् ॥२९॥

Apparatus

26b °वादश्रमवृत्तिमत्र L  26d स्वधर्मद्वारारिगृहार्थ° N, स्वबन्धुमोहार्थमहार्थ° L, बन्धुसौख्यं सुहृल्लाभो गुणोत्कर्षो धनं Kam.  27a °द्गुरो° N  °मानपूर्णं L  27b °प्रदं (पंचम)गो L  27c षष्टो N  गुरुर्ज्ञानसुखार्थसिद्धिं L  27d जायाक्रियाहासविवादकारी L  28a भोज्यागमाश्छादन° L  28b र्तिहन्ता N  28c °भवं च रोगं L  28d धान्यारित्रास° L  29b नवम N  सुवेशं L  29c नृपेत्यों N, पतेश्च L  धनमन्त्र° N  राजसन्मान आज्ञासिद्धिर्धनागमः Kam.

46,30

गोभूमिधान्याम्बरकांचनाना-
 मपत्यविद्यागृहभोजनानाम्।
लाभं गुरुर्भद्रपदे प्रकुर्या-
 दनर्थमार्गव्ययदोऽन्त्यराशौ ॥३०॥
⟨यवनजातके⟩ गुरुचारः॥

Apparatus

30a °कंचनाना° N, °कांचनाप्तिं L 30b सुपात्रविद्यां गृहभोजनं च L 30c लाभे L 30d °न्मानार्थगस्य व्ययमन्त्यगामी L व्ययो ऽर्थात्तिख Kam. col. om. L no space in N

47, 1–4

स्वस्थानसंस्थो भृगुजो ऽर्थविद्या-
f.66v |विनाशदः स्त्रीकलिदो द्वितीये।
तृतीयगो मानधनस्तुतिघ्नः
स्वबन्धुमानव्ययदश्चतुर्थे ॥१॥
बधाधवकृत् पंचमगो धनघ्नो
मेधावपुर्मानक(र)श्च षष्ठे।
जामित्रगः स्त्रीरतिभोग्यकारी
शुक्रो ऽष्टमे वृद्धजनार्दनाकृत् ॥२॥
मृजारतिघ्नो नवमे ऽधवदश्च
मेषूरणे कर्मसुखार्थहन्ता।
एकादशे स्त्रीरजतान्नकर्ता
भृग्वात्मजः प्रीतिवपुष्करो ऽन्त्ये ॥३॥
शुक्रो रविस्थानगतो ऽल्पसौख्य-
सन्तापदो ऽतिव्ययकृद्द्वितीये।
सून्वङ्गनावैरभयं तृतीये
रिपुप्रतोदव्यथनं चतुर्थे ॥४॥

Testimonia

With this chapter compare Jātakatilaka, Aṣṭakavarga 141–167.

Apparatus

1a र्थविघ्नो N, विद्यार्थलम्भन Kam. 1b स्त्रीसुख Kam. °कलिकृद्द्वि° L 1d °मानप्रिय° L 2a दव्याद्भृगुः L धनाप्तिं L 2b °वपुरछाय° L 2d °नार्द्धनाकृत् N, °नाकरश्च L 3a मुदा° L प्रदश्च L 3b धर्म° L 3c एकादशा N °रतिरन्नदाता L, °रजनान्नकेना N 3d °जो N °वपुस्तरो L 4b सन्तानाशं व्यय° L तिव्यति° N, ऽतिव्यय Kam. 4c सूचाङ्गनावैरिभा-यास्तृ° N सताङ्गना° L पुत्रस्त्रीवैरजं भय Kam. 4d रिष्टप्रदो तिव्ययदश्च° L ऽरिव्यसनर्द्धि Kam.

47,5-9

धनव्ययाध्वामयदस्त्रिकोणे
षष्ठे भृगुः प्रीतिसुखार्थहन्ता।
जामित्रगः स्त्रीकलिभङ्गकर्ता
संमोदनारोग्यकृदष्टमस्थः॥५॥
व्रणप्रवृत्तिं नवमे ऽध्वचर्यां
करोति शुक्रो दशमे ऽर्थहानिम्।
एकादशे काञ्चनलोहदाता
शुक्रो मृष्टाभोजनदो ऽन्त्यराशौ॥६॥
शुक्रो ऽर्कजस्थानगतः कलिव-
वैरप्रदस्त्वामयदो द्वितीये।
तृतीयगो गोमहिषार्थलाभं
कुर्याच्चतुर्थे सुहृदर्थसिद्धिम्॥७॥
त्रिकोणगः स्थानधना(र्थ)लाभं
षष्ठे ऽभिमानक्रमरुक्प्रवृत्तिम्।
गुह्यामयं सप्तमगस्तु कुर्या-
च्छुक्रो ऽष्टमे स्थौनयशःसुखाप्तिम्॥८॥
स्त्रीवित्तलाभं नवमर्क्ष(सं)स्थो
मेषूरणे मानसुखप्रवृत्तिम्।
एकादशे स्त्रीशयनार्थलाभं
कुर्याद्भृगुर्द्वादशगो ऽध्वपीडाम्॥९॥

Apparatus

5a °ध्वापदद° L  5b °हान्ता N, °नाश Kam.
6a रिपुप्रवृद्धिं L  ध्वदेहं L  भिन्नारिणाध्वनोः
Kam.  6c °लाभदाता N  6d मृषो° L, मिष्ट° Kam.
7a कलिव्वयो L  7a-b कलहः सुहृद्वैरं Kam.  7b
वैर° L  °स्त्वामयतः N, °स्त्वपशयो L  8b षष्टो
N  बिमानक्रमपादवृद्धिं L  8c गुह्याद्धनं L
°गस्थ L  9b °प्रसिद्धिं L  9c स्त्रीपयनार्थ° N
स्त्रीसुखार्थाप्ति Kam.  9d घ पीडां N, ऽर्थपीडन
Kam.

47, 10–14

भृगुर्गुरुस्थानगतो वपुर्धी-
 व्ययार्(म)हृन्नाशकरो द्वितीये।
[तृतीय]गोऽर्थव्ययवैरकारी
 चतुर्थ(गो)ऽजीर्णकफाभिवृद्धिम् ॥१०॥
सुतस्थितिस्थावरलाभकारी
 स्यात् पंचमे रुग्भयदश्च षष्ठे।
कुर्याद्भृगुः सप्तमगोऽरिकृत्यं
 स्थानाङ्गनारोग्यकृदष्टमस्थः ॥११॥
वागर्थसिद्धिं नवमे ददाति
 मेषूरणे मानधनं महद्भृगुः।
f. 67 एकादशे कोशसमृद्धिकर्ता
 शुक्रः क्रियामोदविनाशदोऽन्त्ये ॥१२॥
शुक्रः कुजस्थानगतोऽपचार-
 स्त्रीनाशकृद्बन्धनकरो द्वितीये।
तृतीयसंस्थो बहुवित्तमान-
 सम्भो(ग)कृद्विक्रमदश्चतुर्थे ॥१३॥
उत्साहशौर्योद्यमकृत्त्रिकोणे
 षष्ठे वपुःकारमुदारतां च।
जामित्रगः स्त्रीसुखपुष्टिहन्ता
 शुक्रः व्ययानिष्टकरोऽष्टमस्थः ॥१४॥

Apparatus

10a वपुश्च L 10b °श्च्यामाहृन्नासकरो N, श्छाया-हृद्रोरन्तकरो L, वैरत्रास Kam. 10c धर्मव्यय Kam. 10d चतुर्थगे L °कल्लैफाभि° N, °कामाति° L 11a स्थानभूतनय Kam. 11c ऽपि विद्यां N, ऽरिमय Kam. 11d स्थानारोग्यान्न Kam. 12a सुखार्थ° L 12c लोक° L 12d °मेषविनाशमन्त्ये L 13a पचारी N 13b °द्वन्द्व° N, °द्वाद° L, बन्धन Kam. 13c–d चित्त-विभ्रम Kam. 13c °वित्तनाशं L 13d प्रमोद° L 14a °संस्थो·र्थे·(दो) भकृ° N 14b पन: स्थानसु° L 14c °तुष्टि° L 14d क्रियानर्थकरो L

47, 15–18

विवादसिद्धिं नवमे सदारं
मेषूरणे सम्भृतवित्तनाशम्।
एकादशे भूकनकात्मजाना-
माप्तिं भृगुर्द्वादशगो विभूतिम्॥१५॥
शुक्रो बुधस्थानगतो हिनस्ति
पुंस्त्वं वपुश्च द्र[वि]णं द्वितीये।
रोगांस्तृतीये विजहात्यरींश्च
मानं चतुर्थे विजयं च जह्रे॥१६॥
सुताम्बरस्थानधनप्रणेता
पृथक्त्रिकोणे जयदश्च षष्ठे।
क्रियौजसां सप्तमगोऽभिहन्ता
मेधाबलाघातकरोऽष्टमस्थः॥१७॥
अभ्युत्थितार्थागममानकारी
स्यात् त्रित्रिकोणे दशमे व्रतघ्नः।
एकादशे भूमिसुतार्थदाता
भृगुः क्रियाविघ्नकृदन्त्यराशौ॥१८॥

Apparatus

15a सदारं N, प्रदश्च L 15c °जाप्तिं L 15d कुर्यात् L 16a निहन्ति L 16b पुंसां L ऽर्थनाश Kam. 16c विजहाति तूर्णं L 16d विभवं L जह्रात् N, बाह्यं L मानार्थहानि Kam. 17a जललाभ Kam. 17b प्रथस्त्रि° L च यशश्च L 17c क्रियौजसं L, कार्यतेजःच्युति Kam. विहर्ता L 17d °बलाज्ज्ञात° L 18a अभ्यत्थिता° L °र्थागम° N, °र्थोपम° L मानार्थाप्ति Kam. 18c °सुवर्णप्रजा L

47, 19–22

हिरण्यनारीरजतान्नविद्या-
सुताम्बरस्थानचतुष्पदानाम्।
लाभं शशिस्थानमुपेत्य शुक्रः
कुर्याद्द्वितीये तु धनाङ्गनाप्तिम्॥१९॥
गोभूमिवस्त्रात्मजमानहर्ष-
स्थानाङ्गनारोग्यकरस्तृतीये।
शुक्रश्चतुर्थे धनपत्निपुत्र-
मित्रेष्टभोज्याम्बरगन्धदः स्यात्॥२०॥
सुहृत्सुतोद्भूतिगुणप्रवृत्ति-
ख्यातिप्रदः पंचमगोऽर्थदश्च।
षष्ठे भृगुर्दैन्यविवादरोग-
द्वेषो(द्)भवान् मानधनांश्च कुर्यात्॥२१॥
जामित्रसंस्थो भृगुजस्तृणाध्व-
स्त्रीहृतकोद्वेगकमित्रदः स्यात्।
स्त्रीसौख्यविख्याप(नि मा)नहर्ष-
प्रियागमाच्छादनदोऽष्टमस्थः॥२२॥

Testimonia

19–24 are quoted by Utpala on Bṛhatsaṃhitā 103,32–38.

Apparatus

19a °रजतान्त° N, °रजतार्थ° U 19b °चतुष्पदानि L 19c शशी° N 19d धनङ्ग° N, वराङ्ग° U 20a स्त्री-भूमि° L, मित्रान्न° U 20c धनपत्य° L 20d °गतिसम्मत् L 21a °त्सुतभूत° L °प्रवृद्धिं L 21b हिरण्यगोभूमिप्रदश्च पंचमे L, कुलोत्साहो गु(कु)ल-ख्यातिर्मित्रसौख्यं Kam. 21c °मद्यविवाद° L 21d °द्विषत्भवे L °धनं च N, °धने च L, °बधांश्च U 22a °स्तृणाध्व° N, °स्तृणेषु L, °स्तृषाध्व° U 22a–b ऋणाध्वस्त्रीभवोद्वेगः कुसुहृत्सङ्गम Kam. 22b °मित्रगश्च L 22c °विद्योत्पणमान° L

47,23–27

सुहृद्गृहस्त्रीधनधर्मविद्या-
यशोगुणाप्तिं नवमर्क्षसंस्थः।
करोति शुक्रो दशमे स्वबन्धु-
सम्प्रीतिचेष्टाफलमानविघ्नम्॥२३॥
एकादशे स्त्रीशयनान्नपान-
f. 67v भूषारतिप्रीतिगृहार्थकारी।
भृग्वात्मजो द्वादशगस्तु भोज्य-
सौख्यप्रदो वस्त्रविनाशकृच्च॥२४॥
गोमित्ररत्नाम्बरकांचनस्त्री-
भक्ष्यान्नशय्यामणिमौक्तिकानाम्।
सम्पत्करो लग्न[मु]पेत्य शुक्रो
द्वितीयगः स्त्रीधनधान्यदः स्यात्॥२५॥
तृतीयगः कांचनमौक्तिकानां
लाभप्रदोऽरिक्षयकृच्च शुक्रः।
चतुर्थगो गोगृहभूषणस्त्री-
समृद्धिबन्धुप्रियमानदश्च॥२६॥
होरात्रिकोणे धनमानपत्नि-
क्रियायशोलम्भनलाभकारी।
षष्ठे तु शुक्रो बहुविग्रहाध्व-
क्लेशश्रमोपद्रवदुःखकारी॥२७॥

Apparatus

23a भृगुस्सुहृत्स्त्री° L 23c स्वैबन्धु° N, सबन्धु° U 23d °विघ्नान् U, °निघ्नः L 24b °रतिकामगृहार्थ° L, °रतिस्वेदगृहार्थ° U 24c भोज्या° L, चन्द्राद् U 24d भोज्यप्रदो U, प्रजाप्रदो L 25a गोभूमि° L गोभूवस्त्रादिलम्भन Kam. 25b °भक्ष्याणि L °मौक्तिकारी L 25c लग्नमुपेत्य N 26b च क्रियकृच्च L 26d °समृद्धि° N 27b °क्रियायदो L °लब्धनलाभ° N, नन्दनमान° L 27c षष्ठे हि L 27d °क्लेशप्रदोप° L

47, 28–30

जामित्रगः पत्निविवादरोग-
    स्त्रीविप्रलम्भोद्भवदुःखकारी।
शुक्रोऽष्टमस्थो विविधान्नपान-
    प्रियागमालङ्करणप्रदः स्यात्॥२८॥
अभ्यर्चनं वा भृगुरीश्वरेभ्यो
    धनानि मानं नवमे ददाति।
मेषूरणस्थो भृगुरल्पवृत्ति-
    प्रधानवैमस्यरुगार्तिकृत् स्यात्॥२९॥
एकादशस्थो मणिरत्नमुक्ता-
    स्त्रीभूषणाच्छादनभोजनानाम्।
दाता भृगुर्द्वादशगस्तु लग्नाद्
    धनव्ययाध्वस्मृतिमोहकर्ता॥३०॥
⟨यवनजातके⟩ शुक्रचारः॥

Apparatus

28a–b om. L    29a om. L    29a वादभृटी° N
29b नवमो N    29d °प्रदत्नवैमन्य° L    °रुगर्त्ति°
N, °हुगति° L    30b °भोजनानि L    30c -द्लग्ना-
द्वान° N    30d °मतिदोषकारी L    °मोहाकर्त्ता
N    col. om. L    no space in N

48,1–4

स्थाने कुजः स्वे विजयार्थकारी
    द्वितीयगो मानसुवर्ण(दाता।
सुवर्ण)नाशापचयं तृतीये
    कुर्याच्चतुर्थे सुहृदर्थसिद्धिम्॥१॥
वैरादरार्थव्ययकृत् त्रिकोणे
    षष्ठे कुजो व्याध्यरिवंचनाकृत्।
जामित्रगो रुक्छ्रमशत्रुहन्ता
    भौमोऽष्टमे मानयशोर्थकारी॥२॥
अधर्मवृत्तिं नवमेऽभ्यसूयां
    कुर्यात्तु भौमो दशमेऽद्विबाधान्।
एकादशस्थः कनकात्मजाप्ति-
    मन्त्येऽङ्गनाहानिमसत्यवृत्तिम्॥३॥
भौमो रविस्थानगतोऽग्निकार्यं
    कुर्याद्भृशं पित्तरुजां करोति।
तृतीयगोऽरिव्ययताम्रहेम-
    प्राप्तिं चतुर्थेऽङ्गरुजां करोति॥४॥

Testimonia

With this chapter compare Jātakatilaka, Aṣṭakavargādhyāya 57–84.

Apparatus

1a स्वे L, स्या(त) N   1b माषसुवर्णरोप्यं L   1c अपवाद् Kam.   2a वैरादनर्थ° N, वैराग्यमर्थ° L वैराग्यार्थव्यय Kam.   2b व्याधिभवि° L   °वंजना° N   °नाय L   2c रुक्श्रमं° L   3a अधर्मसिद्धिं L   वर्गरता Kam.   च कुर्यात् L   3b द्विबाधाम् L   3c कनकर्मजाति° L   3d °वृद्धिं L   4a ग्नकार्यं N, ग्निदाहं L, ऽग्निभय Kam.   4b कुर्याद्भयं L   पित्तभवं L   4c व्वरिताम्र° L   4d प्राप्तिम्र° L

48, 5–8

त्रिकोण(ण)गो मानममत्यलाभं
षष्ठे जयोत्साहमरोग्यतां च।
जामित्रगो रोगमथाध्वरोषान्
f. 68 कुर्वी[त भौमो] ऽष्ट([मि])गो विषार्तिम् ॥५॥
आज्ञासमृद्धिं नवमे ऽरिनाशं
कुर्वीत भौमो दशमे ऽरिपीडाम्।
एकादशे स्थानसुवर्णमान-
प्राप्तिमभिप्रस्खलितार्तिमन्त्ये ॥६॥
स्थाने कुजो ऽर्कैर्युधि च कर्मसिद्धिं
कुर्याद्द्वितीये ऽर्थसमृद्धिपूजाम्।
वैराभिघ्नातव्ययतदस्तृतीये
बह्वागमोत्साहकरश्चतुर्थे ॥७॥
[भौमो वधाद्] भोगसुखार्थ(ह)न्ता
स्यात् पंचमे द्विड्विषदश्च षष्ठे।
जामित्रगो द्विड्भयरुङ्नियन्ता
शत्रुश्रमातङ्ककृदष्टमस्थः ॥८॥

Apparatus
5a मानसमेत° L 5b जयं मानरोगतां च L 5c रोगभयायप्रोर्थः L, ऽध्वान्तिरोग Kam. 5d विषार्तिं L 6a आज्ञानाशो ऽरिभी Kam. 6b मेषूरणे मानधनापहन्ता L ऽरिपीडानिवर्तन Kam. 6d प्राप्तस्सदा प्रस्खलितार्थ° L बुद्धिर्व्यति-र्व्यथा Kam. 7a–b स्थाने ऽर्कजस्योपगतः कुजश्च सत्कर्मसिद्धिं कुरुते द्वितीये L 7a धनसिद्धि Kam. 7b हानि Kam. after 7b L adds: समृद्धपूजां रुचिरां च मध्वां 7c वैरावि° N °घ्नाताव्यय° L वैरमभिघ्नातव्यय Kam. 7d °मो हरलकश्च° L 8a प्रजासौख्यधनव्यय Kam. 8b द्विड्डयरुक्व L, ऽरिभीती Kam. 8c °गश्च भयदो ऽग्निहन्ता L रुक् Kam. 8d शात्रुशमा° L

48, 9–12

पूजार्थदः स्यान्नवमे धराजो
मेषूरणे मान[धि]नापहर्ता।
क्रियाफलेष्टार्थयशोवपुःकृत्
स्याद्दर्थने नेत्ररुगंधवदो ऽन्त्ये ॥९॥
कुजो गुरुस्थानगतो ऽरिशस्त्र-
व्याधिप्रपं[चिव्ययकृद्द्वि]तीये।
स्वबन्धुभेदानयकृत्तृतीये
गुह्यौदरव्याधिकरश्चतुर्थे ॥१०॥
चित्तासुहृद्भेददः पंचमे तु
षष्ठे यशोर्थागममानकारी।
दारापचारामयकृद्धराजो
जामित्रगो मृत्युकृदष्टमस्थः ॥११॥
दैन्यापवृत्तिं नवमे ऽवमानं
मेषूरणे मानयशोधनाप्तिम्।
एकादशे स्थानसुतार्थ[लाभं
कुर्यात्] कुजो ऽन्त्ये व्रदसृग्रुजां च ॥१२॥

Apparatus

9a °न्नवमो N  9b मानार्थोपकृति Kam.  9c °फलेयानयशोबहुश्च L  9d °भीन्नेत्रभयाधव° L  10a-b ऽन्तःस्थो रोगः शत्रुव्रणो ऽरिभिः Kam.  10b स्वचिन्तार्थव्ययौ Kam.  10c °भेदव्यय° L  11a पिता° N, मित्रा° L  चित्तरोगो ऽरिभी Kam.  °कः पंचमे तु N, °करस्त्रिकोणे L  11b यशोधवा° L  11c धरात्मजश्चामयकृच्च नाशं L  भार्या-पमानरुक् Kam.  °कृत् धराजो N  11d रोग Kam.  12a दैन्यप्रवृत्तिं L  हानि Kam.  12b मेषेरणे L  मानार्थो ऽपकृति Kam.  12c लाभ-स्थानसुतार्थाप्ति Kam.  12d न्त्ये च दृशोरुजं च L  मानार्थकीर्तयः Kam.

48, 13–16

कुजो भृगुस्थानगतः कफासृग्-
    व्याधिं करोत्यग्निभयं द्वितीये।
स्त्रीमन्त्रिभेदं भ्रमणं तृतीये
    शस्त्राग्न्यसूयाभयदश्चतुर्थे ॥१३॥
स्वबन्धुवैष(म्यो)विवादकारी
    स्यात् पंचमे वृद्धिकरश्च षष्ठे।
स्त्रीसंचयं सप्तमगो धराजो
    दद्यात् सवर्णं सप्तमष्टमस्थः ॥१४॥
[अ]सृग्विका[रं] नवमे शरीरे
    कुर्यादनर्थं दशमे व्यथां च।
सुवर्णमेकादशगः सुतं च
    दद्यात् कुजो द्वादशगस्तु वस्त्रम् ॥१५॥
बुधस्य भौमो व्यसनारिवृद्धिं
    स्थाने करोत्याकुलतां द्वितीये।
प्रहर्षमोदोपचयं तृतीये
    स्वबैरिसन्त्रासकरश्चतुर्थे ॥१६॥

Apparatus

13b व्याधिभयं मग्नि° L, व्याधिं सृहृत्यग्नि° N 13c मित्रस्त्रीभेदः कलहः Kam. भ्रमणं L, डकारं N 13d शस्त्या° N °धिव्याधिभय° L व्रणस्तुर्ये ऽग्निभीर्बन्धुः Kam. 14a °करी N 14c स्त्रीसङ्गमं L नार्याः चय Kam. धराज्ञो N, र्थलाभं L 14d धन Kam. 15a शरीरे N, भृगुश्च L 15b दसमो N व्ययं L 15c सुतं य N, सुभेदं L 15d दद्याच्च भौमो व्ययगो भयं च L 16a °नाधिवृद्धिं L °वृद्धं N 16b कुल-व्याकुलता L 16c °मर्थोम° L 16d स्वबैरि-सन्त्रास Kam., स्वबैरशस्त्राङ्क° N, स्ववीर्यसन्ताप° L

48,17–19

स्फीतं धनं पंचमगः सु[तं च]
f.68v (रो)व्याध्ययशोमानवसूनि षष्ठे।
स्त्रीव्याधिमार्गश्रमदोषदाता
स्यात् सप्तमे बन्धकरो ऽष्टमे तु ॥१७॥
इष्टावसादं नवमे ऽवमान-
मालस्यमीर्ष्यां दशमे ऽर्थहानिम्।
एकादशे भूमिहिरण्यलाभं
कुर्यात् कुजो द्वादशगो ऽध्वमोषाम् ॥१८॥
नृपानलव्याडविषाग्निशस्त्र-
व्याध्यर्दनार्थव्ययशोककार[ी]।
भौमः शशिस्थानगतो द्वितीये
त्वनर्थसूयामयवंचनाकृत् ॥१९॥

Testimonia

19–24 are quoted by Utpala on Bṛhatsaṃhitā 103,11–18.

Apparatus

17a सुतार्थप्राप्ति Kam. 17b बुद्ध्यादिसत्त्वं विवृद्धिं च धत्ते L 17c मोहो ऽध्वास्त्रीगद Kam. °मध्वश्रममेव दद्यात् L °दोषदः स्यात् N 17d बन्धुकलत्रमित्र L 18a इष्टावमानं L ऽवत्रावसाने स्खलसम्भव Kam. 18b °लस्यपीडा L 18d ध्वमोषां N, विरामं L 19a भूपालधान्य° L °व्याल° U 19b °व्याधिधनार्थव्ययभङ्गकारी L, °व्याध्यर्थनाशी व्ययभङ्गकारी U 19c भौमश्च मित्रानुगतो L 19d त्वनर्थसूयामिषवंचनाकृत् U, जनर्थसूचामयवंचनाकृत् N, तत्र व्यनर्थामयवैरिनाशं L ऽनर्थमीर्ष्या स्वगारवाश्च बन्धनं Kam.

48, 20–23

ऐश्वर्यमानद्युतिहर्षकारी
तृतीयसंस्थो ऽन्नसुवर्णदश्च ।
चतुर्थगस्तूदररुग्ज्वरासृक्-
प्रवृत्तिनिर्वेदकरो धराजः ॥२०॥
सुतार्थनाशक्षतवैरमोष-
व्याधिप्रदः पंचमराशिसंस्थः ।
षष्ठे कुजो ऽरिक्षयमानहर्ष-
प्र[ख्याप]नारोग्यसमृद्धिकारी ॥२१॥
जामित्रसंस्थो धनवित्तनाश-
क्लेशोदराक्ष्यामयदैन्यकृत् स्यात् ।
भौमो ऽष्टमे रुग्विष(यन्त्र)शस्त्र-
क्षतक्षयोपद्रवदैन्यकारी ॥२२॥
शास्त्रक्षतक्षेपसुवर्णनाश-
सूयाध्वकारी नवमे महीजः ।
मेषूरणे व्याध्यरिशस्त्रचौर-
व्रणार्तिकृत् सिद्धिकरश्च पश्चात् ॥२३॥

Apparatus
20a °मानादधिहर्ष° L 20b °संस्थश्च सु° L 20c चतुर्थगो दुःखविवृद्धिकारी L °रुग्जरा° U 20c–d ज्वरो ज्वररुक् निर्वेदो ऽस्त्रप्रवर्तनं Kam. 20d om. L 21a °नाशं क्षयवैरपौष्ण्यं L °वैरि° N 21a–b वैर-सुतोद्वेग ऽर्थहानिश्चौरभीर्व्रणः Kam. 21b पंचमसंस्थितश्च L 21c कुजे U हर्षमरोगकारी L °मानपक्ष° N 21d om. L 22a धनसार्थनाशं L धनमित्र° U 22b क्लेशे च भर्दैमयदो ध्यदश्च L °दराक्षामय° N रोगकृत् U 22a–b ऽर्थहानिः स्त्रीपीडाहृषीकाप्यदरामयाः Kam. 22c पि विषशत्रुकृच्च L 22d हृद्धोगतिं च क्षय° L 23a °क्षतापश्च L, °क्षताक्षेम° U °नाश° NU, °नाशं L 23b सूम्याध्व° N, °सेदाध्व° U, प्रयाण° L नवमो NU 23a–b आक्षेपो ऽस्त्रव्रणो हानिः Kam. 23c व्याधिशास्त्र° L °वैर° N 23d °गणार्तिसिद्धिं धनदश्च L प्रणार्ति° N

48, 24–27

मानात्[मजा]च्चाविततिताम्रहेम-
    द्युतिप्रदो भद्रपदे ऽरिजिच्च।
स्त्रीविग्रहोद्वेजनपादरोग-
    स्वप्नावभङ्गश्रमदः कुजो ऽन्त्ये ॥२४॥
रिपु(क्षया)च्चात्मजभूहिरण्य-
    द्युतिप्रहर्षोत्सवकृद्धराजः।
होरागतः स्थानधनद्युतिघ्नो
    द्वितीयगो वैरविवृद्धिकृच्च ॥२५॥
ओजोयशःस्थानगुण[प्र]ताप-
    कल्याणदो भू[मि]सुतस्तृतीये।
शस्त्रव्रणाग्निज्वतमोषभङ्ग-
    विनाशकृद् भूमिसुतश्चतुर्थे ॥२६॥
लग्नात् कुजः पंचमगो ऽर्थनाश-
    स्त्रीपुत्रपीडाभयदैन्यकारी।
षष्ठे तु शत्रुक्षयवित्तलाभ-
    प्रमोदसन्तृप्तिकरो धराजः ॥२७॥

Apparatus
24a °च्चाहः(हः erased) N, °टि° L   24b रुद्रपदे U
°पदो N, °प्रदो L   रिटच्च L   24c °ग्रहात्मकलाप-
कारं L   24d प्राप्ताङ्गभङ्गमथ मृत्युमन्त्ये L
°स्वप्नोप° N   °श्रमजः N   25a रिपुक्षयाद्भूमि-
हिरण्ययोषितो L   पंक्षारिपु(क्षया)° N   25b om. L
25c °धनस्य निघ्नः L   25d रोगनि° L   26a तेजयशः
L   26a–b वैरिशान्ति Kam.   26c–d °ग्निकृशरोग-
पापैर्विनाश° L   स्थानशक्तिक्षयौ Kam.   27a
पंचमो ऽर्थनाशं L   27b °पीडामप° L   27c–d षष्ठे
कुजश्चाभयमानहर्षमारोग्यकारी धनधान्य-
वृद्धिः L   27c षष्ठस्तु N

48,28-30

गुह्याक्षिरुक्पित्तनिवृद्धमोष-
    स्त्रीनाशकृत् सप्तम[गो धराजः ।
f. 69 पि]त्तज्वरासृग्भ्रमभीरशस्त्र-
    क्षतक्षयोपद्रवदो ऽष्टमस्थः ॥२८॥
अनर्थशत्रूद्भवरुक्स्त्रवृत्ति-
    श्छायावपुघ्नो नवमर्क्षसंस्थः ।
लग्नाद्धराजो दशमाश्रितस्त्व-
    न्नद्वेषमोषक्षतभङ्गकारी ॥२९॥
सुवर्णताम्राण्यतिदीप्तिमन्ति
    द्रव्याण्यपत्यं च ददाति भौमः ।
एकादशे द्वादशगस्तु लग्नात्
    पादाक्षिरोगाक्षतमोषकारी ॥३०॥
⟨यवनजातके⟩ भौमचारः ॥

Apparatus
28a °मोहं L after 28a L adds: मशुभं च सर्वं
28c °ज्वराग्निप्रथमौघ्न° L 28c-d पित्तज्वरो वैरं
शस्त्रभीरक्तवैकृतं Kam. 29a °द्रवदः कुवृद्धिः L
29b श्छाया° L, °च्छाया° N 29c दशमामृतस्त N,
दशमे ग्निशस्त्रा° L 29d °हृद्वेगदोपकृतभङ्ग° L
बैरिनिवर्तन Kam. 30a सुवर्णताम्रपात्रादिलाभ
Kam. °दीप्तिमत्या° L 30b °दध्यायमाप्त्यं ददाति
L 30c °दशो N 30c-d लग्नाद्ददाति रोगान्क्ष-
तिरोगकारी L col. om. L no space in N

49, 1–4

स्वस्थानगश्चान्द्रिरपत्यविद्या-
विज्ञानदो वाक्स्मृतिहा द्वितीये।
तृतीयगो वैररुगार्तिहन्ता
वाग्बुद्धिवैरस्यकरश्चतुर्थे ॥१॥
कुर्या(द्) गुणख्यातिसुतार्थसिद्धिं
पृथक्त्रिकोणे विजयं च षष्ठे।
बुधो ऽवमानश्रमरोगकारी
स्यात् सप्तमे व्याध्यरिदो ऽष्टमस्थः ॥२॥
गुणार्थसिद्धिं नवमे ददाति
मेषूरणे मा(न)वसूनि सौम्यः।
एकादशे भूकनकाम्बराणां
लाभं सुहृन्माननमर्थमन्त्ये ॥३॥
बुधो रविस्थानमुपेत्य हन्या(त्)
पुंस्त्वं प्रसूतिं च वसु द्वितीये।
द्विडुद्भवं मित्रभ(यं) तृतीये
कुर्याच्चतुर्थे स्वकुटुम्बभेदम् ॥४॥

Testimonia

With this chapter compare Jātakatilaka, Aṣṭakavarga 85–112.

Apparatus

1b क कस्मृति° N, वाङ्मति° L 1c वैरिरुगाभिन° L वैराग्यरुक् श्रमावहा Kam. 2a लग्ना(त्) N °सुखार्थलाभं L 2b विषयं L वैरिरुजां नाथ Kam. 2c वमानाश्रय° N, पि मानाश्रम° L श्रमावहारुजः Kam. 2d व्याधारि° N 3b °सून् N, °सूरि L ऽर्थ-मानता Kam. 3c–d °दशस्थे कनकाम्बराभिर्लाभं L 3d °मर्तमन्त्ये L 4a हन्या N, चारु L 4b पुत्रं सपूर्णं च वपुर्द्वितीये L 4c द्विड्ड्दुवं मत्रम(यं) N, द्विषद्भयं मित्रवधं L शत्रूद्भवौ मित्रव्यय Kam. 4d °श्चतुर्थः N स्वकुटुम्बदेशान् L

49, 5–9

स्थानश्रुतिख्यातिकृदिन्दुसूनुः
स्यात् पंचमे धीधनदश्च षष्ठे ।
अक्षोभवैराग्यकरस्तु सौम्यः
स्यात् सप्तमे रुक्कलिदो ऽष्टमस्थः ॥५॥
बुधो ऽर्थविद्याधृतिधर्मकारी
स्यात् त्रित्रिकोणे दशमे शुभघ्नः ।
एकादशे भूमिचतुष्पदाप्तिं
दद्याद्बुधो ज्ञानसुखानि चान्त्ये ॥६॥
स्थाने बुधो ऽर्केरु(प)कारहर्ष-
द्युतिप्रदो भूधनदो द्वितीये ।
भङ्गाधवरुक्कोपकरस्तृतीये
जय[प्र]हर्षार्थकरश्चतुर्थे ॥७॥
वित्तात्मजोत्सादनकृत् त्रिकोणे
वाताश्मघातज्वरकृच्च षष्ठे ।
निर्वैशसौभाग्यकरश्च सौम्यो
जामित्रगो लाभकृदष्टमस्थः ॥८॥
स्यात् त्रित्रिकोणे धनमानदाता
मेषूरणे स्थानधनार्थकृच्च ।
एकादशे भूधनकांचनाप्तिं
f.69v कुर्याद्बुधो द्वादशगस्तु रोगम् ॥९॥

Apparatus

5a स्थाने L प्रज्ञार्थाप्ति Kam. 5b च धन° L 5c अकामवैराधव° L वैराग्येपाधवसंज्ञया: Kam. 6a °धृतिकर्मसिद्धिं L 6b स्याद्वै त्रिकोणे L 6c °दसो N 6d °सुखादिमन्त्ये L 7a स्थाने केज-स्याप्युप° L 7b र्थधन° L 7c °धवविक्षोभ° L 7d जय कर्षार्थ° N हर्षविजया Kam. 8a मित्रात्म° L 8b धाताश्मसुखात° L 8c निर्वेषदौर्भाग्य° L 9a मानधनार्थकृच्च L 9c °दसो N 9d दद्याद्बु° L रोगान् L, भोगं N रुजः Kam.

49,10–14

बुधो गुरुस्थानगतो ऽर्थविद्या-
भङ्गप्रदो ऽद्विड्सुहृद्द्वितीये ।
तृतीयगः सौख्यबलाधिहन्ता
बुधश्चतुर्थे कलिमोहदः स्यात् ॥१०॥
स्यात् पंचमस्थे धनमानहानिः
षष्ठे जयारोग्यधनप्रसूतिः ।
जामित्रसंस्थे तु बुधे व्ययार्तिः
प्राप्तिर्धनानां प्रथिताष्टमस्थे ॥११॥
ऋणार्दमोहान्नवमर्क्षसंस्थे
मेषूरणे ऽसृक्श्रमवित्तनाशम् ।
स्यादिष्टसम्पच्च शशाङ्कसूना-
वेकादशस्थे भयदो ऽन्त्यगस्तु ॥१२॥
बुधो भृगुस्थानगतः सुतस्त्री-
यानान्सदारं च धनं द्वितीये ।
ददाति मानं विभवं तृतीये
विचित्रमित्रोपचयं चतुर्थे ॥१३॥
गोभूम्यपत्यानि च पंचमस्थः
(कुर्वीत षष्ठे स्वजनार्थहानिम् ।
जामित्रगः स्त्रीसुतवित्तनाशं)
बुधो ऽष्टमस्थो धनमानसिद्धिम् ॥१४॥

Apparatus

before 10a N adds: प T 10a कविद्या° N, सुतस्त्री° L विद्यार्थसंचय Kam. 10b मित्रसुहृ° L इष्टमित्राभि-हानि Kam. 10c °गो N °धनादिहर्ता L 10d कलि-दोषकृत् L 11a हानिं N 11b °प्रसूतिं N 11c बुधो N 11c–d °र्तिरासि° L 12a धनाधवगोहा न° L मार्ग-मोहो ऽङ्गपीडन Kam. °संस्थो N 12b स्याच्छ्रम्भवि° L ऽर्थस्रुतिव्ययौ Kam. 12c–d °सूनुरेका° L 12d °स्थो LN न्त्यगते च दैन्यं L ऽर्थता Kam. 13a–b स्त्रीधनाप्ति: सुतोत्सुक Kam. 13c कितवं N, विजय Kam. 13d °वित्तोप° L 14a °स्थे L 14b चेष्टास्वजने N विविधार्थहानिं L

49, 15–18

मित्रार्थलाभं नवमे प्रकुर्याद्
    बुधो ऽर्थहानिं दशमे श्रमं च ।
योषिद्धिरण्याम्बरभोजनाप्ति-
    मेकादशे ऽन्त्ये तु करोति सिद्धिम् ॥१५॥
धनान्यनिष्टार्थफलानि सौम्यो
    दद्यात् कुजस्थानगतो ऽपरे च ।
पराभवानोगैमकृत्तृतीये
    सुहृद्यशोमानकरश्चतुर्थे ॥१६॥
व्ययाधिवदैन्यानि च पंचमस्थो
    ददाति षष्ठे ऽरिरुजाप्रवृद्धिम् ।
जामित्रगः स्त्रीवसनान्नलाभं
    बुधः करोत्यष्टमगो ऽधिपूजाम् ॥१७॥
मानार्थसिद्धिं नवमर्क्षसंस्थः
    प्रहर्षमाज्ञां दशमे यशश्च ।
कुर्याद्बुधो भद्रपदे ऽर्थसिद्धिं
    समीप्सितां पापप्रवृत्तिमन्त्ये ॥१८॥

Apparatus

in place of 15d L has: °मन्त्ये स्थितश्चैव करोति सिद्धिं    15d सिद्धिसंचय Kam.    16a धनान्यनि ईष्टार्थ° N    °न्यनिष्टानि L    ऽभीष्टफलप्राप्ति Kam.    16b परेश्च N, परं च L    16c ऽन्यापवाद्भी Kam.    17a मार्गदैन्य Kam.    °स्थे L    17b विरुजां L    17c स्त्रीकमना° N    स्त्रीवस्त्राप्ति Kam.    17d °पूज्यां L    18b °मानं L    च सिद्धिं L    18c प्राप्तौ बुधो भद्रपदार्थ° L    18d पापविवृद्धि° L    पाप Kam.

49, 19–22

स्थाने शशाङ्कस्य शशाङ्कसूनुः
　सौहार्दविद्यामतिमानहर्ता ।
द्वितीयसंस्थस्त्वपवादशोक-
　वैरक्रियालोपनदैन्यकारी ॥१९॥
तृतीयगो बन्धुविरोधरोग-
　व्यापत्तिकर्ता द्रविणस्य सौम्यः ।
चतुर्थगो मानगुणप्रशंसा-
　प्रामोद्ययोषिद्धनलाभकारी ॥२०॥
पैशुन्यमुद्वेगमन[र्थि]चर्यां
　कुर्याद्बुधः पंचमगो ऽर्दनां च ।
षष्ठे विवृद्धिं मनसः प्रहर्ष-
　मुत्साहलाभोपचयं करोति ॥२१॥
जामित्रगश्चान्द्रिरनिष्टमार्ग-
f. 70 　|सन्तापदैन्यार्थविरोधकारी ।
स्यादष्टमस्थो विबुधोपकार-
　बुद्धिप्रसादस्थितिसौख्यकर्ता ॥२२॥

Testimonia

19–24 are quoted by Utpala on Bṛhatsaṃhitā 103, 19–24.

Apparatus

19a °सूनौ L 19b सौभाग्य° U, महास्त्र° L °विद्याधनमानहानिः L 19c–d °संस्थे कले क्रियाणां क्रियापलापाद्य दैन्य° L 19d °स्वैरक्रियामन्वति° U 20a °विरोधरोध° LNU स्वबन्धुवैर Kam. 20b °वसन्तिकान्ता द्रविणादि सत्वः L 20d °प्रमोद° U °योषिद्धनरोग° L 21a पैशून्य° N, नैस्थन्य° L, नैष्ठान्य° U °वच्छं गमनार्थसिद्धिं L 21b °गस्तथैव L ऽरतं च U 21c रिवृद्धिं LN संकलप्रहर्ष° L 21d °भूलाभालाभापचयान् L 22b °दैन्यादधिभङ्ग° L, °दैन्याद्विरोध° U 22c विबिधोपकारी LU 22d om. L

49,23–26

अङ्गापवादाध्वपरिश्रमार्ति-
सन्तापकारी नवमर्क्षसंस्थः ।
क्रियाप्रसिद्धिं दशमेऽर्थलाभं
वि[स्रब्ध]मानं च बुधो ददाति ॥२३॥
एकादशे मानचतुष्पदस्त्री-
मित्रार्थसौभाग्यविनोदकर्ता ।
बुधोऽन्त्यराशौ विचरन् प्रकुर्या-
दुद्वेजनं कार्यपरिश्रमं च ॥२४॥
प्रभुत्ववित्तप्रियनारिमित्रा-
विद्यावपुःख्यातिचतुष्पदानि ।
ददाति लग्नोपगतो बुधस्तु
वाग्बुद्धिवित्तप्रियदो द्वितीये ॥२५॥
स्वबन्धुवैषम्यकलत्रभेद-
च्छायावधप्राप्तिकरस्तृतीये ।
बुधश्चतुर्थे सुहृदर्थमान-
विद्यायशोबन्धुगुणप्रदः स्यात् ॥२६॥

Apparatus

23a अरोमप्रवादाध्वपरिश्रमार्त्तिं L °श्रमान्त° U 23b °रायापकारी U नवमे ददाति L 23c क्रिया- समृद्धिं L च लाभं L 23d वित्ताम्बरार्त्तिं L °मानाश्च N करोति L 24b °चित्तार्थ° U °विरोध° L, °विलोह° N 24c विचरंश्च कुर्या° U, विददाति लाभं L 24d °दुद्वेजनं कार्यपरिश्रमं om. L °परिश्रमं N 25a–b om. L 25c लग्नात्प्रथमे बुधस्य L 25d स्याद्बुद्धिवित्तमितिदो L 26a °वैरम्य° L 26b °श्छायावदं प्रीतिकर° L कान्ति- हानि Kam. 26c °मानो L 26d बहुस्स्वबन्धु- गुणद प्रसादात् L °गुणः पदः N

49,27-30

छायाविवृद्धिं सुतवित्तलाभं
पूजां मतिं पंचमगो ददाति ।
षष्ठे तु सौम्यो वपुरर्थहर्ता
विमाननादैन्यकलिप्रदश्च ॥२७॥
आरोग्यताप्रीतिमनिष्टहानिं
दद्याद्बुधः सप्तमगः सुखं च ।
दृग्वैमनस्याधिविवादकारी
स्यादष्टमे सौहृदबुद्धिहृच्च ॥२८॥
समर्चनारोग्यबलप्रवृत्ति-
धर्मार्थसिद्धिं नवमर्क्षसंस्थः ।
दद्याद्बुधो वाक्यकलारतिस्त्री-
मानार्थलाभं दशमे स्तुतिं च ॥२९॥
नारीसुहृद्भृतिसुतार्थलाभं
विख्यापिनां विद्वदभिष्टवं च ।
दद्याद्बुधो भद्रपदाख्यसंस्थो
होरान्त्यसंस्थः कलिदुर्यशस्कृत् ॥३०॥
〈यवनजातके〉 बुधाचारः ॥

Apparatus

27a देहार्थहानि Kam. सुतभूमि° L 27c कान्त्यर्थ-धीसुताः Kam. 27d °धौन्यकलि° N, °दैवकर° L 28c om. L 28d °ष्टमो N सुहृद° L 29a समाधा-नारोग्यबलप्रसिद्धिं L 29b नवमे ददाति L 29c वार्थकला° L 29d °नानार्थ° L जयं च L 30a नानासुहृद्भृत्य° L 30b विद्यापटं शाद्रविवेदनं च L °भिष्टनं N 30c-d भद्रपदास्यसंस्थो होरा° om. L 30d °न्त्यगस्वे N, °न्ये L बलहानि-कारी L °र्यशस्कः N col. om. L no space in N

50,1–4

स्वस्थानगो भोजनगन्धमाल्य-
नारीसु[हृद्]स्त्ररतिप्रदः स्यात्।
चन्द्रो द्वितीयर्क्षगतस्तु तस्माद्
बहुव्ययायासविषादकारी ॥१॥
तृतीयगौ वस्त्रहिरण्ययोषित्-
सु(हृ)द्यशोभोजनदो हिमांशुः।
स्वबन्धुपीडाधननाशजानि
कुर्वीत दुःखानि चतुर्थसंस्थः ॥२॥
धनक्षयाजीर्णरुगुद्भवदैन्य-
विक्षोभकृत् पंचमगः शशाङ्कः।
f.70v शत्रुक्ष[यारोग्य]सुतार्थसिद्धि-
स्निग्धागमप्रीतिकरश्च षष्ठे ॥३॥
जामित्रगः स्त्रीधनबन्धुशय्या-
हिरण्यभोज्याम्बरदः शशाङ्कः।
क्षुद्व्याधिचिन्ताकलहार्थनाश-
मृत्युक्षयोपद्रवदो ऽष्टमस्थः ॥४॥

Testimonia

With this chapter compare Jātakatilaka, Aṣṭakavarga 29–56. 1–6 are quoted by Utpala on Bṛhatsaṃhitā 103, 8–10

Apparatus

1d °विवाद° LU 2a गावस्तृतीयर्क्षे हिरण्य° L 2c °नाशनानि L 3b °विरोधकृत् L 3c °सुखार्थ° LU 3d °स्सिद्ध्यागम° L षष्ठः U 4a स्त्रीजन° U °बन्धुसम्पा° L 4b °द्धिरण्यभूम्यम्बर° L 4c °नाशो U

50,5–8

धनव्ययार्तिव्ययमानभङ्गा-
रोधाधिका(रो) नवमे शशाङ्कः।
मेषूरणस्थो बहुमानहर्ष-
चेष्टाफलौदार्यविशेषकारी ॥५॥
[एका]दशे स्निग्धविवाहशय्या-
स्त्रीभोजनप्रीतिसुखार्थकारी।
निशाकरो द्वादशगस्तु दैन्य-
मालस्यमानापचयं च कुर्यात् ॥६॥
सूर्यस्य चन्द्रस्तनुकृच्छ्रकारी
स्थानोपगो ऽध्वामयदो द्वितीये।
सुदाज्ञयारोग्यकरस्तृतीये
ऽस्त्रमन्त्रभेदज्वरदश्चतुर्थे ॥७॥
पृथक्त्रिकोणे कलिमापवृद्धिं
कुर्यात् प्रमोदं विजयं च षष्ठे।
जामित्रगो ऽस्थां जननीकुले स्वे
ददाति चन्द्रो ऽष्टमगो ऽर्थसिद्धिम् ॥८॥

Apparatus

5a °व्ययादि° L, °व्ययारि° U °मार्ग° N, °दार° L °भङ्गो L, °भङ्ग° U 5b °रोगादि° LU 5a–b मान-भङ्ग:...धनहानिरतिव्यय: Kam. 5b °कारी L नवम: U नवमर्क्षसंस्थ: L 5c शशी रणस्थो L 5d °चेष्टाबलौ° L °विरोधकारी U 6b °प्रासि° U 6d °स्यसौहाप° L, °स्यमीर्ष्याप° U 7a सूर्यात्तु L 7d स्त्रीमित्र° L ज्वर: स्त्रीबन्धुविधि: Kam. 8a कलिवैर° L 8c ऽस्थां om. L °कुलाद्य L

50,9–12

वैमुख्यकर्ता नवमे गुरूणा-
मोजोयशोर्थान् दशमे ददाति।
चन्द्रो विशिष्टाम्बरहेमलोहा-
नेकादशे ऽन्त्ये तु रुजां ददाति ॥९॥
(f.71) चन्द्रो ऽर्कजस्थानगतः क्षुदश्म-
प्रहारमर्थापचयं द्वितीये।
कुर्यात्तृतीये च यशोधनाप्तिं
वातज्वरानर्थमथो चतुर्थे ॥१०॥
धनानि पुष्पाणि च पंचमस्थः
षष्ठे ऽरिनाशं बलसंचयं च।
कुर्वीत चन्द्रो मतिदेहपीडां
जामित्रसंस्थो ऽष्टमगो ऽर्थहानिम् ॥११॥
वातोदराजीर्णमकार्यसिद्धिं
स त्रित्रिकोणे दशमे ऽप्रदः स्यात्।
f.71v एकादशे भृत्यचतुष्पदार्तिं
कुर्याच्छयी दुर्जनवैरमन्त्ये ॥१२॥

Apparatus

9a गुणूनां L 9b तेजो° L 9c–d °लाधनमेका° L 9d न्त्यात्तु N, न्ते च L रुजं करोति L order in N: 50,9; 50,31c–d; 50,14–16(N′); 50,23c–30; 50,33; 51,1–5; 50,31a–b; 50,32; and 50,10–24 10a °गतो LN क्षुतः सं° N, श्मधात° L 10b °मर्थापहारी भवति द्वितीये L 10a–b क्षुत्तुद्धाश्मप्रहार . . . धनहानि Kam. 10c वयसो ध° N 11a धनानि धान्यानि L 11b षष्ठो N धनसंचयं L धनं बलं च Kam. 11c ननु देह° L 11d ष्टमो र्थनाशं L 12a पित्तज्वराजीर्ण° L 12b कुर्यात्त्रिकोणे L प्रदः N, जयं L श्रमाः Kam. 12c °दाप्तिं L 12d दुःस्वविरोगदो न्त्ये L

50, 13-17

स्थाने गुरोर्ज्ञानधनत्रसिद्धिं
    कुर्याच्छशी मानधनं द्वितीये।
जायासुहृद्भेदकरस्तृतीये
    स्त्रीभोगसम्पद्धनदश्चतुर्थे ॥१३॥
स्थितिच्युतिद्विड्भयदः शशाङ्कः
    स्यात् पंचमे रोगविसृक् च षष्ठे।
दाराम्बरौजांसि च सप्तमस्थो
    दद्याद्धनान्यष्टमगो बलं च ॥१४॥
स्वबन्धुभिद्द्रोहकुकीर्तिकृत्तु
    स्यात् त्रित्रिकोणे दशमेऽरिजेता।
एकादशे भोजनवाहनाप्तिं
    कुर्याच्छिरोरोगविवृद्धिमन्त्ये ॥१५॥
नारीकुलव्याकुलताकृदिन्दुः
    स्थाने भृगोर्भूषणकृद्द्वितीये।
पदे तृतीये जयवस्त्रगोद-
    श्चतुर्थगः पथ्यधनान्नदाता ॥१६॥
मानागमख्यातिकरस्त्रिकोणे
    षष्ठे शशी रोगविरोधकृत् स्यात्।
⟨⟨स्यात् स⟩प्तमे दैन्य⟨विवृद्धि⟩कृच्च
    स्यादष्टमे रोगभयप्रदाता ॥१७॥

Apparatus

13a °मीन° L मानसिद्धिर्धनं Kam. 13b ज्ञानधनं L 13d °भोगविद्याधन° L 14a च्युतिस्थिति° L 14b रोगकरश्च L 14d बलं च N, निशीश: L 15a °निद्रोह° N बन्धुद्रोहापकीर्ति Kam. 15b स्याद्धा त्रिकोणे L 15d °च्छशी L °विवृष्टि° L 16c पाठे N, भवेत् L भजशस्त्रगो° N गोवस्त्राप्तिजय Kam. 17a °व्याधि° N स्याति Kam. 17b °विवृद्धिकृत् L 17c स्त्रीवस्त्रदस्सप्तमग: शशाङ्क: L; cf. 14c स्त्रीवस्त्रार्थाप्ति Kam. 17d °भयं शशाङ्के L

50, 18–21

पूजां शशाङ्को नवमे जयं च
    कुर्यात् समृद्धिं दशमे धनानाम्)।
एकादशे लब्धरताम्बरस्त्री-
    लाभप्रदो हर्षकरः स्थितो ऽन्त्ये ॥१८॥
शशी कुजस्थानगतो ऽध्वरोग-
    भेदारिदः स्वाप्तिकरो द्वितीये।
ऐश्वर्यसंमोदकरस्तृतीये
    ऽसूयामयोद्वेजनकृच्चतुर्थे ॥१९॥
आज्ञानतोत्पत्तिमदाररतां च
    कुर्यात् त्रिकोणे ऽरिवधं च षष्ठे।
जामित्रगो ऽसृग्व्रणदोषकर्ता
    चन्द्रो ऽधनबन्धामयदो ऽष्टमस्थः ॥२०॥
दीप्तिं समृद्धिं नवमे ददाति
    व्यापाकृदाज्ञां दशमे नपश्च।
एकादशे कीर्तिमहार्थला(भं)
    कुर्याच्छशी वित्तविघातमन्त्ये ॥२१॥

Apparatus

18 in L: स्वबन्धुभित्रस्सावमथ प्रमोदः
        कर्मस्थिते वैरिभयप्रवासः।
    एकादशे भोजनवाहनाप्तिं
        कुर्याच्छशी सौख्यविनाशमन्त्ये॥

cf. 15   18c लब्धरणा° N   स्त्रीवस्त्रभूषाप्ति Kam.   19a ध्वरोगान् L   19b स्वधर्मकीर्ति सुस्पदं L   स्माप्ति° N   शक्ति Kam.   19c °संहर्ष° L   19d सूच्यामयो° N, द्वेषासूलव्ययो L   अंसूयन Kam.   20a °सुतोत्पत्तिनिरोगतां L   आज्ञासिद्धिः कुलोत्साह आरोग्यं Kam.   20b जयदश्च L   20d ष्टमे देहशरीरपीडां L   21a नवमो N गुणूनां L   21b नपुष्पकर्द्धं दशमे ददाति L   21c °सुदर्थ° L

50, 22–25

स्थाने बुधस्येन्दुर(प)त्यविद्या-
मोदादिकृत् प्रार्थितदो द्वितीये।
वपुर्गुणख्यातिकरस्तृतीये
संमिश्रवागर्दनकृच्चतुर्थे ॥२२॥
निन्दामनिष्टाश्रवणं त्रिकोणे
कुर्यादनार्याभिभवं च षष्ठे।
(चन्द्रो मतिप्रीतिवितानकृत् स्या-
ज्जामित्रगो ऽर्थस्थितिदो ऽष्टमस्थः ॥२३॥
स्वभाववशाद्धिं नवमे तु कुर्यान्
मेषूरणे वाञ्छितकर्मसिद्धिम्।
एकादशे ऽर्थान् सुहृदात्मजेभ्यो
दद्याच्छशी दैन्यविवृद्धिमन्त्ये) ॥२४॥
(f. 70v) छर्दिज्वराजीर्णकलिश्रमाध्व-
द्विड्भृत्यदो लग्नगतः शशी स्यात्।
धनव्ययाद्व्यामयमार्गमोष-
व्ययार्थिक्रोधकरो द्वितीये ॥२५॥

Apparatus

22b °मोहादि° N, °मानार्थ° L °कृद्गृहप्रदो L
22a–b विद्यामानकुलोत्सवाः . . . धनानि Kam.
22d सन्मिश्र° N, समृद्ध° L 23b °दुर्नेभ्यो तिभयं L 23c–24d also on f. 70v (N′) after 31c–d 23c °विदानकृत् N, °विवादतः N′ °कृच्च L
23d हर्षव्ययो द्वेषकरो L 24a सुवर्णलाभं नवमे च सिद्धिं L तु N, त्य N′ 24c °दशो N, °दसो N′ प्रीतिकृदात्म° L after 24d N and N′ add: भन्द्रमार 25a °कलिप्रसाद° L 25b °तृत्मृत्यु-कारी च शशी विलग्ने L 25c °व्ययद्व्या° N, °व्ययद्मा° L °मदनार्थदोष° L

50,26–30

मानाङ्गनाच्छादनवस्त्रभूमि-
प्रहर्ष[दा]ता हिमगुस्तृतीये।
स्वबन्धुवैरामयदैन्यरोष-
पैशु[न्य]कृच्छीततनश्चतुर्थे ॥२६॥
सुतामयं पञ्चमगोऽर्थहानिं
कुर्यात् सुहृत्स्नेहविषव्ययं च।
षष्ठे तु चन्द्रो रिपुनाशपूजा-
मारोग्यमर्थोपचयं करोति ॥२७॥
जामित्रगोऽध्वश्रममर्थचिन्ता-
f. 71 मीर्ष्याकृतिं शोकमशर्मतां च।
कुर्वीत चन्द्रोऽष्टमगः स्वंमृत्यु-
क्षुदध्वबन्धज्वरशस्त्रमोहान् ॥२८॥
पराभिबाधवाग्भिलोभमोहा-
क्लैब्यायशस्कृन्नवमे हिमांशुः।
क्रियासमृद्धिं सुखमर्थलाभं
मेषूरणस्थः कुरुतेऽर्चनं च ॥२९॥
एकादशे स्त्रीरजतान्नपान-
स्वाच्छादनस्थानचतुष्पदाप्तिम्।
कुर्याच्छशी द्वादशगस्तु लग्नात्
क्रियापरिक्लेशफलत्रणाशम् ॥३०॥

Apparatus

26a मानङ्गना° N 26c °वैरभयरोषदैन्य° L 26d °कृद्दोषमनश्च° L °पैशुकृतच्छीत° N 27b °विपर्ययं च L 27c षष्ठस्तु N चन्द्रे L °नाशमूल° L 28b शीर्षाकृतं L सोकमस्पननां च N, शोकमशर्थितां च L 28c °गस्तु मृत्युं L 28d क्षुधाध्वबन्ध-ज्वरजांश्च दोषान् L 29a °मोह° L 29b °न्नवमो N 29d मेषूरणे वा L 30a °दशः N °दशस्थाः सुहृदन्न° L 30b °दनान्यम्बरसेवनं L 30a-b स्त्रीमित्रान्नसुख Kam. 30c °गः क्रियां च L 30d कामस्य शेषां विविधाप्रमोहं L here ends L

50,31-33

अन्तर्बहिर्भेदफलाश्रयश्च
चन्द्रः स्वहोरे ऽग्रमतात्मसंज्ञम् ।
चन्द्रो ऽर्कसंस्थानगतश्च सूते
पूर्वत्र यत्तत् पठितं च नित्यम् ॥३१॥
(भावेषु तद्भावतदंशतुल्यं
दद्यादनिष्टेष्टफलं सदैव ।
यद्भागसंज्ञांशकमिन्दुमार्किः
पश्येदनिष्टं 〈कुरुते〉 शुभारी ऽपि)॥३२॥
शशी शुभस्थः शुभदृष्टमूर्तिः
सर्वोत्कटो ऽनिष्टमपि प्रजह्यात् ।
विपर्यये पापतरप्रदः स्या-
दनिष्टसंस्थो विफलः सदापि ॥३३॥
〈यवनजातके चन्द्रचारः ॥〉

Apparatus
31a °फलत्रयश्च N   31b चन्द्रे N   °संज्ञे N
32c °मिन्दुसूर्यै N   32d °निष्टे N   no space in N   col. no space in N

51, 1-5

भमण्डले ऽष्टोत्तरमंशकानां
  शतं शशाङ्को विचरन्नजस्रम्।
जातस्य कुर्यान्नियतं विनाशं
  सम्प्राप्तवीर्यो ऽल्पफलस्तु मन्दम्॥१॥
यो जन्मतो नैधनशत्रुभस्थ-
  स्तत्स्वामिनो वाधिबलो रि(पु)र्वा।
सूतौ बभूवापतितः स जन्म
  गृहं ग्रहो हन्त्यधनदस्त्वतीव॥२॥
यस्तु स्वनीचारिगृहोपगो ऽन्यै-
  र्जितो ऽरिदृष्टो ऽल्पतनर्विवर्णः।
सूतावभूज्जन्मपतौ बलस्थे
  स जन्मगो वन्ध्यफलो निरुक्तः॥३॥
ईषित्सहृत्स्वोच्चभृदिष्टदृष्टो
  मित्रर्क्षजन्मोपचये बलीयान्।
यो जातके ऽभूत् स तु जन्मसंस्थो
  दद्याच्छुभं न त्वशुभो ऽप्यनिष्टम्॥४॥
फले ऽष्टवर्गे शुभपापलब्धे
  समानकल्पावफलौ प्रदिष्टौ।
ज्यायांस्तु यस्तस्य फलं विधार्यं
  यात्राविधाने च समुद्भवे च॥५॥

Testimonia

3-5 are quoted by Utpala on Bṛhajjātaka 9,8.

Apparatus

1c मतस्य N   2a वै धनशास्त्र° N   2b व्याधिर° N   3a °पगेन्द्रौ° N   3d मध्यफलो N   4a ईषः सु° N   4c स जगंस्तु चन्द्रो N   4d नस्तु शुभो N   5a फलाष्ट° NU   °लब्धौ N, लब्धे U   5b °कल्पौ च फलस्य दृष्टौ N   5c जयस्त्रयतस्य N   5d वातां विरोधे N   च' N, त्र U

51, 6–11

(f. 71v) तदीश्वरोद्धृत्युपघातवत् स्यु-
र्मनस्तनुस्थानि शुभाशुभानि।
चरन् क्रमं स्वात्मगतो ऽन्यगो वा
तद्भवानीप्सितनिन्दितानि ॥६॥
यथा गृहं सः सृजतः फलानि
f. 72 प्राप्य द्विषो वा शुभदस्य तद्वत्।
〈तथा〉 ॥७॥
स्वायां दशायां विदधाति यद्यत्
स्वाब्दार्जितं निर्विकल्पमुपैति।
अर्धं पराब्दे परवासरे ऽशं
शुभाशुभावेक्षणसङ्कुलं च ॥८॥
ग्रहाः सुहृन्मूलगृहोच्चभेषु
पापा हि पादोत्तरदायदाः स्युः।
एते द्विषस्त्वंशगृहेष्वनिष्टं
कृत्स्नं प्रदद्युः शुभमर्धमन्ये ॥९॥
ग्रहः शुभः स्वेष्टफलप्रणेता
क्रूरैः समग्रैरवलोक्यमानः।
मित्रे ऽपि चासंहरति स्वदायं
तद्वच्छुभैः पापफलस्त्रिभिस्तु ॥१०॥
एको ऽपि सम्पूर्णदृगुच्चसंस्थो
दायापहर्ता पठितो (ग्र)हस्तु।
मूलत्रिकोणे स्वसुहृद्गृहस्थो
बलक्रमाद् घ्नन्ति फलानि दृग्भिः ॥११॥

Apparatus

6c–d repeated in N 6c चारक्रमास्त्वात्म° N²
नुतो N¹, नुतौ N² 6d तव्यद्भ° N¹, तस्युद्भ° N²
°वनी° N² 7b सुतदक्ष N 7c–d no space in N
8b स्वाब्दार्दितं N °ष्टपैति N 9a सुहृत्सहृ° N
9b पादातिपादो° N 9c एष्यो विषस्त्रस्तगृहे° N
9d °मन्यः N 10c मित्रो N 10d °फलैस्त्रि° N 11b
°तो य (ग्र) N 11c °द्गृह° N 11d बलानि N

51,12-17

इदं हि सम्यक् परिगण्य विद्वान्
    सप्त ग्रहान् जन्मकृतैर्विशेषैः।
ब्रूयाद्विधानं नियतं प्रजानां
    शुभाशुभं त्रिप्रकृतिव्यवस्थम्॥१२॥
यो वेदवेदाङ्गपुराणधर्म-
    शास्त्रावदातो गुरुदैवतज्ञः।
स्तेयाभ्यसूयानृतदम्भहिंसा-
    विद्वेषरोषादिमलैर्वियुक्तः॥१३॥
(प्र)शस्तसम्पूर्णसुजातमूर्ति-
    र्द्विजो व्रतेडाशुचिधर्मयुक्तः।
सुधीः सुमेधाः प्रयतः प्रशान्तः
    स्वतन्त्रनिष्ठो गुरुलब्धमानः॥१४॥
महिग्रहानुग्रहलब्धसिद्धि-
    र्निमिर्नराणामिव योगदर्शी।
गतागतेष्यन्ति फलानि विन्द्या-
    च्छुभाशुभान्यात्मपराश्रयाणि॥१५॥
उपस्थितोद्भूतवितर्कपृष्ट-
    चेष्टादिषु स्वस्थमतिर्यतात्मा।
होरार्थधीरो गणनेन बुध्वा
    तत्कालराश्यादिफलं ग्रहाणाम्॥१६॥
निरुद्गतानुद्गतकेन्द्रसंस्थान्
    राशींश्च भागानपि लिप्तिकांश्च।
संस्थाप्य योगान् नियतक्रमांश्च
    बुध्वाब्ददिग्मासदिनाधिपांश्च॥१७॥

Apparatus

12c °नान्नियतं N 14a °सुजाति° N 14b व्रतेज्या° N
15c गतागतैर्ष्यानि N 16a °द्भूति° N 16b °र्यथात्मो
N 16c गगनेन बुद्धा N 17b लिप्तिकानां N
17c नियम° N 17d बुद्धाब्द° N

51,18-20

राश्यादिलग्नं स्वचतुष्टयेषु
नीचोच्चमित्रारिगृहस्थितिं च।
स्वयोन्यनूकत्रकृतिं च राशे-
र्ग्राम्याम्बुजारण्यचरस्थिराणि॥१८॥
f.72v प्रोच्यातमालोकनकालवार्तो
विधार्य तत्स्वामिगुणांश्च सम्यक्।
बालाद्विशिष्टं परिगृह्य सः स्यात्
प्रष्टः क्रियास्थानविनिर्णयेषु॥१९॥
स्थानानि जन्मग्रहसंश्रयाणि
प्रोद्वीक्ष्य मूर्त्यादिगणांश्चरांश्च।
तत्कालजन्माधिकृतैर्विकल्पै-
र्दशाष्टवर्गादिफलं विदध्यात्॥२०॥
यवनजातके ⟨ऽष्टवर्गफलम्॥⟩

Apparatus

18a °येषां N   19c तः N   20a °स्त्रस्त्रयाणि N   20b °श्चयांश्च N   20d °देशाष्टदूगादि° N   col. no space in N   after 51 N adds: त्रयत्रिंशच्छतद्वसा-धिकसहस्त्रद्वयश्लङ्कः। 2233॥

52,1-5

द्रेकाणलग्ने क्रमशस्तु राशे-
    र्गुरुर्विलग्नादित्रिकोणगो ऽभूत्।
यस्तद्भवेत्तद्भवनक्रमेण
    स्वाश्चारभाद्व्रगतिः प्रगण्या ॥१॥
राश्यंशकादिन्दुगताश्च मासान्
    त्रिंशल्लवादर्कगतादहानि।
लग्नात्तु होराबलिनो मुहूर्तं
    प्राग्लग्नभागास्व्यसमानमाहुः ॥२॥
होरादि वीर्याधिकलग्नभाजि
    स्थानं त्रिकोणे शशिनो विधार्यम्।
द्रेकांशकान् त्रिक्रमशो विलग्नाद्
    द्रेकान् क्रमात् केन्द्रपरिक्रमाश्च ॥३॥
आ कण्टकादर्कगताद्विलग्नान्
    भवर्गशुद्धं कुजभं तमाहुः।
भागात् क्रमाद्वा शशिनो भृगोः स्याद्
    बौधं रवीन्द्वन्तरमध्यजं तत् ॥४॥
सौरं समामासदिनक्रमेण
    प्रसाध्यमार्केरपि तद्वदेव।
तद्वृद्धिभानं परिगृह्य सम्यग्
    जन्माश्रयं योगविधिं विदध्यात् ॥५॥

Testimonia

1 is quoted by Utpala on Bṛhajjātaka 26,2.
3a-b is quoted by Utpala on Bṛhajjātaka 26,5.

Apparatus

1a द्रेष्काण° U   क्रमतस्तु U   रौशौ U   1b गुरु° U
1d त्वाम्भारगद° N   °गीतिं प्रगण्यात् U   2b गता-
न्यहानि N   2c °नो केहन्तु N   3a °भादि N
4c भागा N   4d रविन्दु° N

52,6-10

एतं ग्रहस्थानविधिं प्रधार्य
वाच्यो विधिर्जातकलक्षणो यः।
गुणैस्तु तत्कालबलप्रधानै-
स्तत्कालसिद्धिर्विहितेप्सितेषु॥६॥
यद्यस्य राशेः स्वगुणाधिकं तु
चैनं समालब्धविभागजातम्।
संसिध्यते यैर्नियतं ग्रहैश्च
तान् योगतः स्थूलविधौ विधास्ये॥७॥
ग्रहस्वभावाश्रयमृद्धिमन्त-
श्चिन्ताविधानं भवनाश्रयं वा।
तद्वर्गभागादिगुणाश्रयं वा
वदन्ति लग्नादिगुणां प्रसिद्धिम्॥८॥
ग्रहस्वभावोद्भवमृक्षजं वा
चिन्ताफलं स्थूलमिति ब्रुवन्ति।
f.73 का⟨लक्रमेण⟩ त्वुदितांशसंस्थं
योगोपदेशादपि सूक्ष्ममाहुः॥९॥
भागांशकैर्लिङ्गितयोगभिन्ना
चिन्ता ग्रहस्थानसमा विधार्या।
राशेरपि त्वर्धतृतीयलग्नात्
स्वलक्षणोक्ता फलता विधार्या॥१०॥
⟨यवनजातके⟩ प्रश्नजातकः समाप्तः॥

Apparatus

6a एताङ्ग्रह° N  7a राशौ N  °धिकानि N  7b चेन समालब्धि° N  9c त्युदितांशसंस्थां N  10a भागात्मकै° N  10b ग्रहास्थान° N  10c °पिस्त्वर्द्ध° N  °लग्ना N  col. no space in N

53,1–6

इत्येष प्रष्टुर्द्विविधो निरुक्त-
    श्चिन्ताश्रयः स्थूलविकल्पगम्यः।
स तु स्थितिप्रेक्षणलक्षणाद्यैः
    सम्पद्यते नैकविधैर्विकल्पैः॥१॥
कालोऽन्तरात्मा सचराचरस्य
    लोकत्रयस्योन्मिषयोनिरूढः।
सम्प्रेरितो क्षः समुपैति तेन
    प्रष्टान् व्यवस्थात्मफलोपसृष्टे॥२॥
ततो यदृष्टास चिरं प्रमत्तः
    कालोपयातं परिगृह्य सम्यक्।
फलं द्रुताजस्रगतेन चक्रात्
    यथोपपन्नं विदधीत तस्मै॥३॥
प्रोद्यातलग्नोपगतस्य भागात्
    गतागतेष्यन्ति फलानि विद्यात्।
यथोक्तभागार्थविनिश्चितेषु
    सर्वेषु लग्नेष्वयमेव कल्पः॥४॥
पापोऽरिरुग्नैधनजन्मसंस्थः
    स्वनैधने वा रिपुनीचभे वा।
अनिष्टभस्थः शुभादृष्टमूर्तिः
    केन्द्रस्थ उक्तेष्वशुभो ग्रहः स्यात्॥५॥
स्थानेषु यः स्वोपचयात्मकेषु
    स्थितो ग्रहः स्वेषु च वीर्यवान् स्यात्।
दृष्टः प्रशस्तैरुपकारिभिश्च
    श्रेष्ठो दशेशस्तु ततो वरीयान्॥६॥

Apparatus
1a पृच्छा द्विविधो N    1b °श्चन्ताश्रम N
2d °सृष्टः N    3c चक्रा N    4b °गतैष्मन्ति N
5d रुक्तेष्व° N    6a यस्योप° N

53,7–12

एवं परिज्ञातदशात्मजन्म-
लग्नाष्टवर्गस्य विनिश्चितार्थम्।
शुभाशुभं कालफलोपपन्नं
धर्मात्मने वाच्यमनुग्रहाय ॥७॥
एतद्ग्रहस्थानविकल्पयोगान्
बुद्ध्वा बुधो जातकनिश्चितानि।
उपस्थितेष्यन्ति शुभाशुभानि
ब्रूयाद्दशाकालविपा(क)जानि ॥८॥
नवांशकस्योदयगस्य वीर्यं
यः स्वांशमीशः स्वगुणैर्बिभर्ति।
दशापतिं तं जलजांशकं वा
केन्द्रोपगस्यांशपतिं च विन्द्यात् ॥९॥
शुभः शुभस्थानगतः शुभं च
यद्यत् फलं तत् स्वफलं ददाति।
f.73v |विपर्ययस्थो विपरीतकर्मा
बलानुवृत्त्या ह्युभसम्प्रदः स्यात् ॥१०॥
यदष्टवर्गात् पतितानुकूलं
दशाफलं तत् समुपैति सर्वम्।
तत्कालमायान्वितदुर्बलैं तद्
दशापतौ हन्ति न चानुकूलम् ॥११॥
एतेन सद्वाप्यसदागतं वा
प्रष्टो वदेद्योगबलं विधिज्ञः।
मनोगतं वीर्यवतो ग्रहात्तु
विद्याद्ग्रहाद्वा परिपूर्णमेधाः ॥१२॥

Apparatus

8d क्रयान दशा° N  9b यस्यांश° N  9d °स्थांशगतिं N  10a शुभाशुभस्थानगतं N  10d ह्युभदप्रदः N  11a ° वर्गो N  12d विद्या ग्रहा° N

53, 13–18

नृपोग्रशत्रुव्यसनोपताप-
काष्ठाभिघातोग्रचतुष्पदेभ्यः।
भयं गृहव्याधिकृतं च सूर्ये
चिन्तां वदेत् स्वर्णकृतां च लग्ने ॥१३॥
चन्द्रे रतिस्त्रीव्यसनान्नपान-
वैकल्यरोगार्तसुखात्मचिन्ताम्।
विद्यान् मणिस्नेहरसाम्बुजानां च
कृशाग्रयापुष्पफलात्मिकां च ॥१४॥
शस्त्राग्निशत्रुक्षतरोषमोष-
डिम्बाहवानर्थभयानि भौमे।
लग्ने वदेत् स्वामिकृतां च पीडां
सुवर्णचिन्तामसृगुद्भवां च ॥१५॥
भोज्याम्बरस्त्रीरतिरत्नगन्ध-
शय्यावणिक्पण्यधनाकराणाम्।
शुक्रो निधानोत्सवभूषणानां
चिन्तां कुटुम्बाधिकृतां च कुर्यात् ॥१६॥
विज्ञानशास्त्रश्रुतिशिल्पशिक्षा-
संजल्पमन्त्रागदयुक्तियुक्ता।
द्रव्यादिसंख्याक्रयविक्रयाख्या
चिन्ता बुधे मित्रकलाश्रया च ॥१७॥
यज्ञप्रतीज्याध्ययनास्त्रधान्य-
गर्वात्मजाच्छादनवाहनानाम्।
स्थानाश्रमानोपचयोद्यानां
चिन्तासु हेतुर्गुरुरर्थिनां च ॥१८॥

Apparatus

14a चन्द्रो N 14b °चिन्तान् N 14c विद्या N °म्बुजाम N 14d °ककुभाग्रया° N 15b °चिम्बा° N 15d °द्भवं N 16d °कृतं N 17c द्रव्याधि° N 18a °प्रतेज्या° N 18c स्थानार्वमानो° N

53, 19

क्षुद्बोधमोहाध्वनिरोधवैर-
द्रव्यव्ययक्लेशकलिक्रमानाम्।
लोहायसस्त्रप्रजितातराणां
नीचाङ्गनावृद्धजनैस्य चार्किः ॥१९॥
〈यवनजातके〉 लग्नगतग्रहचिन्ताफलम् ॥

Apparatus

col. no space in N     °ग्रहयात्राफलम् N

54,1-7

विदेशकान्तारविहारकारी
जले गृहोद्भासनकृच्च सूर्यः।
स्त्रीबन्धुशोकं च ददाति चन्द्रः
स्थानप्रसिद्धिं प्रियसङ्गमं च ॥१॥
भौमो ऽग्निदाहव्रतमोषकृत् स्या-
ज्जलोपगः शत्रुविवृद्धिकृच्च।
बुधः सुहृत्साधुजनप्रशस्ति-
f.74 पूजागुणाख्यातिकरो जलस्थः ॥२॥
स्त्रीहितकायासमुदारवैरं
लाभं धनानां भृगुजः करोति।
उदारबन्धूपचयं समृद्धिं
धनार्थ(ला)भं च गुरुर्जलस्थः ॥३॥
अनर्थमायासमनर्थवैरं
भङ्गं गृहध्वंसनमर्कसूनुः।
ग्रहः समाख्यातिजलोपपन्न-
क्षेत्राश्रया स्यात् परिक(ल्प)नैषाम् ॥४॥ जलः ॥
सूर्ये विबन्धूग्रचतुष्पदाग्नि-
पित्तादिरुग्भ्यो ऽर्दनमस्तगे स्यात्।
चन्द्रो ऽङ्गनात्मामयदुर्नयादि-
दैन्यव्ययाध्वायनदो ऽस्तसंस्थः ॥५॥
भौमे ऽ(ग्नि)शस्त्रव्रणरक्तकोप-
स्त्रीवित्तनाशो ऽक्षिरुजो ऽस्तगे स्युः।
द्यूताध्वमित्रार्थविवादकृत्य-
स्त्रीवित्तसन्दूषणमिन्दुसूनौ ॥६॥
शुक्रे वणिक्कर्मफलार्थलाभ-
स्त्रीसङ्गमोद्वेजनमस्तसंस्थे।
विद्याद्गुरौ देवगुरुश्रुतार्थ-
धर्मौधवैचित्त्यं तनुकल्पतां च ॥७॥

Apparatus
2c °प्रशास्ति° N 3d यानार्थे° N 4d °श्रयात् N
5c °त्मामय° N 7c °द्गुरोर्देव° N

54,8–13

दीर्घाध्ववित्तव्ययवातरोग-
स्त्रीमृत्युचिन्तां रविजे ऽस्तसंस्थे।
स्थानेष्वनिष्टेष्वहिताहितेषु
ज्ञेयं फलं तद्विपरीतमेभ्यः॥८॥ अस्तः॥
आज्ञाक्रियारम्भक्रियाश्रयार्थ-
चिन्ता नभोमध्यगते रवौ स्यात्।
चन्द्रे तु साध्वर्चनमिष्टलाभं
पूज्यां गणे ह्यर्थमुशन्ति चिन्ताम्॥९॥
चौर्याग्निकर्मापचयप्रताप-
द्विड्विग्रहाक्रूरपरिग्रहार्थाम्।
भौमे बुधे मानधनार्थसेवा-
वाक्कर्मकोशोपचया(श्रयाः) स्युः॥१०॥
शुक्रे ऽङ्गनावस्त्रधनार्थकोश-
क्रियानियोगप्रभवामुशन्ति।
गुरौ तु मेषूरणगे समृद्धि-
स्थानार्चनाज्ञागमहेतुका स्यात्॥११॥
सौरे कृषिक्ले(श)भृतिप्रमोष-
क्लीबोपसेवापचयाश्रयाः स्युः।
चिन्ता नभःकण्टकयोगसंस्थे
क्षेत्राद्विशेषापचयात्र दृष्टा॥१२॥ दशमः॥
एषामनिष्टेष्टफलप्रवृत्तिं
स्थानांशसंवेशवशाद्वदन्ति।
शस्ताः स्वजन्मापचयर्क्षसंस्थाः
पापैरदृष्टा विषमेष्वनिष्टाः॥१३॥

Apparatus

8d अस्ते N   9c साध्वङ्गनष्ट° N   9d पूज्यं गने ह्यर्थ° N   10b °ग्रहार्थं N   10d °कोशापचया° N
12b °सेवोपचयाः क्रियाः N

54,14–18

f.74v दशापतौ स्वोच्चगृहे स्वभावे
लग्ने यथोद्दिष्टमुपैति पूर्णम् ।
अनीश्वरे ऽप्यायति तत्क्रमेण
लग्नाश्रये कालविनिश्चितं यत् ॥१४॥
नीचे दशेशे ऽल्पफलप्रवृत्तिं
शुभस्य कुर्यादितरस्य वृद्धिम् ।
प्रशस्तदः स्वेषु गृहेषु तद्वद्
द्विष्टेषु वानिष्टफलप्रदो यः ॥१५॥
चिन्ताफलं सिद्धिमुपैति सौम्ये
शुभेक्षिते स्विष्टगृहाश्रिते वा ।
जन्माधिपे चोच्चगृहोपगे वा
लग्नानुकूलाधिपतौ च नित्यम् ॥१६॥
यस्य (स्व)जन्मोपचयाख्यराशिः
प्राग्लग्नगो वा स्वचतुष्टयस्थः ।
तद्भावलग्ना नियतं प्रकुर्यात्
प्रोक्तार्थसिद्धिं तदरिस्थतो ऽन्यत् ॥१७॥
अन्योन्यवर्गस्थितिजैर्विकल्पै-
रन्योन्यसंयोगनिरीक्षणैश्च ।
चिन्ता विकल्पैः स्युरनेकचिह्नै-
स्तासां समासोक्तिरियं यथार्थम् ॥१८॥
⟨यवनजातके⟩ कण्टकयोगाः ॥

Apparatus

14a स्वभावा N 14c अनिश्वरो N 18a अते न्य° N col. no space in N °योगः N

55,1–6

शशाङ्कवर्गे रजतं सुवर्णं
राज्ञा पितृव्यो रविणा पिता वा।
हिंस्रोग्रवृद्धार्द्रविषाग्निशस्त्र-
चामीक(रा)ष्यारगृहाश्रिते ऽर्के ॥१॥
हिरण्यमन्त्रागमलेख्यमार्ग-
द्यूतादिचिन्ता बुधवर्गगे ऽर्के।
पूजा नृपाद् द्रव्यसुगन्धिचारुः
कर्मोद्यमार्थो भृगुवर्गसंस्थे ॥२॥
शस्त्रास्त्रमन्त्रोदयवाहनादि-
द्विषत्क्रियाणां गुरुवर्गसंस्थे।
चिन्ता रवावर्कजवर्गगे तु
हिंसाभिघातानृतलोहजा स्यात् ॥३॥सूर्यः॥
दन्तादिजालङ्करणोर्मिकाना-
मेष्वेव चिन्ता हिमगौ ऽर्कवर्गे।
स्याद्रुक्मवासोमणिपुष्पराग-
भव्यादिचिन्तारगृहस्थ इन्दौ ॥४॥
स्त्रीद्यूतयोषामणिरत्नशिल्प-
हास्यादि विन्द्याद् बुधवर्गसंस्थे।
वर्गे भृगोः स्त्रीरतिरत्नभोज्य-
गन्धाम्बरोद्यानविहारचिन्ता ॥५॥
गुरोस्तु वर्गे गुरुदेवविप्र-
सद्धर्मतुष्टिश्रुतिबन्धचिन्ता।
चोभ्यातुराध्वश्रमवृद्धयोषित्-
चिन्ता शशाङ्के ऽर्कजवर्गगे स्यात् ॥६॥चन्द्रः॥

Apparatus

1b राज्ञ N  1c °वृद्धाड° N  1d चामीक(रार)ण्यरैं-गृहोस्मृते N  2c पूजां N  °चारू N  2d °मार्थं N  3a °वाहनाद्वि° N  3d °लोहजः N  4b हिमदो N  5a °योगामणि° N  °शिल्मा° N  6b °सद्धर्म° N  6c भुव्यातुरा° N

55,7–12

कुजोऽर्कवर्गे रिपुशस्त्रचौर्य-
f.75 स्वाम्याश्रयां ताम्रसुवर्णजां च ।
शशाङ्कवर्गे कलिरक्तपित्त-
मूर्च्छाभिघातश्रमजां करोति ॥७॥
बौधे स्थितस्तु च्छलयुद्धकूट-
द्यूतादिचिन्तां प्रकरोति भौमः ।
शौक्रे परस्त्रीहरणान्धबन्धन-
क्षयात्मकां स्वेदयुतां स्थितोऽसृक् ॥८॥
गुर्वाश्रयस्थे गुरुबन्धुशत्रु-
संक्षोभसन्तापसमुद्भवा स्यात् ।
सौराश्रिते शत्रुविघातशस्त्र-
हिंसाश्रया च क्षतजा च भौमे ॥९॥ भौमः ॥
बुधोऽर्कवर्गे नृपसाधुकृत्य-
सेवाश्रयां दैन्यकृतां च कुर्यात् ।
चिन्तां स्वमातृप्रियबन्धुयोषि-
ल्लाभप्रियाख्यां शशिवर्गसंस्थः ॥१०॥
कलिच्छलद्रोहविवादमाया-
व्ययाश्रितां त्विन्दुसुतः कुजर्क्षे ।
स्त्रीवेशचेष्टाविटदूतधूर्त-
हास्याश्रितां पण्यकृतां च शौक्रे ॥११॥
ख्यातिश्रुतज्ञानकलाहिरण्य-
विद्वद्विवादादि गुरोर्गणस्थे ।
चिन्ता बुधे स्यादसितर्क्षगे तु
पैशुन्यभावातुरवैशसानाम् ॥१२॥ बुधः ॥

Apparatus

8d क्षयात्मकस्वेदयुते N 9c सौरासृते N 10b दैन्यकृतं N 10c स्वमात° N 10d °प्रियास्यं N 11b °व्ययाशृतं N 11d शुक्रे N 12a °काला° N 12d पैशून्य° N °वैशसानं N

55, 13–18

शुक्रो ऽर्कवर्गे ऽर्यबधूमतुष्मद्-
विचित्रलोहाम्बरतैजसानाम्।
चिन्ताकृदिन्दो रसभोजपेय-
घ्रेयाम्बरस्त्रीमणिमौक्तिकानाम् ॥१३॥
स्त्रीवित्तनाशक्षितिबन्धुरत्न-
बस्त्रानिकाजार्थमसृग्गृहस्थः।
भृगुर्बुधर्क्षे रतिदारदैन्य-
मैयादिपण्यक्रयविक्रयार्थाम् ॥१४॥
वर्गे गुरोरार्यबधूविवाह-
गन्धाम्बरस्नानधनागमार्था।
चिन्ता भृगौ वृद्धबधूविरोध-
गोलोहकृष्णाम्बरजार्कजर्क्षे ॥१५॥ शुक्रः॥
गुरुर्नृपस्थानसुवर्णमान-
यानाम्बराणां रविवर्गसंस्थः।
चिन्तां ददातीन्दुगृहे तु धर्म-
पुष्टिस्थितिज्ञानसुखोदयाख्याम् ॥१६॥
राष्ट्रार्थकृत्याश्वसुवर्णभूमि-
द्विड्विग्रहार्था क्षितिजर्क्षसंस्थे।
चिन्ता गुरौ मन्त्रविवादविद्या-
यज्ञादिपुत्रप्रभवेन्दुजर्क्षे ॥१७॥
शौक्रे गुरौ वाहनयानशय्या-
स्त्रीवस्त्रगर्भप्रभवाथ चिन्ता।
शनैश्चरे ग्रामगणाधिकार-
f.75v गोधान्यरुग्विग्रहमन्त्रजा स्यात् ॥१८॥ ⟨गुरुः॥⟩

Apparatus

13a र्व्यबधू° N  14b °गृहस्थे N  14d °क्रयार्थाः N  15b °गमार्थाः N  15d °कृष्टाम्बर° N  16d °दमास्यां N  17b °ग्रहार्थे N  17c गुरोर्मन्त्र° N  17d प्रसवे° N  18c शनैश्वरे N  18d °ग्रह मन्त्रव N  no space in N

SS, १९-२३

सौरे ऽर्कवर्गे ऽश्मविषाग्निशस्त्र-
भृत्यार्दनासृग्गतमैर्विवादम्।
वागङ्गनाभङ्गममित्रवृद्धि-
मास्यातिमातृक्षयमिन्दुवर्गे ॥१९॥
सौरः कुजर्क्षे रिपुशस्त्रवह्नि-
रुग्मोषरोषप्रभवां विधत्ते।
बौ〈धे तु〉 भृत्यानिलरुग्विषाद-
वाग्दोषमार्गश्रमजां ददाति ॥२०॥
शौक्रे कुयोषित्कृतमर्थनाश-
मास्यातिलोहादिधनक्षयं वा।
स्वभावभेदं गुरुबन्धुवैरं
प्रव्राजनं वा गुरुभे ऽर्कसूनुः ॥२१॥ सौरः ॥
शुभः स्ववर्गेषु शुभोक्तिसम्पद्
ददात्यनिष्टेष्वशुभेषु तद्वत्।
सुहृद्गृहेषूपचयोच्चभेषु
श्रेष्ठो ऽरिनीचर्क्षगतस्त्वनिष्टः ॥२२॥
होरादिभागेषु विनिश्चितेषु
चिन्ताश्रया ये नियमा निरुक्ताः।
अन्योन्यसंयोगनिरीक्षणाभ्यां
तेषामिमे सम्पठिता विकल्पाः ॥२३॥
〈यवनजातके〉 ऽन्योन्यवर्गः ॥

Apparatus

19a श्मविशास्मशस्त्र° N  19b °तमैस्र वादं N  19c °विद्धि° corr. to °वृद्धि° N  20a सौरे N  21c स्वनीभभेदं N  गुरुबन्धुभ° N  21d प्राव्राजनं N  22b °निष्टेष्टशुभेषु N  22c सुहृद्गृहे स्वे षूप° N  23b निरुक्तः N  col. no space in N  अन्योन्यवर्गः N

56,1–6

एकर्क्षयोगाश्रितयो रवीन्द्वो-
श्चिन्ता गुरुत्वातिनृपाश्रया स्यात्।
सूर्यारयोः पार्थिवनायकाग्नि-
द्विट्कांचनव्याडविषाश्रया स्यात्॥१॥
आध्यातमन्त्रश्रुतकृत्यचिन्ता
बुधार्कयोरैकगृहस्थयोः स्यात्।
शुक्रार्कयोगे नृपयुद्धलिङ्ग-
स्त्रीनेत्ररुग्वेश्मचतुष्पदाख्या॥२॥
गुर्वर्कयोरस्त्रगजाश्वयन्त्र-
धर्मश्रुतामात्यभिषक्त्रयुक्ता।
सौरार्कयोगे बलिवर्दयन्त्र-
दम्भावरोधश्रममर्दजा स्यात्॥३॥सूर्यः॥
चन्द्रारयोगे बलमल्लयुद्धा-
निष्टारिभेदक्षितिलाभयुक्ता।
चिन्ता बुधेन्द्वोस्तु भवेदपत्य-
काव्यार्थयत्नश्रुतिसि(द्धि)युक्ता॥४॥
स्याद्भार्गवेन्द्वोर्मणिमौक्तिकादि-
गोक्षेत्रयोषिद्रतिलाभयुक्ता।
शशाङ्कगुर्वोरमरद्विजेज्या-
धर्मश्रुतिज्ञानगुणात्मकी स्यात्॥५॥
सूर्यात्मजेन्द्वोरपयानरौक्ष्यो-
त्साह(व्यवा)यानिलरोगजा स्यात्।
विशिष्यते यो विषयोऽत्र तेन
f. 76 पश्यत् स्वातन्त्रात् स फलं विदध्यात्॥६॥चन्द्रः॥

Apparatus

1a रविन्द्वो° N 1b गुरुव्याधिभि° N 3c बलिमर्द-पस्य° N 3d °दम्या° N °मर्कजा N 4a-b °युद्धनष्टा° N 5b °योषित्कलिलाभ° N 6b °मानिल° N °रोगज N 6c लेन N 6d यास्यन्सूतन्त्रात्मफलं N

56,7–12

बुधारयोर्विग्रहकूटचेष्टा-
धूर्तानृतस्तेयकृतां वदन्ति ।
भृग्वारयोः कोपविपत्कुयोषित्-
स्वार्थाविवादच्छलशौर्ययुक्ताम् ॥७॥
गुर्वारयोरात्मवपुःप्रताप-
स्थानात्मरक्षारिविघातजा स्यात् ।
सौरारयोर्बन्धनिरोधमोष-
हिंसावरस्वाहरणादिचिन्ता ॥८॥ कुजः ॥
भृग्विन्दुसून्वोः श्रुतिशिल्पगीत-
नैपुण्यलाभक्रयविक्रयार्था ।
चिन्ता तु गुर्वैन्दवयोः कवि(त्व)-
ज्ञातिश्रुतज्ञानतपोर्थयुक्ता ॥९॥
बुधार्कसून्वोस्तृणकेतनाध्व-
पाषाण्डसंस(र्प)णलिङ्गिता स्यात् । ‹बुधः ॥›
विशिष्टदारात्मजधर्मविद्या-
कोशाश्रया भार्गवजीवयोः स्यात् ॥१०॥
शुक्रार्कसून्वो रसनाम्बरादि-
गोलोहकस्त्रीरतिहेतुकी स्यात् । ‹भृगुः ॥›
गुर्वर्कसून्वोर्गुरुवृद्धसेवा-
दीक्षालयस्थानवियोगचिन्ता ॥११॥ ‹गुरुः ॥›
भमण्डलस्य भ्रमतः क्रमेण
यत्र ग्रहो यः पठितोऽधिवीर्यः ।
स तत्र तत्ताडितसङ्गतोऽपि
भूयिष्ठमात्मप्रभवं विकुर्यात् ॥१२॥
‹यवनजातके› चिन्तादिग्रहयोगाः ॥

Apparatus

7c कोषविषःकु° N 7d °स्वाया° N 8a °वसु° N
10a °केतबाधव° N 10b no space in N 10c
विस्विष्ट° N 11b no space in N 11d दीक्षालसं-
स्थान° N no space in N col. no space in N
यात्रादियोग N

57,1-6

रविर्मनस्तापकृदिन्दुदृष्टो
लग्ने जले स्थान(सु(स्त))प्रदः स्यात्।
विषाद्रोगाध्वकरो ऽस्तसंस्थो
मेषूरणे मानविघातकृत् स्यात्॥१॥
कुजेक्षितः साहसकर्मसिद्धिं
लग्ने जले मोहभयं करोति।
भेदाङ्गभङ्गादिकरो ऽस्तसंस्थो
मेषूरणे मानहिरण्यदः स्यात्॥२॥
बुधेक्षितो मानधनप्रवृत्तिं
लग्ने जले मानयशांसि कु(र्या)त्।
नीचैर्विवादभ्रममस्तसंस्थः
प्रज्ञागुणख्यातिकरो ऽम्बरस्थः॥३॥
सूर्यो नृपाज्ञार्थमदो विलग्ने
शुक्रेक्षितः प्रीतिकरो जले स्यात्।
मानप्रमोदव्यसनप्रवृत्तिं
जामित्रगो विग्रहमम्बरस्थः॥४॥
गुर्वीक्षितो ऽर्को द्युतिबुद्धिमानं
दद्याद्विलग्ने हिबुके ग्रहादि।
f.76v वस्त्रार्थसन्ताप<करो> ऽस्तसंस्थो
विस्तीर्णमानोदयदो ऽम्बरस्थः॥५॥
सौरेक्षितो ऽर्को धनकीर्तिहन्ता
लग्ने जलस्थः क्षितिभङ्गकृत् स्या<त्>।
प्रवासचिन्ताक्षयदो ऽस्तसंस्थो
विमाननार्थक्षयदो ऽम्बरस्थः॥६॥<सूर्यः॥>

Apparatus

1c °रोगध्व° N   3b ह   त् N   3c नीचे विवाद° N   4a विलग्नः N   5b °द्विलग्नो हिबुको N   6b no space in N   6d no space in N

57,7–12

लग्ने शशी देहमनोर्द्धिकर्ता
सूर्येक्षितो (नि)र्वृतिकृज्जलस्थः।
शोकाध्वरोगार्तिकृदस्तसंस्थो
भङ्गावमानक्षयदो ऽम्बरस्थः॥७॥
सुभाभयं लग्नगतः कुजेन
दृष्टो जले भ्रातृकलिप्रवृत्तिम्।
कुर्याच्छशाङ्को ऽस्तगतो ऽर्थनाशं
छायाविघातव्ययमम्बरस्थः॥८॥
बुधेक्षितो वाक्कलिलाभमिन्दु-
र्लग्ने ऽम्भसि स्वास्थ्यमतीव कुर्यात्।
जामित्रगो ऽध्वानमसौमनस्यं
मेषूरणे तु स्थितिसन्नियोगम्॥९॥
सौमुख्यमोजोबलमिन्दुरुद्यन्
कुर्याज्जले स्थानकलिप्रदः स्यात्।
शुक्रेक्षितो ऽस्तङ्गमने गुणार्थं
कोशं नभस्यर्चनमिष्टलाभम्॥१०॥
गुर्वीक्षितो बुद्धिसुखव्ययस्थां
लग्ने जले स्थानसुखं विधत्ते।
चन्द्रो ऽस्तसंस्थो वरदारलाभं
मान्यागुणैश्वर्यकरो ऽम्बरस्थः॥११॥
लग्ने मनोदेहविषादमिन्दुः
कुर्याज्जलस्थो गृहबन्धशोकम्।
स्त्रीव्याधिदो ऽस्तङ्गमने ऽर्किदृष्टो
विमाननानर्थकरो ऽम्बरस्थः॥१२॥<चन्द्रः॥>

Apparatus

7a लग्न: N °मनोर्थ° N 9b °र्लग्नो N 10a सौमुव्य° N 10c गणार्थं N 10d क्लेशं N 12d °नार्थकरो N no space in N

57, 13–18

नृपोग्रबाधां क्षितिजो ऽर्कदृष्टो
लग्ने जले ऽग्निक्षयभङ्गदः स्यात्।
पित्ताक्षिरुग्मोषविषप्रदो ऽस्ते
मानप्रतापच्युतिदो ऽम्बरस्थः॥१३॥
कुजो ऽङ्गनाक्षोभकृदिन्दुदृष्टो
लग्ने जले भ्रातृकलिप्रदः स्यात्।
व्याधिक्षयाध्वानकरो ऽस्तसंस्थो
मानार्थवैकल्यकरो ऽम्बरस्थः॥१४॥
चौराहवोद्वासनकृद्विलग्ने
बुधेक्षितो बंधकरो जलस्थः।
कुजो ऽस्तगो बह्वहितोपहर्ता
प्रसह्यकार्योद्यदो ऽम्बरस्थः॥१५॥
स्वार्थक्षयद्रोहकरो विलग्ने
कुजो जले सम्भ्रमरोधकारी।
अस्तङ्गतः स्त्रीव्यसनाधिकारी
f. 77 शुक्रेक्षितो ऽभूतकृदम्बरस्थः॥१६॥
स्वपक्षभेदव्ययदो विलग्ने
कुजो जले क्षेत्रगृहाश्रयस्थाम्।
गुर्वीक्षितो ऽस्तङ्गमने ऽवमानं
प्राज्ञप्रियप्रत्ययहृन्नभःस्थः॥१७॥
नीचक्षयक्षेमकृदार्किदृष्टो
लग्ने जले स्वार्दितबंधनाकृत्।
शस्त्रव्रणाग्निक्षयदो ऽस्तसंस्थो
भौमो ऽम्बरे संचयमानहर्ता॥१८॥<भौमः॥>

Apparatus

13c °विप्रप्रदो N 14c °क्षयाध्यान° N 15a °द्विलग्नो N 15b जलस्थे N 16a °क्षयोद्रोह° N 17b क्षेत्रग्रहाश्रयस्थः N 17c °मनावमानं N 17d प्राज्ञक्षय° N 18a °कृदर्कि° N 18d no space in N

57, 19–24

लग्ने बुधो वाग्विभवं विधत्ते
    सूर्येक्षितः कर्मफलं जलस्थः।
जामित्रगो मानितमार्गदः स्या-
    द्पाश्रयस्वर्चनदो ऽम्बरस्थः॥१९॥
क्रियागमापत्यकृदिन्दुदृष्टो
    लग्ने गुणख्यातिकरो जलस्थः।
बुधो ऽस्तगः प्रेष्यकथाप्रवृत्तिं
    कुर्यान्नभस्यार्यजनार्चनादि॥२०॥
पापार्थसिद्धिं शशिजो विलग्ने
    द्यूतादिकर्मोपचयं जलस्थः।
कुजेक्षितो ऽस्ते त्वयतार्थसिद्धिं
    कुर्यान्नभस्यर्चितवित्तलाभम्॥२१॥
साध्वङ्गनार्थागममैन्दवः प्राग्-
    लग्ने ज<ले> संचयभावितः स्यात्।
स्त्रीदौत्यलाभं भृगुजेक्षितो ऽस्ते
    मेषूरणे पण्यधनोपहर्ता॥२२॥
श्रुतार्थलाभोपहतां विलग्ने
    बुधो जले धर्मधृतिप्रणेता।
जीवेक्षितो ऽस्ते परदेशवित्त-
    प्राप्तिं करोत्यम्बरगः समृद्धिम्॥२३॥
स्वार्थप्रयोगागममार्किदृष्टो
    लग्ने बुधः शिल्पफलं जलस्थः।
कुर्याद्बुधो ऽध्वश्रमलाभमस्ते
    नौभिक्रियार्थागममम्बरस्थः॥२४॥<बुधः॥>

Apparatus
21d °स्यार्चित° N    22a स्वाधव° N    22b no space in N    23a °पहितं N    24d no space in N

57,25-30

धनाङ्गनालाभकृदर्कदृष्टो
    लग्ने जले स्त्रीभवनान्नदः स्यात् ।
शुक्रो ऽस्तगः स्त्रीनृपशोकदः स्या-
    दैश्वर्यमानागमकृन्नभःस्थः ॥२५॥
लग्ने ऽङ्गनाच्छादनदो भृगुः स्याद्
    दाता जले स्त्रीमणिमौक्तिकानाम् ।
चन्द्रेन्वितः स्त्रीकलिमोहमस्ते
    सौभाग्ययोषिद्धनमानदः खे ॥२६॥
भूम्यम्बराज्ञाधनदो विलग्ने
    कुजेन्वितः स्त्रीभयदो जलस्थः ।
शुक्रः परस्त्रीहरणाद्वधदो ऽस्ते
    वित्तेश्वराज्ञार्थनदो ऽम्बरस्थः ॥२७॥
f. 77v |वेषाङ्गनाभूषणदो विलग्ने
    बुधेन दृष्टो ऽम्भसि हर्षदः स्यात् ।
स्त्रीनिर्गमायासकरो ऽस्तसंस्थः
    शुक्रो ऽङ्गनापण्यविवृद्धिदः खे ॥२८॥
भृगुः सताच्छादनदो विलग्ने
    जले निधिस्थानविवादकृत् स्यात् ।
गुर्वन्वितो ऽस्ते कुकलत्रदः स्यान्
    मेषूरणे मानधनर्द्धिकृत् स्यात् ॥२९॥
कुयोषिदिष्टाभिषदो विलग्ने
    शुक्रो जले स्त्रीधनयोगकृत् स्यात् ।
स्त्रीव्याधिदो ऽस्ते रविसूनुदृष्टो
    मेषूरणे मानध(नो)पहर्ता ॥३०॥〈शुक्रः ॥〉

Apparatus

25a °दर्व्वदृष्टो N   26d स्थे N   27a विलग्नः N
28a वेशा° N   28d स्थैः N   29c स्तेहकलत्र° N   29d
मेषूरणा N   30a विलग्नः   30c स्तै स्थो रवि° N
30d no space in N   no space in N

57,31-36

गुरुर्विलग्ने च सुवर्णदः स्याज्
जलेऽर्कदृष्टो गृहभूमिदा(ता)।
अस्ते तु> चेष्टामतिधर्म(को)ारी
प्रख्यातिमानोदयदो ऽम्बरस्थः ॥३१॥
जीवस्तु मानाम्बरदो विलग्ने
कुटुम्बसंस्थः।
चन्द्रेक्षितो धर्ममतिप्रदो ऽस्ते
स्थानासनोदारकृदम्बरस्थः ॥३२॥
सुवर्णविद्यागमकृद्विलग्ने
गुरुर्जले भूम्युप<कारकारी>।)
कुजेक्षितो ऽस्ते ऽर्थक(लि)प्रणेता
पुरार्थकोशाश्वनियोगकृत् खे ॥३३॥
सुतश्रुतज्ञानकरो विलग्ने
गुरुर्जले वाक्सुखमानदः स्यात्।
वाग्वादकृत् सौम्यनिरीक्षितो ऽस्ते
खे साधुविद्व(द्)गुरुमानदः स्यात् ॥३४॥
स्त्रीपुत्रसौख्याम्बरदो विलग्ने
गुरुर्जले भूषणयानदः स्यात्।
दारार्थसिद्धिं भृगुजेक्षितो ऽस्ते
स्थानाश्वकोशोपचयं नभःस्थः ॥३५॥
सद्वृत्तिविद्यार्जनदो विलग्ने
जीवो जले क्षेत्रफलाधिपदः स्यात्।
प्रव्राजनं सौरनिरीक्षितो ऽस्ते
गणाधिकारं कुरुते ऽम्बरस्थः ॥३६॥<जीवः॥>

Apparatus

31d प्रख्यति° N   33d °र्थशोकाश्व° N   34a °ज्ञानबलो N   34d °विद्व(त्)गुरु° N   35b भूषयनाच्चदः N   36a सद्वृद्धि° N   36d गुणा° N   no space in N

57,37–42

मोहाध्वबन्धादिकरो विलग्ने
जले गृहोपद्रवदो ऽर्कजः स्यात्।
सूर्येक्षितो ऽस्ते परदेशचर्यां
मेषूरणे मानधनाधिकृत् स्यात् ॥३७॥
व्याधिस्वमातृव्यसनं विलग्ने
जले ऽर्क(ज): स्थानसुहृद्विनाशम्।
चन्द्रेक्षितः स्त्रीमरणार्तिमस्ते
कुर्यान्नभःस्थः कुलतो धनानाम् ॥३८॥
बन्धुप्रहारक्षयदो विलग्ने
सौरो जले च क्षय(शत्रुदः) स्यात्।
कुजेक्षितो मृत्युभयार्तिदो ऽस्ते
पापार्थलाभं विहरं च खस्थः ॥३९॥
लग्ने ऽनृणोत्थानविपत्तिबन्धु-
प्रदो ऽर्कजो वाग्व्यसनं जलस्थः।
बुधेक्षितो मारुतरोगमस्ते
कुर्यान्नभःस्थो भृतिकार्यलाभम् ॥४०॥
गोपुत्रमित्रक्षयदो विलग्ने
f. 78 सौरो जले धान्यधनापहर्ता।
जायानिलव्याधिगुरुप्रदो ऽस्ते
शुक्रेक्षितः कोशविपत्करः खे ॥४१॥
सौरो ऽर्तिगर्भक्षयदो विलग्ने
गुर्वीक्षितः स्थावरकृज्जलस्थः।
दीक्षाप्रवेशश्रममोहदो ऽस्ते
समृद्धिगुर्वर्चनदो नभःस्थः ॥४२॥<सौरः॥>

Apparatus
37c °चर्य N 38a °व्यसनो N 38d कुजोन्न° N
39d विहरं म्बरस्थे N 40a स्तृणो° N 41c
perhaps °कुरुक्प्रदो is to be read 41d क्षे N
42d no space in N

57, 43–45

इष्टर्क्षसंस्थो बलवाननिष्टै-
र्दृष्टो ग्रहैर्दृष्टिफलं निहन्यात्।
अनिष्टदः स्थायिनि मन्दवीर्ये
दृष्टिग्रहस्थानफलं हिनस्ति ॥४३॥
अभ्याप्यते स्थायिफलं शुभेन
दृष्टे शुभस्थानगुणान्विते च।
बाहुल्ययोगादितरेतरेभ्यो
यथा बलं चोक्तविशेषकं स्यात् ॥४४॥
क्रियाफलं यद्गदितं क्रमेण
चिन्ताविधानं विदुरेतदेव।
स्वैः स्वैः स्वनुकप्रकृतिस्वभावैः
क्षेत्रेषु चिन्तां नियतां विधास्ये ॥४५॥
<यवनजातके> केन्द्रगतग्रहान्योन्यदृष्टिः ॥

Apparatus

43a इष्टो र्क्ष° N 43b °फलै N 43d दृष्टो N
44a आभ्याप्यते N 44b दृष्टं N °न्वितं N
45b °देशा N col. no space in N केन्द्रगतग्रह
अन्योन्यदृष्ट N

58,1–6

मेषे विलग्ने तु कुटुम्बरूप्या-
भूम्यग्निजीवाजसुवर्णचिन्ताम्।
विन्द्याद्विवादारिजलप्रधान-
प्रसादमानाश्रयहेतुकीं च ॥१॥
वृषे वदेद्गोबलिवर्दनारी-
शय्याकृषिक्षेत्रकृतां प्रचिन्ताम्।
हिरण्यनाशात्मकहेतुकीं वा
कुटुम्बिनः कर्मफलाश्रयां वा ॥२॥
विद्विड्विवादं सुतरोगमिष्ट-
स्त्रीसङ्गमं साधुनिषेवणं च।
चित्रास्त्रशिल्पश्रुतहेतुकं वा
संचिन्तितं स्यान् मिथुने विलग्ने ॥३॥
चतुर्थराशौ तु विदेशयोषित्-
सन्दर्शनस्त्रीरतिमण्डनाख्याम्।
केदारधान्याम्बुजहेतुकीं वा
चिन्तां वदेत् पुष्पफलाश्रयां वा ॥४॥
चतुष्पदारण्यवनाद्रियन्त्र-
चर्मास्थिरोमाजिनवेश्मचिन्ताम्।
चेष्टाविवादप्रभवां च विन्द्यात्
सिंहे मृगव्याधनृपाश्रयां च ॥५॥
षष्ठे विलग्ने मणिमण्डनस्त्री-
वीणारतिज्ञानकलात्मकानाम्।
चिन्तां वदेद्वस्त्रविचित्रगन्ध-
f.78v सेवाश्रयां भाण्डकहेतुकीं वा ॥६॥

Apparatus
1b °भूम्याग्नि° N 2a °बलिवर्धनानि N 2d कुटुम्बिनं N °श्रयं N 4a °राशे N

58,7–12

तुले वणिक्पण्यविदेशयात्रा-
    लोभाश्रयं कर्म वदन्ति तस्याम्।
स्वज्ञातिपक्षार्थकृताबलिं वा
    पैतामहं पौष्टिकमास्पदं वा ॥७॥
लग्ने ऽष्टमे भोजनमित्रलाभ-
    गोद्रोहकर्मक्षितिहेतुकं वा।
विषोपलोलूखलभावजातं
    स्याच्चिन्तितं गुह्यविदूषणं वा ॥८॥
युद्धास्त्रशिक्षाव्रतयज्ञकर्म-
    स्वाध्याययानाम्बरथादिचिन्ताम्।
लग्ने वदेद्धन्वि(नि)रत्नलाभ-
    पुत्राश्रयां स्थानसमुद्भवां च ॥९॥
मृगे च देहव्यवहारशस्त्र-
    लाभक्रियाक्षेत्रगृहार्थचिन्ताम्।
आरोग्यरक्षाश्रयकर्मयुक्तां
    स्त्रीधान्यलोहादिकृतां च विन्द्यात् ॥१०॥
कुम्भे तु शिक्षासवनीचयोषिद्-
    भूतिक्रियाक्षेत्रचतुष्पदानाम्।
चिन्तां वदेद् द्यूतविहारभार-
    क्रियानपायायसहेतुकीं च ॥११॥
मीने विलग्ने मणिरत्नपण्य-
    प्रवासगुर्वर्चनमानयुक्ताम्।
प्रियप्रवासागमनाम्बरेज्या-
    स्त्रीरत्नधान्याकरहेतुकीं च ॥१२॥

Apparatus

7c °बलिर्वा N   8d °विभूषणं N   9c वदेद्धंद्धुनि(नि) N   9d °श्रयं N   9d °वांश्च N   11d °नपग्यायवहे° N   12c प्रिया° N   12d °धान्नाकर° N

58, 13–14

क्षेत्रेश्वरक्षेत्रगुणांश्च सम्यग्
 द्रेकांशभागप्रकृतीश्च बुद्ध्वा।
चिन्ताविधानं मति(मा)न् विदध्याल्
 लग्नोपगादिग्रहवर्जितेभ्यः ॥१३॥
द्रेकाणराशिग्रहलक्षणानि
 पृथग्वियुक्तानि विचार्य विद्वान्।
यथा बलं सङ्कुललक्षणं वा
 चिन्ताविधानं प्रव(दे)त् सुमेधाः ॥१४॥
यवन⟨जातके⟩ चिन्तालग्नफलम् ॥

Apparatus
13b °कृती च N  13c मति(मा)न् N  14b विद्वन् N
14c °लक्षणां N  col. no space in N  यात्रा° N

59,1–7

मेषांशके भूमिसुवर्णचिन्ता
विलग्नगे भौमबलाद्द्विभार्या।
चतुष्पदस्त्रीप्रभवा वृषांशे
स्त्रीसङ्गमार्था मिथुनांशके तु ॥१॥
शय्याङ्गनालाभकृता चतुर्थे
सिंहांशके स्याद्गृहसंचयादि।
कन्यांशके स्याद्रतिवस्त्रचिन्ता
स्त्रीवस्त्रमाल्यादिकृता तुलांशे ॥२॥
गोभोजनानामपि वृश्चिकांशे
गन्धास्त्रशिल्पादि धनुर्धरांशे।
मानाङ्गनालोहकृता मृगांशे
f. 79 नृयानचिन्ता घटभृत्नवांशे ॥३॥
मीनांशके स्थावरमित्रयोषित्-
प्रवासचिन्तां यवना निरूचुः।
द्रेका नवांशः ⟨कुरुते⟩ ऽत्र यादृक्
तादृग्विकल्पां स करोति चिन्ताम् ॥४॥
अजाविकादि प्रथमर्क्षभागे
वृषात्मके गोमहिषादिचिन्ता।
स्त्रीपुंरतिप्रीतिकृता तृतीये
चतुर्थभागे जलजाश्रया स्यात् ॥५॥
सिंहे तु सिंहादिचतुष्पदानां
कन्यारतिक्रीडनकादि षष्ठे।
तुले तु पण्यापणवारणानां
कीटे तु सर्प(ाहि)सरीसृपानाम् ॥६॥
धनुर्धरेऽश्वादिचतुष्पदानां
मृगांशके धान्यधनाम्बुजानाम्।
नीचाश्वदासादि घटादिभागे
समुद्रजानां तु झषाख्यभागे ॥७॥

Apparatus

1d °मार्थे N 4c नवांशौ तु स्त्र N 5c °रतिस्त्रीति° N 7a स्वादि° N

५९,८–११

यत्क्षेत्रभागो ऽधिबलांशको वा
    युक्तः परक्षेत्रविमिश्रभाक् स्यात्।
तस्मात्तु लग्नाभ्यधिकाश्रयाद्वा
    बलक्रमेणोपलभेत चिन्ताम् ॥८॥
वर्गोत्तमांशो ऽपि विलग्नगो वा
    तद्राशिभागोपगतो ऽपि वा स्यात्।
चिन्ताफलं स्वामिबलात् समग्रं
    दद्यात् प्रधानैरवलोकितः सः ॥९॥
एते सुवीर्या भवनेषु युक्ता
    दृष्टाः सुहृद्भिर्भवनेश्वरैश्च।
स्वोच्चेश्वरैः सौम्यतमैश्च दृष्टा-
    श्चिन्तासु कुर्वन्ति फलप्रसिद्धिम् ॥१०॥
क्षेत्रेष्वनेकात्मगुणेष्वजस्रं
    ग्रहा⟨श्च⟩रन्तः स्वगतिक्रमेण।
विकल्पनाभिर्गुणलक्षणानां
    चिन्ताविपर्यासकरा भवन्ति ॥११॥
⟨यवनजातके⟩ सूर्यभागनवांशाः ॥

Apparatus

8b प्ररक्षोम° N   8d जल° N   चिन्तं N   9b °भागो-श्चफलो N   10a एतो स्ववीर्ययभनेषु N   10b दृष्ट्वा N   °नैश्चरैश्च N   10c दृष्ट° N   11d °विपर्यांश° N   col. no space in N   कुजसूर्यभवनांश: N

60,1–6

नृपासिवृक्षाग्निसुवर्णचिन्तां
सूर्यः शशी राजधनागमार्थाम्।
भौमः सुवर्णक्षितिनायकार्थां
बुधो विवादस्वरसंश्रयार्थाम्॥१॥
शुक्रो ऽङ्गनाकांचनभूषणार्थां
गुरु(सु)रःस्थानधनादिचिन्ताम्।
शनैश्चरो विग्रहरोगचिन्तां
कुर्वीत मेषे बलसम्प्रयुक्तः॥२॥
दिवाकरेन्दू नृपसम्प्रयुक्तां
सुवर्णराज्ञाधिकृतां कुजार्कौ।
कुमारपूजाधिकृतां बुधार्कौ
f.79v नृपाङ्गनार्थां रविभार्गवौ तु॥३॥
धर्मांशजीवौ कनकार्थयुक्तां
सूर्यार्किजौ लोहचतुष्पदार्थाम्।
मेषे स(मे)तौ कुरुतः प्रचिन्तां
निरीक्षितं द्वन्द्वजमेतदेव॥४॥
चन्द्रावनेयौ बलसद्मचिन्तां
चिन्तां बुधेन्दू प्रियसङ्गमार्थाम्।
स्त्रीभूषणाज्ञादि च भार्गवेन्दू
स्थानोदयार्थां च बृहस्पतीन्दू॥५॥
⟨चन्द्रार्कजौ⟩
वाग्विग्रहोत्साहकृतां बुधारौ।
स्त्रीभूषणाख्यामपि भार्गवारौ
जीवावनेयौ क्षितिविग्रहार्थाम्॥६॥

Apparatus
1a नृपाग्नि° N  1c °कार्थं N  1d °श्रयार्थं N
2b °धनानि° N  3d रविरविभार्गवौ N  5b
°मार्थं N  5d °यार्थं N  6d °हार्थं N

60,7–12

भौमार्क⟨जौ⟩ चौर्यकृतां द्युनाते
  शुक्रेन्दवौ स्त्रीपरिभोगयुक्ताम् ।
जीवेन्दुजावीश्वरकर्मयुक्तां
  सौरेन्दुजौ डिम्भविवादयुक्ताम् ॥७॥
स्थानाङ्गनास्थां गुरुभार्गवौ तु
  शुक्रासितौ स्त्रीरतिकर्मयुक्ताम् ।
जीवासितौ कृत्यसहाययुक्तां
  चिन्तामजास्यर्क्षगतौ द्युनाते ॥८॥ मेषः ॥
सूर्ये वनारण्यचतुष्पदानां
  चन्द्रे ऽङ्गनाभोजनभूषणार्थाम् ।
भौमे तु नष्टग्रहविग्रहार्थां
  मानादरप्रीतिकृतां च सौम्ये ॥९॥
शुक्रे ऽङ्गनावस्त्रचतुष्पदार्थां
  बृहस्पतावीश्वरमन्त्रयुक्ताम् ।
शनैश्चरे नष्टरुगार्तिचिन्तां
  विद्याद्विलग्नादिगृहाश्रितेषु ॥१०॥
हिरण्ययुक्तां दिनकृच्छशाङ्का-
  वस्त्राटवीगोगृहविग्रहार्थाम् ।
रवीन्दुजौ भोज्यपणार्थचिन्ता-
  मथार्कशुक्रौ कृषिगोर्थयुक्ताम् ॥११॥
जीवार्कयोर्वाहनयानयुक्तां
  सौरार्कयोर्भृत्यकुशीलयुक्ताम् ।
चन्द्रारयोः स्त्रीकलियोगयुक्तां
  विद्यात् सुतप्रीतिकृतां बुधेन्द्वोः ॥१२॥

Apparatus

7d सूर्ये° N   8d द्युनातो: N   9a वनारम्य° N
9c °हार्थं N   10d विद्या वि° N   11c रवीन्दुज्ञौ N
12d बुधेन्द्वो: N

60, 13–18

स्त्रीभूषणाच्छादनमिन्दुशुक्रौ
    शशाङ्कजीवौ धनधान्यलाभम्।
चन्द्रासितौ गोवृषभिहृमातृ-
    रोगं च मातुः कुरुतः समेतौ ॥१३॥
कुजेन्दवौ वस्त्रसुवर्णनाशं
    पराङ्गनार्थं कुजभार्गवौ तु।
स्थानार्थदौ चावनिसूनुजीवौ
    धनार्थहानिं कुरुतः कुजार्की ॥१४॥
स्त्रीमन्दचेष्टां बुधभार्गवाभ्यां
f. 80    गुर्विन्दुजाभ्यां सुतधान्यलाभम्।
सौरेन्दुजाभ्यां तनयार्थचिन्तां
    शुक्रगुरुभ्यां तनयाङ्गनादि ॥१५॥
नीचाङ्गनां भार्गवसूर्यजाभ्यां
    जीवार्क(जा)भ्यां शकटादियानम्।
समाश्रिते द्वन्द्वमुपागताभ्यां
    विलग्नयोगोपगते वृषाख्ये ॥१६॥ वृषः ॥
सूर्यस्तु सेवाकलिशिल्पयुक्तां
    चन्द्रोऽङ्गनापत्यनिमित्तमार्तिम्।
भौमो दुरुक्तस्वजनोपतापं
    बुधः श्रुतिज्ञानविवादसिद्धिम् ॥१७॥
शुक्रोऽङ्गनागीतकलादिसिद्धिं
    गुरुर्द्विजेज्याध्ययनादिसिद्धिम्।
सौरो नृपोपद्र(व)कूटसिद्धिं
    प्रष्टुर्विदध्यान् मिथुने विलग्ने ॥१८॥

Apparatus

13c °मात्र° N   13d मात्रः N   14c °र्थयोनावनसूनु-जीव N   16d वृषलग्नं N   17b गतामत्य° N   17c सौमैन्दुरुक्त° N   18c no space in N   18d प्रष्टुं वि° N

60, 19–24

शशाङ्कसूर्यौ नृपकृत्यचिन्तां
सूर्यावनेयौ रिपुभेदमाहुः।
सूर्येन्दुजौ संश्रयसिद्धिचिन्तां
साचिव्यकृत्यादि च भार्गवार्कौ ॥१९॥
गुर्वर्कयोर्बन्धनविप्रमन्त्रयुक्तां
सौरार्कयोः शिल्पविरोधचिन्ताम्।
चन्द्रारयोर्मल्लकलिप्रयुक्तां
विद्यात् सुतप्रीतिकृतां बुधेन्द्वोः ॥२०॥
स्त्रीर्ष्याश्रया शुक्रशशाङ्कयोः स्याद्
बृहस्पतीन्द्वोः सुतसम्भवाख्या।
वाग्भेदरोगादिकृता सितेन्द्वो-
र्बुधारयोर्द्यूतविवादयुक्ता ॥२१॥
शुक्रारयोः स्त्रीकलहार्थनाशं
जीवारयोर्वादपरार्थचिन्ताम्।
सौरारयोर्द्रोहनृशंसचिन्तां
शुक्रेन्दुसून्वो रतिपण्ययुक्ताम् ॥२२॥
जीवेन्दुजाभ्यां श्रुतकाव्यचिन्ता
पैशुन्यशिल्पादि बुधासिताभ्याम्।
सुताङ्गनाख्या गुरुभार्गवाभ्यां
स्त्रीवाक्यदोषो भृगुसूर्यजाभ्याम् ॥२३॥
वृद्धाभिमानादिकृता च चिन्ता
तृतीयराशौ गुरुसूर्यजाभ्याम्।
बलीयसाप्यल्पबलः समेतो
भावानुवृत्तः पठितः परस्य ॥२४॥ मिथुनः ॥

Apparatus

20a °विप्राक्रयुक्तां N   20d बुधेन्धवोः N   21a °श्रयाच्छुक्र° N   21b °स्पतीन्धवोः N   23b बुधाशिताभ्यां N   24d भावानुवर्त्ते N

60,25–32

कर्के नृपस्त्रीगृहभङ्गमर्कः
स्त्रीभूषणस्थानसमृद्धिमिन्दुः।
कुजो ऽङ्गनाभूमिकलिव्ययं च
स्त्रीभ्यो ऽर्थपूजां च बुधो ददाति॥२५॥
स्त्रीभूषणाच्छादनदो भृ(गुः) स्यात्
f. 80v स्थानार्थमानोदयकृच्च जीवः।
धनव्ययं कर्कटके विलग्ने
चेष्टावसादं च करोति सौरः॥२६॥
पूजां नृपाभ्यो ऽर्कनिशाकराभ्यां
बन्धाभिघातां दिनकृत्कुजाभ्याम्।
नीचोपसेवां दिनकृद्बुधाभ्यां
विद्यादनर्थं रविभार्गवाभ्याम्॥२७॥
पूजां नृपाज्जीवदिवाकराभ्यां
कथार्थनां सूर्यशनैश्चराभ्याम्।
दिनप्रहारं शशिलोहिताभ्यां

॥२८–२९॥

स्त्रीसङ्गमं भार्गवचन्द्रजाभ्याम्॥३०॥
विद्यार्थलाभं शशिजाङ्गिराभ्यां
मित्रार्थहानिं शशिजार्कजाभ्याम्।
पुत्राङ्गनार्थं गुरुभार्गवाभ्यां
शुक्रासिताभ्यां व्यसनोपतापम्॥३१॥
मोहापमानं गुरुसूर्यजाभ्यां
विन्द्याद्बुधः कर्कटराशिगाभ्याम्।
गुर्विन्दुदृष्टो ऽल्पहितो ऽपि यस्या-
भिपृच्छति स्वं स च यद्गरिष्ठम्॥३२॥कर्कटः॥

Apparatus

25a सूर्यां नृप° N  25b °समृद्ध° N  25d °पूज्यां N  26a no space in N  27c नीचाब्द° N  28b कन्दर्थना N  28c दिनाप्र° N  28d–30c no space in N  30d °सङ्गमो भार्गवाभ्यां मोभ्यां N  31a °ङ्गिर्याभ्यां N  31c °नार्था N  32b °कोश्रिता° N  32c गुर्वी N त्वहितो N  31d त्तियच्छति स्वंस्वं N

60,39–45

स्त्रीवित्तसेवां भृगुजेन्दुजाभ्यां
जीवेन्दु(जा)भ्यां नृपमन्त्रगतिम्।
मौर्ख्यानृताख्यां रविजेन्दुजाभ्यां
नृपार्थलाभं गुरुभार्गवाभ्याम्॥३९॥
f. 81 शुक्रार्कजाभ्यां भयमर्थनाशं
जीवार्कजाभ्यां खलकर्मवृत्तिम्।
सिंहैकसम्पर्कमुपागताभ्यां
विद्यात् परिद्यूनकृतां च ताभ्याम्॥४०॥ सिंहः॥
सूर्यो भृशं सम्भ्रममीश्वरेभ्यः
प्रोत्साहनं पुष्टिविशिष्टमिन्दुः।
शस्त्राग्निदाहं कलिमोषमारो
बुधः सुवर्णाम्बरभूषणाप्तिम्॥४१॥
नारीमणिक्रीडनकाम्बराणां
भृगुर्गुरुर्नन्दनवस्त्रलाभम्।
सूर्यात्मजो वातकृतान् विकारान्
कन्याख्यमृक्षं समुपेत्य दद्यात्॥४२॥
स्वदेशजं विग्रहमर्कचन्द्रौ
दाहाग्निपित्तामय(मं)कुभौमौ।
श्रुतार्थशिल्पादिफलं बुधार्कौ
भूषात्मकां भार्गवभास्करौ तु॥४३॥
धर्मश्रुतार्थागममर्कजीवौ
विघ्नातमारादि शनैश्चरार्कौ।
तृष्णाज्वरं लोहितमूर्तिचन्द्रौ
गतार्थवस्त्रागममिन्दुसौम्यौ॥४४॥
स्त्रीभूषणाच्छादनमिन्दुशुक्रौ
श्रुताम्बरार्थागममिन्दुजीवौ।
शीताज्वराजीर्णमथार्कजेन्दू
खलक्रियार्थापचयं बुधारौ॥४५॥

Apparatus

39c °नृताभ्यां N 41b °हनां N 41c वस्त्राग्नि° N 43a स्वदेश्यजां N 43d भूषात्मकं N 44b शनिश्च° N

60,33–38

सुवर्णरागाग्निचतुष्पदानां
सूर्यः शशी दैन्यभयातुराणाम्।
भौमो विषाग्निक्षतसम्भ्रमाणां
बुधोऽर्चितोपास्तपरिष्कृतानाम् ॥३३॥
शुक्रो नृपस्त्रीद्विपचतुष्पदानां
जीवो नृपामात्यहयद्विपाणाम्।
शनैश्चरो नीचकुकर्मणां च
सिंहाश्रितश्चिन्तितहेतुरुक्तः ॥३४॥
नृपादिभावार्थद्वयं रवीन्द्वोः
कुजार्कयोरग्निविषप्रयुक्ताम्।
बुधार्कयोर्दुःखदितापराधं
शुक्रार्कयोः स्त्रीधनविघ्नमाहुः ॥३५॥
जीवार्कयोगे नृ(प)मन्त्रिकृत्यं
हृद्रोगरोगाद्यसितार्कयोगे।
चन्द्रारयोगे कृतवित्तहानिं
बुधेन्दुयोगे गुणकत्थनं स्यात् ॥३६॥
धनव्ययं स्त्रीकृतमिन्दुशुक्रौ
शशाङ्कजीवौ नृवरार्चनं च।
चन्द्रार्कयोर्व्याधिविपत्तिचिन्तां
कुजेन्दुजौ डिम्भविचेष्टितं च ॥३७॥
शुक्रार्किजौ गोधनभूमिनाशं
जीवावनेयौ नृपविग्रहार्थाम्।
भौमार्कपुत्रौ विषशस्त्रबाधं
मृत्युं नृपाद्वा कुरुतः क्षयं च ॥३८॥

Apparatus

33a °रागाग्र° N 35a रविन्द्वोः N 36a °मन्त्र° N 36b °सितादियोगे N 36d °कृत्थनं N 37b नवरा° N 38b °हार्थं N 38c °बाधो N 38d मृत्युर्नृ° N

60,46–51

जयोपचारं भृगुजावनेयौ
जीवावनेयौ रिपुरोगशान्तिम्।
रक्तातिसारस्य भवांश्च रोगान्
सौरावनेयौ कुरुतः क्रमं च ॥४६॥
कन्यारतिप्राप्ति(शु) सौम्यशुक्रौ
जीवेन्दवौ ज्ञातिसुतार्थलाभे।
बुधासितौ शिल्पकलिप्रयत्ने
स्फुचिद्ध्रुरू स्त्रीसुतवित्तलाभे ॥४७॥
स्त्रीगर्भशौकादिषु शुक्रसौरौ
जीवासितौ गर्भविपत्तिरुद्धम्।
एकर्क्षभारक्र(म)सन्निसक्तौ
कन्यागतौ सिद्धिकरौ भवेताम् ॥४८॥ कन्या ॥
क्षुद्रावमानाधवकलिप्रदो ऽर्कः
क्रयप्रयोगोपचयं शशाङ्कः।
स्त्रीचौर्यदौःशील्यकलिं धराजो
बुधो वणिक्पण्यकलार्थलाभम् ॥४९॥
स्त्रीसार्थलाभोपचयं च शुक्रो
गुरुर्महार्थक्रययोगसिद्धिम्।
सौरो वणिक्पण्यधनेश्वरत्वं
कुर्वीत लग्नोपगतस्तुलस्थः ॥५०॥
धर्मांशुचन्द्रौ तनुवृत्तिमर्यां
f. 81v क्रूरावमर्दं(र)वलोहिताङ्गौ।
आज्ञाविधानत्वरितां बुधार्कौ
धर्मांशुशुक्रौ परवृत्तिमेष्टाम् ॥५१॥

Apparatus

46a जयापतारं N 46b जीवावनेयौ repeated N
47a °प्राप्ति(शु) N 47b °लाभं N 47c °प्रयत्नै N
47d °द्रुरौ N 48b °विपित्तरुद्धय N 49c °दौःशिल्प°
N °कलिधराजो N 50a °लाभपचयं N 51b
°लोहिताब्जौ N 51c °त्वसितां N

60,52-57

गुरूष्णभासौ नृपबन्धुपीडां
  क्षयात्मकीं सम्पदमर्कसौरौ।
कुजामृतौ भेदमकृत्यसिद्धिं
  दम्भाप्रमेष्टागममिन्दुजेन्दू ॥५२॥
शीतांशुशुक्रौ रतिपण्यचिन्तां
  धर्मोपकारं गुरुशीतरश्मी।
मन्द्रार्कजावन्यधनार्थचर्यां
  विनादसूचादि बुधाबनेयौ ॥५३॥
स्त्रीवस्त्रलाभं क्षितिसूनुशुक्रौ
  सुवर्णपण्यागममारजीवौ।
शनैश्चरोर्वीतनयौ तु चिन्तां
  कलिव्ययायासकृतां दधाते ॥५४॥
स्त्रीवंचनार्था बुधभार्गवाभ्यां
  वित्तार्थचिन्ता गुरुचन्द्रजाभ्याम्।
व्ययार्थचिन्ता रविजेन्दुजाभ्यां
  रत्नादिचिन्ता गुरुभार्गवाभ्याम् ॥५५॥
शुक्रार्कजाभ्यां धनलाभहेतोः
  स्थिरार्थसम्प्राप्तिकलिप्रसक्ताम्।
चिन्तां वदेज्जीवशनैश्चराभ्यां
  तुलाधरे द्वन्द्वमुपागताभ्याम् ॥५६॥ तुला ॥
सूर्यो विषव्याधिवधाग्निचिन्तां
  भय(क्षय)व्याधिकृतां शशाङ्कः।
सुवर्णभोज्यारिवधादि भौमो
  बुधो ग(द)द्रव्यपणार्थचिन्ताम् ॥५७॥

Apparatus
53b °रश्मि N   54d °यांशकृतां N   55a °नार्थें N
55b गुरुभार्गनाभ्यां N   55c व्यषायार्थचिन्ता N
57b °(स्वय)° N   57c °बुधादि N

60,58–63

स्त्रीगुह्यभूषादिकृतां च शुक्रो
    गुरुर्विवादारिविरोधचिन्ताम्।
शनैश्चरः क्षुद्विषवह्निचिन्तां
    कुर्याद्विलग्नोपगतो ऽष्टमे ऽर्थे ॥५८॥
गुह्योदरासृग्रुजमर्कचन्द्रौ
    विषाग्निराजादिभयं कुजार्कौ।
सूचानृतचौरभयं बुधार्कौ
    स्त्रीवित्तविद्वज्जननमर्कशुक्रौ ॥५९॥
शत्रुश्रमोद्वेजननमर्कजीवौ
    विषारिशस्त्रार्दनमर्कसौरौ।
सुहृत्प्रकोपामयमूर्विजेन्दू
    विषास्त्रसूचाकरकं बुधेन्दू ॥६०॥
स्त्रीविग्रहेर्ष्यामदमिन्दुशुक्रौ
    चिकित्सितेष्विन्दुगुरू प्रसिद्धिम्।
चन्द्रासितौ शूलविषप्रकोपं
    बुधावनेयौ कपटप्रकोपम् ॥६१॥
स्त्रीव्याधिशोकादि च भार्गवारौ
    गुरूर्विजौ श्रेष्ठतमैर्विरोधम्।
कुजासितौ क्षुद्विषशस्त्रपीडां
    कुर्वीत इष्टे प्रतिकूलतां च ॥६२॥
f. 82 शुक्रेन्दुजाभ्यां | कृतकेन चेष्टां
    सिद्धिं भिषग्योगरसाश्रयां वा।
जीवेन्दुजाभ्यां बुधसौरयोस्तु
    कूटाभिधानव्ययवंचकं च ॥६३॥

Apparatus

58d र्के N   59d °विद्वत्सन° N   60d विशस्त्र° N °करकां N   61b °स्विन्दुगुरू N   61d कपटार्घकोपं N   62b सेष्टतमै° N   63b सिद्धै N   63d °धानाव्यय-पंचकर्म N

60,64–69

विद्याद्गुरुभ्यां वनिताधनाप्तिं
शुक्रासिताभ्यां धनपण्यराशिम्।
जीवासिताभ्यामभिचारकं तु
प्रसिद्ध्यते वृश्चिकसङ्गताभ्याम् ॥६४॥ वृश्चिकः ॥
सूर्यः सुवर्णाश्वसुहृत्प्रसिद्धिं
चन्द्रः बुधं प्राक्प्रियतां च मानम्।
द्विड्विग्रहं कौमनलाभमारो
बुधो बुधस्निग्धसुहृत्समानम् ॥६५॥
शुक्रस्तु दाराम्बरगन्धलाभं
(जीवो ऽश्वभूम्यन्नसतार्थलाभम्)।
शनैश्चरो मानमुपायसिद्धिं
धनन्धरे लग्नगतः करोति ॥६६॥
पूजां रवीन्दू मतिधर्मलाभं
पीडां सुवर्णात्मजजां कुजार्कौ।
बाधं बुधार्कावपि निग्रहं च
सुखार्थवस्त्रागममर्कशुक्रौ ॥६७॥
गजाश्वलाभं गुरुभास्करौ तु
दैन्यं भयं चापि शनैश्चरार्कौ।
सुवर्णनाशं भयमिन्दुभौमौ
समर्थितार्थोपचयं बुधेन्दू ॥६८॥
शुक्रामृतौ स्त्रीरतिवस्त्रलाभं
जीवामृतौ भोज्यसुवर्णलाभम्।
सौरामृतौ व्यसनापघात-
मारेन्दुजौ वातमरिप्रवृत्तिम् ॥६९॥

Apparatus

64a विनतां N   64b °राशीं N   64c °चारुकं N
65b प्राक्प्ररतश्च N   65c °माचो N   67b °जजं N
67d मुख्यार्थ° N   68c भयं चन्द्र° N   69d
°मन्देन्दुजौ N

60,70–75

स्फुजित्कुजौ स्त्रीकनकोपकारं
    वादार्थशिल्पां रुधिराङ्गजीवौ ।
कुर्वीत ऐश्वर्यविघातमार्तिं
    बन्धं वधं वा रुधिराङ्गसौरौ ॥७०॥
स्वकर्मलाभव्यवहारसिद्धिं
    शुक्रेन्दुजाभ्यामथ वस्त्रलाभम् ।
सिद्धिं च वादे गुरुचन्द्रजाभ्यां
    बुधासिताभ्यामृणसम्प्रवृत्तिम् ॥७१॥
स्त्रीधर्मपुत्रप्रभवं गुरूभ्यां
    शुक्रासिताभ्यां बहुवैरवृत्तिम् ।
जी(वा)सिताभ्यां नृवरार्चनानि
    विद्याद्धनुष्पाणिसमाश्रिताभ्याम् ॥७२॥धनुः॥
रविर्नृपाद्दुर्गमकार्यचेष्टां
    चन्द्रो ऽर्थनाशं स्वतनुव्यथां च ।
सुवर्णधान्याकरलाभमारो
    बुधो ऽभ्यसूयामृणवारणं च ॥७३॥
शुक्रो ऽन्ययोषिद्रतिसम्प्रयोगं
    दैन्यं गुरुर्धान्यगृहागमं च ।
f.82v लोहायसाश्मागममर्कसूनुः
    कुर्यान् मृगास्यं भवनं प्रपन्नः ॥७४॥
विद्याद्रवीन्द्वोरटनं विवादं
    सूर्यारयोर्वैरमरिप्रणाशम् ।
बुधार्कयोर्मित्रजनोपसेवां
    शुक्रारयोर्दारविनिर्गमं च ॥७५॥

Apparatus

71c बादं N   72c no space in N   72d °नुष्यानि° N   73a °र्नृबा° N   73d °वारतां N   74c °सामागम° N   74d मृगास्यां N   प्रपण्य: N   75a °द्रविन्द्वो° N

60,76–81

जीवार्कयोरुद्यमलाभवाञ्छां
    सौरार्कयोः कर्मफलेषु यत्नम्।
धरासुतेन्द्वो रमणादिलाभं
    स्त्रीमातृपक्षापचयं बुधेन्द्वोः॥७६॥
योषिद्विरोधं भृगुनन्दनेन्द्वोः
    क्षेत्रादिलाभं गुरुचन्द्रयोश्च।
मध्यान्नलाभं तु शनैश्चरेन्द्वो-
    र्बुधारयोः साहसकर्मवृत्तिम्॥७७॥
शुक्रारयोः स्त्रीहरणोपवाञ्छां
    जीवारयोरीश्वरसम्प्रयोगम्।
〈सौरारयोः〉
    ऐश्वर्यसन्तानफलं वदन्ति॥७८॥
कार्षापणादीन् भृगुजेन्दुजाभ्यां
    तृष्टौषणं जीवशशाङ्कजाभ्याम्।
प्रव्राजनाद्यर्कसुतेन्दुजाभ्यां
    लोहप्रयोगं गुरुभार्गवाभ्याम्॥७९॥
दास्यागमं भार्गवसूर्यजाभ्यां
    विभूषणं तोषणमङ्गनायाः।
परस्त्रियं जीवशनैश्चराभ्यां
    रोगं च विन्द्यान् मृगमाश्रिताभ्याम्॥८०॥मकरः॥
नृयानवेश्माश्मचतुष्पदानां
    सूर्यः शशी पानरसायनानाम्।
भौमः क्रियाध्यक्षकलाधिकानां
    बुधस्तु शिक्षानुनयात्मकानाम्॥८१॥

Apparatus

78a °हरणेयवाञ्छा N  78b शुक्रार्कयो क्रौ स्त्रीमाम-हर्सा जीवारयो° N  °योगं N  78c no space in N  79b तुष्टौषणं N  80b श्रापुपम° N  80d °मास्तृताभ्यां N

60,82–88

शुक्रो रतिस्त्रीशयनाशनानां
जीवो गृहक्षेत्रसुखास्पदानाम्।
शनैश्चरो मानपुरश्रिक्रियाणां
चिन्ताधिकारो घटिनो गृहस्थः॥८२॥
शशाङ्कसूर्यौ त्रवराधिवैर-
मर्कौर्विज्ञौ क्षुद्रतमोपघातम्।
आदित्यसौम्यौ शिशुमल्पचेष्टां
गोवाहनाप्तिं भृगुभानुमन्तौ॥८३॥
आदित्यजीवौ रथनेमिवाजं
पुष्पादिलाभं रविसूर्यजौ तु।
गोस्वादिरत्नादिषु सम्प्रवृत्तिं
ताम्रादिलोहक्षयमिन्दुभौमौ॥८४॥
कुशिल्पदासैः कलिमिन्दुजेन्दू
प्रवासवस्त्रारतिमिन्दुशुक्रौ।
स्थानासनोपार्जनमिन्दुजीवौ
निशाकरार्कौ जननीविपत्तिम्॥८५॥
f. 83 भौमेन्दुजौ | स्त्रीपशुचेष्टिताप्तिं
दासीप्रणाशं भृगुजावनेयौ।
स्थानस्य भौमाङ्गिरसौ समाप्तिं
भूम्यर्कजावश्ववसुक्षयं च॥८६॥
शुक्रेन्दुपुत्रौ कुलटानटीभ्यः
समागमं जीवबुधौ तु पूजाम्।
शिल्पं तु शिक्षां शशिजार्कजौ तु
वृद्धोपसेवां प्रि(य)सङ्गमं रैचे॥८७॥
गुरू
शुक्रार्कजौ वृद्धवधूप्रयोगम्।
भृत्यार्दनं वा त्वसिताङ्गजीवौ
नृकुम्भसंस्थौ कुरुतः समेतौ॥८८॥ कुम्भः॥

Apparatus
82d पठितो N 83a °सूरौ N 84a °वाजी N 85d °करा-
रार्कौ N 86b दास्या° N 86d °जाविश्व° N 88c दसिता° N

60,89–94

सूर्यस्त्वमित्राध्वनिमित्तमार्तिं
चन्द्रः सुहृत्स्त्रीधनपण्यलाभम्।
भौमो धनस्त्रीहरणादिदुःखं
बुधः सुहृद्वेदकलिप्रकोपम्॥८९॥
भृगुः सुहृत्स्त्रीरति⟨काम⟩लाभं
गुरुर्गृहक्षेत्रधनान्नलाभम्।
ऐश्वर्यम(ार्किस्त्व)भृताभिभिन्तां
मीनद्वयस्थो नियतं प्रकुर्यात्॥९०॥
सूर्येन्दुयोगे क्रयपण्यलाभो
भौमार्कयोगे पथि विप्रमोषः।
बुधार्कयोगे श्रमविप्रलम्भः
शुक्रार्कयोगेऽत्र सुवर्णलाभः॥९१॥
जीवार्कयोगे गृहधान्यलाभः
सौरार्कयोगे व्रतमद्यवर्या।
संक्लेममिन्दुक्षितिसूनुयोगे
स्यात् प्रीतिरिष्टे बुधचन्द्रयोगे॥९२॥
शुक्रेन्दुयो⟨गे⟩ मणिरत्नलाभो
जीवेन्दुयोगे रतिसौख्यलाभः।
सौरेन्दुयोगे
बुधारयोगे रतिविग्रहः स्यात्॥९३॥
(शुक्रारयोगे
. . . . . गोवि(?)तसिद्धि ।
⟨गुर्वार⟩योगे †वलव† ⟨गो⟩टिप्रामिः
सौरारयोगे धनरत्नहारः)॥९४॥

Apparatus
90a °रथ्यि° N 90b °धनाभ्न° N 90c एश्वर्यन° N
90d मनि° N 91b भौमर्क° N पधि N 92d
°रिष्टैर्बुध° N 93a no space in N °मीणरत्न°
N 93c सूर्येन्दुयोगे रतिसौख्यसौम्यो N (cf. 93b)
94c °टिप्राप: N

60,95–99

पण्यार्थलाभं व्य(ब)हारसिद्धिं
शुक्रेन्दवौ सौम्यगुरू तु विद्याम्।
बुधौम सङ्गं कुरुतः प्रसादा-
द्धनार्थहानिं शशि<सूनुसौरौ>॥९५॥
शुक्राङ्गिराभ्यां सुतयोषिदर्थं
स्थानागमं विद्धि(ि)प भार्गवाक्योः।
नाशं धनानां गुरुसौरयोस्तु
शोकाधिकारं झषसंस्थयोः स्यात्॥९६॥
<मीनः॥>
एकर्क्षसंस्थैर्बहुभिः प्रभिन्नां
विन्द्याद्बुधैस्तत्प्रकृतिप्रयुक्ताम्।
बाहुल्ययोगेऽत्र शुभाशुभानां
f.83v यथा विशेषो ऽत्र फलप्रदेशः॥९७॥
स्वभूमिसंस्थं बलवद्गृहं य-
द्दृष्टेश्वरस्वामिसुहृत्समेतम्।
प्रशस्तसम्पूर्णफलं तदाहु-
र्विपर्ययोगात्तु विपर्ययोक्तिः॥९८॥
मूर्त्यादिभा(वा)त्मकमृक्षचक्रं
वार्त्ताविधौ यन्नियतं प्रजानाम्।
विचित्रला(भो)पचयानि तस्मात्
व्ययानि त(त्)कालफलानि सम्यक्॥९९॥
<यवनजातक> एकर्क्षयोगमेषादिसिद्धिः॥

Apparatus

95a पुण्यार्थ° N no space in N 95b बिन्द्यात् N
95c संवत् N 96b भार्गवार्कौ N 96c नश N
96d मष° N no space in N 99d व्यव्यानि N
col. no space in N

61, 1–6

प्राग्लग्नगायां तु विलग्नमूर्तौ
मूर्त्यादरारोग्यसु(खो)त्थचिन्ता ।
विद्वीसदृष्टेस्तु शुभप्रवृत्तिः
स्यात्तत्र पापै रहितैश्च हानिः ॥१॥
स्वलग्नमूर्तौ हिबुकागतायां
प्रष्टुर्वदेत् स्थानधनार्थचिन्ताम् ।
स्थैर्यं गृहस्थस्य (हृतस्य) लाभं
सुहृत्प्रियाप्रोषितसङ्गमं च ॥२॥
अस्तङ्गतायां च विलग्नमूर्तौ
च्युतिः स्वदेशात् पथिषु प्रवृत्तिः ।
देहाङ्गनाभ्यामुपसर्जनं वा
निशारणं सङ्कुलितस्य वापि ॥३॥
मूर्त्यां तु मेषूरणमाश्रितायां
स्थाने जयं मानमुदारतां च ।
ऐश्वर्यमाज्ञाधिकृतां च चिन्तां
विन्द्यात् परेभ्यो गुरुसत्क्रियां च ॥४॥
यस्मात्तु भूमौ पठितं गृहं यद्
बलाधिकं तद्गतमिष्यते तत् ।
स्वभूमिसंस्थेश्वरसम्प्रयुक्तं
दृष्टं च यत्तेन शुभं प्रवृत्तम् ॥५॥
विभूमिसंस्थं त्वरिसम्प्रयुक्तं
जितेश्वरं वा बलहीनितार्थम् ।
यन्मूर्तितो ऽन्यत्र तदप्रशस्त-
मुद्दिष्टभावार्थगुणं निरुक्तम् ॥६॥

Apparatus

1b मूर्त्यातुरा° N  1c °दृमेर्दृ N  2b प्रसं वदेत् N  3b °शात्याधिषु N  3d निशीर्यणं N  4c कृतान्यचिन्तां N  6b °हीननार्थं N  6c यन्मूर्तितं यत्र N

61, 7–12

शशाङ्कमूर्तौ तु विलग्नगाया-
मायासमारम्भविपत्तिदुःखम् ।
स्वकार्यनाशं सुहृदर्थहानिं
विन्द्यात् स्वदेहे परिपीडनं च ॥७॥
येष्वेव लग्ने प्रविलग्नमूर्तौ
फलं निरुक्तं ग्रहवर्जितायाम् ।
तेष्वेव विन्द्याच्छशिलग्नमूर्तौ
विल⟨ग्⟩नगायां बलतः फलं च ॥८॥
कर्मस्वसिद्धिव्ययितार्थचिन्तां
स्थाने तु सूर्यप्रभवे विलग्ने ।
धर्मप्रजार्थोपचयं च सिद्धिं
स्थाने गुरोर्जातकसम्प्रयुक्ते ॥९॥
f. 84 स्थाने तु बौधे श्रुतिलेख्यशिल्प-
मित्रक्रियारम्भकृतां समृद्धिम् ।
स्वभ्रातृविद्योभकलिव्ययाध्व-
पापादिसिद्धिं विदुराबनेये ॥१०॥
स्थाने तु शौक्रे रतिरत्ननारी-
गन्धाम्बरारोग्यसुखादिचिन्ताम् ।
शानैश्चरे व्याधिविरोधबन्ध-
क्लेशश्रमारम्भनिमित्तमाहुः ॥११॥
स्थानेश्वरस्येष्टफलस्य दृष्टि-
रिष्टा न तु क्लिष्टफलप्रदस्य ।
स्थानेषु ये ऽन्योन्यगतास्तु तेषां
यदष्टवर्गे क्रमशो हितं च ॥१२॥
⟨यवनजातके चिन्ताष्टवर्गफलम् ॥⟩

Apparatus

7c °र्थसिद्धिं N   8c °च्छनिलग्न° N   8d विल( )-वस्थित्यया N   9a °व्ययमर्थ° N   9d °युतैः N   10b °क्रितां N   10d विध्नुरा° N   11a शौक्रो N   11c शानैश्चरो N   12d क्रमवीहतं N   col. no space in N.

62,1–6

एषां ग्रहक्षेत्रविकल्पलक्ष्यां
चिकित्सितास्थूलविकल्पयोगैः।
सूक्ष्मां मतिध्यानसमाधिगम्यां
चिन्तामिमां पृच्छवतो विधास्ये ॥१॥
स्याद्धातुमूलोद्भवजीवजाख्या
चिन्तेयमुक्ता त्रिविधा महद्भिः।
तेषां क्रमापक्रमतो विधान-
मुद्देशयोगेन तदा प्रधार्यम् ॥२॥
सूर्याविनेयौ विदुरत्र धातू
मूलाभिधानौ शशिसूनुसौरौ।
जीवाभिधानौ गुरुभार्गवौ तु
स्थितिस्वभावान् भजते शशाङ्कः ॥३॥
स्वे स्वे गृहे सम्पठिता य एषां
द्रेकाभिधानप्रथिताः क्रमेण।
स्युरत्र तद्योनियुतास्त एव
त्रयोऽभिधेयास्तु तदुत्क्रमेण ॥४॥
ओजोभिवर्गेषु तु धातुरर्कौ
युग्मेषु तद्वच्च शशी विधार्यः।
धातुक्रमेणौजगृहे विलग्ने
युग्मे तु जीवक्रमतो निरुक्तः ॥५॥
युग्मे तु सूर्यस्य गतांशकानि
कृत्वा भचक्रांशगुणानि सम्यक्।
तत्काल(लग्नां)शयुतानि कृत्वा
धात्वादिभिः स्यान्नियतोऽत्र शेषः ॥६॥

Apparatus

1d यत्नवतो N 2b चिन्तेषु मुक्ता N 3a विधु-रक्त् N 3d °स्वभावा N 4c दद्योनियतोस्त N 4d °स्तददन् क्रमेण N 6a गतान्म्रहानिं N 6b भचक्रस्य N 6c °(लग्ना)गयुभा ानि N 6d °न्नियमो N

62,7–13

राश्यंशकं स्वं द्विहृतं ‹म› लब्धा-
　मधाम्यधाम्यो द्विविधः स धातुः ।
धाम्यानि लोहानि तु षड्विधानि
　संवर्गयोगात्तु भवेत् त्रिषष्टिः ॥७॥
सुवर्णरूप्यत्रपुसीसताम्र-
　कृष्णायसः षड्भिरुपाहृताः स्युः ।
॥८॥
।

शुक्रे वदेन्मौक्तिकमिन्दुसूनो-
　र्युक्तं शनैश्चारिणि शस्त्रमाहुः ॥९॥
।

f.84v द्विके त्रिके वा विदुरत्र यौक्तिं
　निजर्क्षसंस्थे तु पिशाचलोहम् ॥१०॥
अधाम्यमप्यत्र वदन्ति धातुं
　मनःशिलाहिङ्गुलकाम्लशालम् ।
सुराष्ट्रजातं रसको ऽथ पङ्क-
　स्तथांजनं वालिकया समानम् ॥११॥
स्युश्चिङ्गिटाः शर्करया समानाः
　कासीसमृत्कर्दमगैरिकाश्च ।
ताप्यं तथा माक्षिक एव धातु-
　र्ये चापि सिद्धाः प्रतिवापनार्थम् ॥१२॥
एतत् प्रसंख्याय विभज्य शेषं
　ततो वदेद्द्रव्यमधाम्यसंज्ञम् ।
ग्रहैस्तु सम्पूर्णफलैर्विधास्ये
　वैशेषिकं तत्र परीक्ष्य वाच्यम् ॥१३॥

Apparatus

7a °शाकेशे N　लब्धो N　7b मासोप्यधामो N
7c त्र षड्वि° N　8b °यसोः N　8c–9b no space in N
9c °किमिन्दु° N　10a–b no space in N　11d तथां° N
12a स्याश्चि° N　12c ताप्यस्तथा N　13b °व्यवधा-
म्यसंज्ञां N　13c °र्विधाने N

62,14–19

अङ्गारके हिङ्गुलकं वदन्ति
    सौम्ये शिलालं तु गुरौ तु ताप्यम्।
भृगौ तु चिक्कावनशर्करः स्या-
    द्रवौ तु ताम्रो रसकश्च सिद्धः ॥१४॥
चन्द्रे तु शङ्खा जलभूमिजास्तु
    शनैश्चरे जिङ्गिदमश्म च स्यात्।
मिश्रैर्ग्रहैः सङ्करधातुकल्पै-
    र्विज्ञेयमन्वर्थमधौम्ययोनौ ॥१५॥
स्यान्मूलयोनिर्गणिते नलं वा
    मूलं च कन्दं च तथा च गण्डम्।
लताश्च वल्ल्यश्च तथा च गुल्मा-
    स्त्वक्पत्रपुष्पानि फलानि चैव ॥१६॥
तृणानि धान्यानि तथेक्षुसारा
    रसाश्च निर्याससमुद्भवाय।
शाकानि पुष्पानि तथौषधानि
    गन्धौषधिद्रव्यविषानि चैव ॥१७॥
(एतत् प्रसंख्याय हरान् ततस्तु
    शेषं वदेन्मूलविकं(ल्पो)सिद्धिम्।
वीर्यप्रधानैर्नियतानि चात्र
    द्रव्याणि विद्याद्भुवनाधिपैश्च ॥१८॥
भौमे तु तीक्ष्णाम्लमशान्ति मूलं
    सूर्ये तु तिक्तोष्णविषौषधास्यम्।
चन्द्रे तु शीतं मधुरं जलस्थं
    पुष्पं मृदुस्निग्धरसाश्रयं च ॥१९॥

Apparatus

14c भृगौ] अर्के N    16b गण्डं N    16c वल्यश्च N
16d °स्वक्पत्र° N    17d गन्धौषधि° N    18a हरोद्धृतं
तु N    18b °विगासिद्धि N    19a तीक्ष्णाम्बु° N

62, 20-25

जीवे तु धान्यान्य(पि कीटिकानि
सस्नेहवन्त्यम्लफलानि चैव)।
सस्नेहमन्नं मधुरं फलाढ्यं
सुगन्धिचित्रं च वदन्ति शुक्रे ॥२०॥
त्वक्पत्रनिर्यासविभावितानि
बौधानि शाकानि च गन्धवन्ति।
द्रव्याणि शौद्राण्यसगन्धवन्ति
सौरस्य वि(प्यो)ल्लशनादि चैव ॥२१॥
गुरोस्तु मूलप्रकृतौ स्ववर्गे
वासांसि विद्याद्धिवीर्यवन्ति।
चित्राणि शुक्रस्य विलासिनीनां
भौमस्य वर्मावरणाम्बराणि ॥२२॥
बुधस्य वासांसि कुमारकाणां
क्षौमाणि पालाशकवर्णवन्ति।
चन्द्रानुकूलानि विलासिनीनां
कार्पासकान्येव गुरुत्ववन्ति ॥२३॥
लोमौर्णिकान्येव रवौ तु विद्यात्
f. 85 |चर्माणि तान्येव शनैश्चरे स्युः।
कौशेयवासांस्यपि तूच्चसंस्थे
स्युश्चित्रपट्टा भृगुजेन्विते च ॥२४॥
सूचीविबद्धानि विबन्धमार्ग-
स्थितिप्रवेष्यश्च बृहस्पतौ तु।
नीचारि(भ)स्थे विजितारिदृष्टे
तदा तु कापालिककच्छमाहुः ॥२५॥

Apparatus

20a °विनानि N 20b °न्त्यम्बु° N 20c सुस्नेहमव्यं N 21b शौक्राणि च N 21a शूद्राण्य° N 22a गुरो तु N 22b °वीर्यवन्तं N 23b पालांशु° N 23c चन्द्रोद्यकू° N 23d गुरौ वदन्ति N 24a विद्याद् N 24d गुरुजेन्विते N 25b °प्रवेष्याश्च N बृहस्पते N

62,26–31

इतीरिता मूलविकल्पयोनि-
    र्ब(हु)प्रकारां शृणु जीवयोनिम्।
तिर्यक् मनुष्यांश्च तथा च देवां-
    श्चारैर्विशिष्टैस्तु वदन्ति देवाः॥२६॥
कैश्चिद्द्विपादा बहुभिश्च पादै-
    रनेकपादा विहितास्तु जीवाः।
जलं च भूमिं च तथान्तरिक्षं
    स्थानानि विद्यात् त्रिविधानि चैषाम्॥२७॥
स्त्रियं पुमांसं च नपुंसकं च
    सर्वत्र लिङ्गत्रयमेतदुक्तम्।
एतत् प्रसंख्याय विहृत्य भागं
    शेषं तु जीवं विधिलक्ष्यमाहुः॥२८॥
देवान् वदेत् सौम्यतमैर्विलग्नैः
    प्रवृद्धवीर्यैरशुभैस्तिरश्च।
संमिश्रितैर्मानुषयोनिरुक्ता
    मनुष्यसंज्ञैर्क्षमुपागतैश्च॥२९॥
तिर्यग्गृहस्थैः प्रवदन्ति रक्षो
    ह्यारण्यसंज्ञैः स्युररण्यजानाम्।
तिर्यक्षु युक्ता भवनेषु रौद्रा-
    स्तथापदानां प्रवदन्ति योनिम्॥३०॥
क्रमोपलब्धाय विजीवयोनिः
    स्वोच्चेषु सौम्याः स्वगृहेषु वा स्युः।
देवाश्रितानां प्रवदन्ति चिन्तां
    क्रूरैस्तु यक्षासुरराक्षसानाम्॥३१॥

Apparatus

26c मनुष्यश्च N    28b लिङ्गात्रय° N    29a देवा N
29b °वीर्यैरनदैतिरश्च N    30b हिरण्यसंज्ञैः N    30d
°स्तेष्वाप° N    31c देवाश्रितत्र N    न्तिन्तां N

62,32-37

सूर्येण राज्ञः क्षितिजेन योधान्
जीवेन वैद्यान् भृगुजेन मुख्यान् ।
कुटुम्बिनो वाथ बुधेन शिल्प-
क्रियारतान् सूर्यसुतेन दासान् ॥३२॥
चन्द्रेण राशीश्वरवन्नृजातीन्
विद्याद्यदा मानुषयोनिरिष्टा ।
क्षेत्रेश्वरस्थानकृतान् विशेषै-
र्लिङ्गैर्विशिष्टांश्च गुणांश्च विद्यात् ॥३३॥
क्षेत्रेषु तिर्यक्षु ति(र)श्च योना-
वुपाहृतायां च तथा तिरश्चः ।
तत्स्वामिभिस्तद्भवनाश्रितैर्वा
तांल्लक्षयित्वान्यगृहेश्वरैश्च ॥३४॥
ग्रामाटवीशैलजलाश्रयेषु
क्षेत्रेश्वरः स्वां विदधाति योनिम् ।
f.85v |अन्यर्क्षगस्तु स्वगृहानुबन्धै-
र्विकल्पयेत्यात्मगुणैश्च तत्स्थः ॥३५॥
आरण्यसंचर्क्षपतिर्विकल्पं
ग्रामेषु तद्योनिसमं विदध्यात् ।
ग्रामेश्वरस्तद्वदरण्ययात-
स्तच्छीलसादृश्यविकल्पकृत् स्यात् ॥३६॥
एवं ज(ला)रण्यबिलाश्रयाणां
परस्परस्थानविकल्पनानि ।
जातींस्तिरश्चः प्रसमीक्ष्य विद्या-
न्नृदेवयोनावपि कल्पनैषा ॥३७॥

Apparatus

32a योगां N 32b विद्यां N मुख्यां N 32d °रतां N दासां N 33c °कृतं N 34a तिरश्युक्ष्य ति(र)श्च N 34c °स्तद्भवनाशृतैर्वा N 35c °र्क्षगे तु N 36a °र्क्षगतिर्विकल्पो N 36c °श्वरतद्वदरण्यजाते° N 37b परंपर° N 37c जातींस्तिरश्चा N

62,38–43

द्रेकाणमुख्यातगतं च राशा-
वपि ग्रहं वीर्यधुरन्धरं वा।
समीक्ष्य रूपं वपुराहितं च
चिन्ताविधाने मतिमान् विदध्यात्॥३८॥
एतद्गृहैरुत्तमवीर्यवद्भिः
केन्द्राश्रितैर्जीवविधानमुक्तम्।
अन्योन्यराशिक्रमसङ्गतैश्च
चिन्तामभिव्यक्तगुणां विधास्ये॥३९॥
मेषे तु मेषादिगणादिचिन्ता
सूर्येण राजावणिगौर्णिकानाम्।
चन्द्रेण गुर्वीश्वरयोषितां च
जीवेन साचिव्यपुरस्कृतानाम्॥४०॥
शुक्रेण सङ्केतकसुन्दरीणां
भौमेन चौरध्वजिनीपतीनाम्।
बुधेन कृत्येश्वरसत्कृतानां
सौरेण तु प्रेष्यजनातुराणाम्॥४१॥<मेषः॥>
चिन्ता वृषे गोवृषसङ्गमार्था
सूर्येण खड्गोष्ट्रखरद्विपानाम्।
चन्द्रेण सिद्धाप्सरसासुराणां
जीवेन वित्तेश्वरचारणानाम्॥४२॥
शुक्रेण वित्तेश्वरसुन्दरीणां
भौमेन गोपालकयन्त्रकाणाम्।
बुधेन तद्विक्रयपण्डितानां
सौरे महिष्यश्चमराश्च वाच्याः॥४३॥

Apparatus

38b वीर्यपुरंधुरं N 39a °रुक्तम° N 39b °मुक्तं N 40b राज्यं वणिजौ° N 40c °योषितं N 41b °ध्वजनी° N 41d no space in N 42b खत्गोष्ठ° N 43b °यन्तकाणां N

62,४४–४९

शुक्रो वृषस्थो यदि पूर्वलग्ने
वृषांशके वापि चतुष्पदर्क्षे ।
गोहृत्तकी स्यान्नियतं प्रचित्तिः
सिद्धिप्रणाशा ग्रहवर्गतुल्या ॥४४॥
रवौ चलस्थे प्रवदन्ति ताम्रं
प्राक्कर्मतः कर्तरिताडितं च ।
चन्द्रे तु सारोत्करकुन्दशुभ्रा
गौरी गुरावक्षतकर्णपत्रम् ॥४५॥
शुक्रे तु चित्रा मुखतश्च पुण्ड्रं
पयस्विनी कर्णकृतैकलक्षा ।
भौमे सुरक्ता दलिताग्रकर्णी
हृद्रोगभावा परिशण्डिता च ॥४६॥
f.86 बुधे विवर्णामनुपाटलां च
सौरे तु तन्वीं विकटोत्कटां च ।
अन्योन्यवर्गस्थितिभिर्वि(क)ल्पान्
वपुःसु वर्णेषु च विद्धि तासाम् ॥४७॥
शशाङ्कशृङ्गापचये ऽल्पशृङ्गी
चन्द्रे ऽक्षये स्यात्तु विशालशृङ्गी ।
चन्द्रर्क्षचारांशवशाच्च विद्या-
च्छृङ्गानि चन्द्रग्रहसङ्गमाच्च ॥४८॥
शुक्रस्य चारर्क्षवशाच्च वाच्यं
पुंस्त्रीत्वमेषां च विशब्दितानाम् ।
शुभाशुभस्थानभृदीश्वरेभ्यो
लाभो विनाशश्च गवां प्रसाध्यः ॥४९॥<वृषः॥>

Apparatus

44c स्यान्नयतं N 44d सिद्ध° N °तुस्थं N 45b °ताडितां N 45d °पात्रं N 46a पुण्ड्रां N 46c सुरक्तं N 46d °भावान्यरिशण्डिकां N 47c °वर्णस्थितिभिर्वि ल्पा N 47d दुयःसु N भाषां N 48a °शृङ्गोपचयो N 48b क्षयः N 49d no space in N

62, 50-54

पुंस्त्री विलग्ने तु तृतीयराशौ
तत्स्थे रवौ दैत्यकृतां विदध्यात्।
चन्द्रेण दाराश्रयशिल्पिनां च
जीवेन शस्त्रास्त्रविपश्चितानाम्॥५०॥
शुक्रेण सङ्गीतविचक्षणानां
भौमेन कृच्छ्रास्त्रलिपिक्रियाणाम्।
बुधेन काव्यश्रुतिगर्वितानां
सौरेण विद्यात् प्रमदोद्धुतानाम्॥५१॥ <मिथुनः॥>
चतुर्थराशौ तु जलोद्भवाः स्यु-
र्दंष्ट्रैर्विशिष्टा रविणाम्बुजास्याः।
चन्द्रेण मीना नृपयोषितश्च
जीवेन सिद्धाप्सरसासुराश्च॥५२॥
शुक्रेण नार्यो मधुवारिजाश्च
भौमेन मांसास्त्रजवध्यनिघ्नाः।
बुधेन विद्धाम्बुचरांश्छगांश्च
सौरेण विद्याच्छिशुमारनक्रान्॥५३॥ कर्कटः॥
मांसास्थ्यसृग्भल्लवृकादि सिंहे
सिंहे रवौ म्लेच्छगणांश्च विद्यात्।
चन्द्रेण दुःखैः परितो ऽतुरांश्च
जीवेन विद्यात् करिणो हयांश्च॥५४॥

Apparatus

50a पंस्त्रीत्वमोजेषु N 50b तस्थे N 50c दाराश्म° N 51b कृच्छस्त्र° N 51d प्रवकोद्धु° N no space in N 52b °दंष्ट्रं वि° N 52c माना- नृप° N 52d °रसः सुतास्च N 53b मन्त्र्या- स्त्रजमध्य° N 53c विद्धाम्बुचराङ्गास्च N 54a मांसाग्न्यसृक्भिन्नवृकादि थिंहाः N 54b °गणैश्च N 54c दुःखपरितातुरांश्च N

62,55–60

शुक्रे महिष्यश्चमराश्छगाश्च
तरक्षुमार्जारवृकाः कुजे स्युः ।
बुधे कुरून् शालभगृध्रहंसान्
सौरे स्युरुष्ट्रा विबला वराहाः ॥५५॥ सिंहः ॥
कुमारकन्यार्थनकन्यकानां
षष्ठे पितॄणां भिषजां च सूर्यः ।
धात्रीसखीमण्डनशोभितानां
चन्द्रो गुरुः स्याद्विदुषां गुरूणाम् ॥५६॥
शुक्रस्तु जायाप्रणयाङ्गनानां
भौमश्च सापत्यसमानजानाम् ।
बुधो गृहस्थानविदां सुराणां
शनैश्चरो प्रेष्यवशात्मकानाम् ॥५७॥ कन्या
f.86v तुले तु पण्यक्रयविक्रयज्ञान्
सूर्येण मूर्खानथ सूचिकान् वा ।
चन्द्रेण विद्यान् मणिपण्यजीवान्
जीवेन तु श्रेष्ठिवणिग्वरिष्ठान् ॥५८॥
शुक्रेण मुक्तामणिरत्नपण्यान्
सुवर्णकारान् क्षितिजेन विद्यात् ।
बुधेन युक्त्याश्रयशिल्पपण्यान्
सौरेण लोहाश्मकृरांश्च रम्यान् ॥५९॥ ⟨तुला ॥⟩
स्युः कीटसर्पादिगणाश्च कीटे
व्याडा महन्तो ऽजगराश्च सूर्ये ।
चन्द्रेण जीवा बिलचारिणश्च
जीवेन गोबभ्रुकपिंजलाद्याः ॥६०॥

Apparatus

55c शालकगृद्धसंहान् N   55d स्युरुष्का N
58a °यज्ञः N   58b मूर्ख्यानथ N   सूतिकं म्वा N
58c °जीवा N   59c °पण्या N   59d लोहास्सृक्-रात्न N

62,61–66

बभ्रूद्रवाश्यान् भृगुजेन प्राश्यान्
भौमेन सर्पानथ वृश्चिकांश्च ।
वाल्मीकभूतासुरमक्षिजातीन्
बुधेन सौरेण वदेत् कृमींश्च ॥६१॥ वृश्चिकः ॥
धनुर्धरेऽश्वान् पुरुषांश्च सूरान्
सूर्येण चान्यान् द्विरदांश्च विन्द्यात् ।
चन्द्रेण दीक्षाभिरतान् द्विजांश्च
जीवेन विप्रान् विदुषस्तथाश्वान् ॥६२॥
शुक्रेण चिन्तामथ गोहृयांश्च
स्तेनामसङ्ग्रामनटान् कुजेन ।
इष्वस्त्रयन्त्रार्थविदो बुधेन
विद्याश्च सौरेण तथा स्वशास्त्रान् ॥६३॥ धनुः ॥
मृगान् मृगास्ये मकरांश्च विप्रान्
सूर्येण मत्स्यादिवराहसिंहान् ।
विद्धीन्दुना मत्स्यपशुद्विजांश्च
जीवेन भासाङ्गखरोष्ट्रजातीन् ॥६४॥
शुक्रेण प्राश्यांश्च पशूंश्च विद्यात्
स्युः पक्षिणस्तोयचरा बुधेन ।
भौमेन सूरान्नृपनायकांश्च
सौरेण विड्भश्वशृगालयोनिम् ॥६५॥ मकरः ॥
कुम्भे वदेत् प्रेष्यजडान् विलग्ने
सूर्येण तन्त्रार्थभृतो नराः स्युः ।
चन्द्रेण नाडाम्बुजकर्तयश्च
जीवेन शान्तायतयोषिदास्याः ॥६६॥

Apparatus

61a पाशा N 61c °भूतातुर° N 62a श्वा N 62b चान्या N 62c °रताद्विजांश्च N 63a चिन्तानथ N 63b °नटा N 64a मृगा N 64d °जातान् N 65a पाशींश्च N 65d विच्छुश्च° N 66a °जलान् N 66b तन्त्रास्त्र° N 66c °कत्तयस्व N 66d °योषिचास्याः N

62,67-72

शुक्रेण नारी नृतिनाट्यजीवा-
स्तीव्रेण हिंस्रांश्च वदन्ति भौमे।
बुधे रतिद्यूतकरान् विटांश्च
नारी वदेत् प्रव्रजितांश्च सौरे ॥६७॥ कुम्भः ॥
मीने तु मत्स्यास्तिमिकूर्मशंखा
ग्राहा रवौ स्युर्मकरोरगाश्च।
चन्द्रे स्त्रियः सिद्धतपस्विनश्च
जीवेन यात्रानुचराः सुराश्च ॥६८॥
शुक्रेण विद्याद्गुरुदेवसंघान्
f. 87 भौमेन रौद्रान् जलराक्षसांश्च।
सौम्येन पोतप्लवकारुकांश्च
सौरेण कैवर्तकमत्स्यजीवान् ॥६९॥ मीनः ॥
बृहस्पतौ भार्गवसौम्यदृष्टे
विद्यान्नृसंघातनिवेशनानि।
राशीश्वराणामनुदर्शनैश्च
क्षेत्रेषु विद्यान्नरपूगचिन्ताम् ॥७०॥
मेषे तु सैन्याजपशुप्रवेशान्
विद्याद्वृषे गोकुलसङ्कुलांश्च।
ग्रामान् तृतीये द्विजसंघघुष्टान्
विद्याच्चतुर्थे विबुधालयानि ॥७१॥
दुर्गाणि सिंहे नगराणि चाहुः
षष्ठे सुराशारसभानिवेशान्।
वीथ्यस्तुले स्युः पुरपट्टनानि
स्युरष्टमे तस्करबन्धशालाः ॥७२॥

Apparatus

67a कङ्कतीजटीव्रान् N 67b तीव्रेण N 67d नारीन् N 68a तिमि° N °शंखान् N 68b ग्रहान् N 69a °संघा N 69b रौजा N 69d °जीवा N 70d °चिन्तान् N 71b वृषे N 71c ग्रामा N °घुष्टा N 72c वीथ्या तुले N

62,73-75

स्पृर्धन्विनीज्याध्ययनारतानां
स्थानानि भृत्याश्रयिणां मृगे च।
कुम्भे वदेत् पापजनाधिवासान्
मीने बृहत्कोशभृतां गृहाणि॥७३॥
एवंविधा जीवविधानयोनौ
राश्यंशराश्योः प्रभवाश्च जीवाः।
ग्रहर्क्षभागस्थितियोगतश्च
वाच्या विलग्नर्क्षयुजश्च भागाः॥७४॥
यथैव हि स्वैः स्वगृहात्मभावैः
सप्त ग्रहाणां विधिरीरितोऽयम्।
तथैव धातावपि योगलब्धं
मूलक्रियोपायविधानमेतत्॥७५॥
⟨यवनजातके⟩ जीवमूलधातुविधानयोनिः॥

Apparatus

73a °न्विनीव्वा° N   73b भृत्यश्र° N   73c °वासा N   73d °भृतोद्गृहाणि N   74b रास्यंशरंसेः N   74d विलग्नार्क्ष° N   75b गृहाणां N   °रीतितो N   col. no space in N   °मूलवितुविधान° N

63,1–6

अतो बुधाः प्राक् परिगण्य सम्यग्
    ध्यात्वादिवर्गान्नियतान्तरात्मा ।
चिन्ताविकल्पार्णवमप्रमेय-
    मिष्ट्वा मुनीनामृगधीतयुक्तः ॥१॥
युगं तु सूर्यस्य विलग्नराशे-
    र्हरेत् पृथक् सप्तभिरेकयुक्तम् ।
शेषाद्ग्रहाणामपनीय वर्गान्
    शेषस्य वर्गेण तु सङ्गुणं तत् ॥२॥
भौमस्य सप्त द्विगुणा रवेस्तु
    स्युः पंच सप्त त्रिगुणा हिमांशोः ।
नवैन्दवस्याङ्गिरसस्तथाष्टौ
    त्रयो भृगोरेकदश स्युरार्केः ॥३॥
केन्द्राणि केन्द्रोपगतानि कृत्वा
    केन्द्रांशकैर्वा प्रणिहत्य केन्द्रम् ।
गृहाश्रितं वापि च तत्स्ववर्गै-
    स्त्रिकोणयुक्तस्य तु वा त्रिकोणैः ॥४॥
f. 87v †केन्द्राणि हन्याच्च रवेः पदैर्वा
    प्रष्ठप्रदैर्वेन्दुयुगांशकैर्वा† ।
उद्दिष्टहारोद्धृतवर्गशेषैः
    कार्यो निरुद्दिष्टविधिर्यथावत् ॥५॥
वर्गाधिपं केन्द्रगतं तु केचि-
    दिच्छन्ति चिन्ताधिफल(स्य) हेतुम् ।
केन्द्रे स्वराश्युच्चभृति स्थितो वा
    कुर्वीत तद्वर्गगुणोपदेशम् ॥६॥

Apparatus

1a सम्यक् N 1b °नियतोन्ततात्म N 1d मिष्टा N 2a युगे N 2b °हरः N °युक्ताः N 2c सेषा ग्रहाणमप-नीय वर्गात् N 3a °गुणे N 3b सप्त पंच N 3c सैसैन्द° N 3d भृगोस्तेधिदशाः N 4c ग्रहाशृतं N 5c उद्दिष्ट° N 6b °दिस्यन्ति N °फले N 6c केन्द्रः N °भृतः स्थितान् N

63,7–8

धात्वादि लब्धं यद्विग्रहे तद्
विज्ञेयमूलग्रहलक्षणोत्थम्।
धात्वादिषु क्षेत्रपरिक्रमस्थैः
प्रोक्तो ग्रहैरेष विनिश्चयो ऽयम्॥७॥
इत्येतदाध्यानवतः समस्तं
चिन्तामुखज्ञानविधा(न)मुक्तम्।
अतः परं लोकयशोविभूत्यै
प्रणष्टचिन्तार्थविधिं विधास्ये॥८॥
⟨यवनजातके चिन्ताविधानम्॥⟩

Apparatus

7a त N   7d विनिश्चियो यत् N   8a °दाध्यात्मवतः N   col. no space in N

64, 1–6

यदास्तगाः स्युर्घटकीटसिंहाः
स्वपेक्षितास्तद्भवनांशका वा ।
स्वे स्वेषु वांशेष्वधिपा विनिष्टाः
कुजोऽधिको वापि स वक्ति नष्टम् ॥१॥
यदा तु कोशाष्टमगः स्वभेशः
कोशाश्रितः स्यादशुभो ऽरिदृष्टः ।
कोशेश्वरो वास्तगतो ऽहृतद्विड्
द्विड्नीचराशावपि तत्र नष्टम् ॥२॥
उच्चर्क्षभागे ऽस्तगतेश्वरो वा
लग्नस्तदृक्षे च तदीशदृष्टः ।
रौद्रो विलग्ने भवने च तस्य
प्रणष्टमित्याहुरनिष्टदृग्भिः ॥३॥
ग्रहाश्रयं तत्र तु भागजातं
बोधव्यमृत्त्वांशकमात्मकं वा ।
विद्यान्निरुद्दिष्टविधिं क्रमेण
लग्नास्तयोर्योगविशेषतश्च ॥४॥
उच्चैः स्थितैर्नष्टमथोच्चदेशान्
नभस्तलस्थैर्बलिभिश्च तद्वत् ।
अधःस्थितैस्तद्विनिपातदेशान्
नीचैः स्थितैः स्यादथ नीचदेशात् ॥५॥
महीतलोद्देशमुदीक्ष्य चास्तात्
स्वामीक्षिताल्लग्नगताद्गृहाद्वा ।
ग्रामस्थलारण्यजलोपगत्वाद्
भुवः प्रदेशप्रतिदेशना स्यात् ॥६॥

Apparatus

1a यदास्तग N 1b स्वंसेक्षिता° N 2a स्यभेशः N
2b कोशासृतः N 2c वास्तमने N 2d नष्टः N
3a स्तमने° N 3c तत्र N 5c °निघ्नात° N 6a
महीस्तलो° N 6b °क्षिता लग्नगता गृहाद्वा N

64, 7–12

ग्रहो ऽस्तगो लग्नगतो ऽपि वा य-
स्तदा स चौराकृतिवर्णहेतुः।
द्रेकानुबन्धायुधवर्णरूपा-
ण्युपादिशेत् तद्ग्रहयोस्तयोश्च ॥७॥
स्वंस्वामिनः स्यात् स्वजने ऽपहर्ता
f. 88 मित्रादसौ ऽर्कादितरत्र | ते स्युः।
अन्येश्वरे विद्धि जने परोत्थं
संस्थापितं द्रेकवदस्य रूपम् ॥८॥
ओजे पुमान् स्यात् पुरुषाख्यदृष्टे
युग्मे भवेत् स्त्र्याख्यनिरीक्षिते स्त्री।
तत्स्थात् ग्रहाल्लिङ्गविकल्पना तु
द्रेकाणहोरेश्वरदृष्टमूर्तेः ॥९॥
चरेष्ववक्रान्तगतिं गतः स्यात्
स्थिरेष्वदू(र)स्थविनिर्गतिस्तु।
ग्रहाद्गृहाद्वा दिगदीक्ष्य वाच्या
सूर्यास्तयोरन्त(र)तो गतिश्च ॥१०॥
स्तेनप्रमाणं ग्रहदृक्प्रमाणै-
र्वाच्यं शशाङ्कास्तगतान्तराद्वा।
होरापतेरिन्दुयुजो गृ(हा)द्वा
द्वारं विनिश्चितृधने गृहे स्यात् ॥११॥
ग्रामस्थलारण्यजलाख्यमुच्चं
स्वनीचमुच्चं च तथा भवेद्यत्।
तत्कालहोरेश्वरमन्द्रयोगे
तद्भूमिदेशे भवने च तत् स्यात् ॥१२॥

Apparatus

7c द्रेकाणबन्धा° N 8a स्वस्वामिनो N °जनोप° N
8b °दिभिरत्र N 8c जनपरात्थ N 8d संस्थापद्
द्रेकपदस्य N 9a षुमान्सात् N °दृष्टैः N 9c तस्था
ग्रहा लिङ्ग° N 10a °क्रान्तमनिर्गतः N 10b °र्गतेषु N
11a ग्रहवृक्प्र° N 11b °स्तमदन्त° N

64,13-15

राश्यादिमध्यान्तगते तु तस्मिन्
　　ग्रहे विलग्नर्क्षगते तथा वा ।
स्याद्यादिमध्यान्तगृहादिभागे
　　तदुच्चनीचेतरभूमिसंस्थम् ॥१३॥
सौम्यग्रहर्क्षे शुभदृष्टरूपे
　　बलाधिके लग्नपतौ शुभे वा ।
स्वोच्चेश्वरे स्वामिनिरीक्षिते वा
　　नष्टस्य लाभः सहिते ऽपि वा स्यात् ॥१४॥
अनिष्टयुक्ते व्यवलोकिते ऽपि
　　कालप्रकर्षेण वदन्ति लाभम् ।
विपर्ययात् पापगृहेषु चैव
　　द्रेकास् तत्स्थास् च कल्पनैषा ॥१५॥
⟨यवनजातके प्रणष्टचिन्ता ॥⟩

Apparatus

13a राश्यदि° N　13c स्याद्व्यादि° N　13d तस्युच्च° N
14b लग्नपतिः N　14c स्वोच्चेश्वर N　14d लाभं N
col. no space in N

65,1-6

सूर्यारसौरर्वगतो ऽथसंस्थो
लग्ने शशी नीचगृहे ऽरिभे वा।
नीचारिभागेष्वशुभेक्षितो वा
पृच्छा तदा व्याधिनिमित्तजा स्यात् ॥१॥
मित्रारिवर्गांशपरिक्रमस्थे
व्याधिः क्रमस्थेष्ववगम्यभारः।
प्रष्टुः स्वमूर्त्याः शयनं वयः स्या-
देष्वेव योगेषु धनादिषूक्तम् ॥२॥
लग्ने यदारो ऽस्तगतो ऽर्कसूनु-
रर्को ऽष्टमे ऽन्योन्यविपर्ययो वा।
व्यालम्बिनो मन्दबलाश्च सौम्याः
क्षीणायुषं रोगिनमत्र विन्द्यात् ॥३॥
सौरांशके लग्नगतः शशाङ्कः
f.88v क्षीणो ऽस्तगः सौरकुजांशकस्थः।
सौम्येष्वपश्यत्स्वशुभेक्षितश्च
तत्रा(तुरा जीवविव)र्जिताः स्युः ॥४॥
सौरांशके लग्नगतं यदारो
बलाधिकं पश्यति भास्करीर्वा।
लग्ना(त्तु) जीवावनिसूनुदृष्ट-
स्तत्रायुराश्वेव जहाति रोगी ॥५॥
लग्ने शशी सौरगृहांशके वा
कुजो ऽस्तगो भास्करनन्दनो वा।
पापो ऽष्टमे क्षीणबलाश्च सौम्या-
स्तत्रातुरः स्यात् परिनिष्ठितायुः ॥६॥

Apparatus
1a °गतो स्वसंस्थो N 1b लग्नः N 1c °शुभैक्षितो N 2b °गम्यवाच्यः N 2c स्वमूर्त्या शयने स्व-यस्य° N 2d °षूक्तिः N 3a लग्नौ N स्तमनेक° N 4b °स्थ्याः N 4d स्याः N 5c लग्ना(नि) N 6c ष्टमः N

65,7–12

लग्ने ऽर्कजातो ऽष्टमके शशाङ्कः
  कुजार्कदृष्टो ऽर्कसुतांशके वा ।
पापेक्षितो वाष्टमगो ऽत्र रौद्र-
  स्तत्रापि रोगी मृत एव वाच्यः ॥७॥
स्वमूर्तिपंचाष्टमसप्तमेषु
  स्थानेष्विमे स्युर्यदि मृत्युयोगाः ।
सौम्यैरयुक्ता निरवेक्षिताश्च
  ते रोगिनामन्तफलाः स्युराशु ॥८॥
योगा य आत्मोपचयात्मकेषु
  स्थानेष्वनिष्टैरपि सङ्गताः स्युः ।
शुभैः समेताः परिलक्षिताश्च
  न रोगिनां तेषु वदन्ति मृत्युम् ॥९॥
अनार्ययुक्तान्ययदान्यपि स्युः
  स्थानान्यनिष्टानि विलग्नगानि ।
व्याध्यादिभिः पापशुभात्मकानि
  सौम्यैर(पी)ष्टानि फलैर्वदन्ति ॥१०॥
सौम्येश्वरक्षेत्रगतो ग्रहो ऽस्ता-
  दुपैति षष्ठं यदि सौम्यदृष्टः ।
शीर्षोदये लग्नगते ऽस्तगे वा
  तदा शिवेनैति लघु प्रयातः ॥११॥
अस्तं विसुच्याष्टममेति लग्ना-
  द्रौद्रो यदा रौद्रनिरीक्षि(त)श्च ।
मृत्युः प्रयातस्य तदा विधार्यः
  सौम्यग्रहैरेति 〈तु〉 देशमन्यम् ॥१२॥

Apparatus

7a लग्नो ऽर्कजो सो ऽष्टमकः N   7b °शाको वा N
7c पापाक्षितों N   8a °मूर्तिचेष्टाष्ट° N   8d स्तै N
9a रोगा N   °चयोत्म° N   9b स्थानेषु निष्टैरवि N
10a अचार्ययुक्तान्यपदान्यदि N   10d no space in N
11d शिवेनेति N   12b no space in N   12d °ग्रहैग्रहैति
देशा° N

65, 13-14

रौद्रो बली यद्यशुभर्क्षसंस्थः
पापेक्षितो लग्नभुजो ऽप्यरिर्वा ।
अस्तङ्गतो रुग्वरणार्दितः स्यात्
सौम्यो ऽप्यनिष्टर्क्षगतो ऽरिभे वा ॥१३॥
शीर्षोदये त्वस्तगृहे परस्ता-
दुपाश्रितः स्यात् पथि सन्निकृष्टः ।
विघ्नामयार्तस्त्वधरोदयस्थे
f.89 प्राप्तिर्लघुः स्यादुभयोदयस्थे ॥१४॥
यवन⟨जातके⟩ प्रश्नमृत्युकालः ॥

Apparatus

13a बलीयानशुभ° N   13c रुग्नरनान्दितः N
13d दितो वा N   14a-b °गृहो परिष्ठात् उपाश्रतो
N   14c °मयानन्धद्धरो° N   14d °दुभयोदयसो-
स्थैः N   col. no space in N

66,1-3

बुधास्त्रिकोणे गुरुवर्गसंस्थो
बुधांशके वा गु(रु)वर्गलग्ने।
तद्द्रुराबात्मगुणोदयस्थे
सैत्रीवर्गसंज्ञोपगते सुतः स्यात्॥१॥
अन्योन्यभावैर्ग्रहवत् फलानि
वाच्यानि लग्नैर्नवमांशकैर्वा।
स्थानैरयुग्युग्विभाशाब्दितैश्च
ग्रहैस्तु पुंस्त्रीप्रसवं विदध्यात्॥२॥
लग्नाद्युक्स्थानगतोऽर्कसूनुः
पुंजन्म पुंदृष्टवपुर्विदध्यात्।
ओजे यदा पुंप्रभवं विलग्ने
विपर्ययेणेतरजन्म विद्यात्॥३॥
<यवनजातके पुंस्त्रीजन्मप्रश्नः॥>

Apparatus

1b बुधांशको N   2a आन्यांयभावै° N   2d विदद्यात् N   3a °सुस्थान° N   3c ओजो N
col. no space in N

67, 1–6

लग्नेषु भागेषु शुभग्रहाणां
क्षेत्रे शुभे भोजनमाहुरिष्टम् ।
पापग्रहर्क्षेष्वशुभस्य भोगे-
ष्वभुक्तमप्रीत्यशनं भवेद्वा ॥१॥
आरण्यजेष्वोजगृहेष्वनिष्टं
ग्रामात्मकेषु क्षुदुपावृतः स्यात् ।
शुष्काशनं सौम्यगृहेषु तेभ्यः
शुभस्य भागेषु विलग्नगेषु ॥२॥
युग्मेषु सौम्यप्रभवेषु तेषु
प्रभूतसुव्यंजनमिष्टमन्नम् ।
राश्याश्रयद्रव्यगुणान्वितं तद्
भागेश्वरादिष्टरसोत्तरं स्यात् ॥३॥
स्याल्लग्न(न्न)गे मांसविशुष्कमर्के
स्निग्धं शशाङ्के द्रवमैक्षवं वा ।
गुरौ तु भक्ष्योत्तरमन्नमिष्टं
शुक्रे मृदु स्वादुरसं विचित्रम् ॥४॥
भौमे वदेन् मांसरसावमानि
बुधे तु शाका(ङ्ग)विकारसिद्धम् ।
शनैश्चरे पर्युषितं विगन्धिं
स्थानर्क्षभागांशविकल्पितं तत् ॥५॥
स्वर्क्षाश्रयं यस्य यदीरितं च
तत्स्थग्रहस्यात्मगुणैकयोगैः ।
अभ्यागतस्याश्रयवर्णनाभि-
र्विलग्नभागेश्वरवद्विभायात् ॥६॥

Apparatus
2a °जेष्टोजगृहोष्व° N   2b ग्रहात्म° N   2c °गृहे तु N   4a स्याद्गृहे N   मांसनिविशुष्कमार्के N   5b शाका(र्य)निकारसिद्धिं सिद्धिं N   6a स्वर्क्षश्रये N   यदीरिततं च N   6c °वर्णजाभि° N

67, 78

–ौमेन्विते चैकगते गृहे वा
स्याच्छर्दिमूर्च्छा(न्वि)तमिष्टदृष्टे ।
होराविलग्ने यदि वृश्चिकांशो
बु–ल्लुरित्य–युपयन्त्यमन्दाः ॥७॥
पिपासुरेव मकरांशके ऽपि
f. 89v | |
सिंहांशके–यो
वक्ष्यन्ति पीनं स्वगुणक्रबिभि–र्ः ॥८॥
⟨यवनजातके –ोजनप्रश्नः ॥⟩

Apparatus

7a –ौमान्विते वैकगते गृहेर्वा N 7b °मूच्छितमृष्ट° N 7c °कांशे N 7d °त्य–ूपयातमिन्द्रोः N 8d वाच्यात्रि यार्थः स्वगुणक्रियाभि–ाः N col. no space in N

68, 1–5

लग्नाद्गृहे †स्हेत†
स्यादत्र शय्यास्तरणार्थ इष्टा ।
शुभग्रहर्क्षे गुणवद्दृढेत्र-
दप्राग्निवत् स्यादितरग्रहर्क्षे ॥१॥
नीचोच्चमध्ये शयनादि तद्वद्
ग्रहं वदेल्लग्नमभि⟨प्रपन्नम्⟩ ।
॥२॥
⟨आरण्य⟩संज्ञे ऽजिनलोमचर्मा
शय्यास्तराः †ग्निर्भ तवार्जने† स्युः ।
तत्राम्बुजे शीतलपाटलानि
ग्राम्यप्रवेशे कुतपौर्णिकादि ॥३॥
चि(त्रं) मृगावौर्णिकमाहुरर्के
क्षौमं गुरौ चर्म विरक्तमारे ।
कृष्णत्वगादीन्दुसुते ऽथ चन्द्रे
क्रव्याजिनं ज⟨ीर्णक⟩मर्कसूनौ ॥४॥
†हृ स्याद्म
वणाय वाच्याः† ।
केन्द्रेष्वनूपस्थल⟨रा⟩शिषु स्यु-
†र्यो र्वपादानि समाश्रितानि† ॥५॥

Apparatus
1d °प्राग्निवान् N 3a संज्ञं N 3b शयास्तराः N
3c °पटलानि N 3d °प्रवेष्याः कृत° N 4a
ज(सं) मृगा° N 4b गुरौ दक्ष विरक्तमानि N
4c कष्टत्व° N 4d क्रायाम्भिकज विंटशाव N
5c °स्थल जसु N 5d समाशृतानि N

68, 6–10

शय्याशिरःस्थानमुशन्ति केन्द्रं
नीचोच्चमोक्ष्याध्यमराशिवत् स्यात्।
पर्यङ्कमध्यं द्व्युकेन्द्रमाहुः
शय्यान्तमापोक्लिममृच्छसुक्कम्॥६॥
〈आ〉रांशके क्षीणतनुः शशाङ्कः
सौरेक्षित†स्तद्गतनाधि—टा ।
र्वे ष्टा† जलजे जले वा
निर्वाणदीपे तु गृहे प्रसुप्तः॥७॥
स्याच्चन्द्रवर्गे यदि भास्करोऽपि
तत्राप्यदीप्ते ऽर्कसुते च लग्ने।
होरां रवौ पश्यति भूमिजे वा
स्फुटप्रदीपे शयितो गृहेशः॥८॥
सूर्यस्य राशेर्यदि शुक्रभाग-
स्तत्रोपयन्ता कृतमैथुनः स्यात्।
परस्त्रिया मै〈थु〉नद〈ः〉 स्ववर्गे
प्रधानबो〉धवा गुरुवर्गयोगे॥९॥
वेश्यानटीभिर्बुधवर्गयोगे
म〈न्द〉र्द्वयोगे ऽन्यनरैः कृतः स्यात्।
एष्वेव वर्गेषु विलग्नगेषु
शुक्रे कृतं मैथुनकर्म विन्द्यात्॥१०॥

Apparatus

6a सैय्याशिरस्नान° N 6b नीचोच्चसौम्याध्यम-राशिवस्यात् N 6c °मध्यान् N 6d शय्योन्त-मापोक्रमतङ्कसुक्कं N 7d निर्वीतदीपे तृ मृहे N 8a स्याच्चन्द्रवद्दा N 8b तत्राप्यदीप्ने N 8d गृहेसुः N 9a सून्यस्तरस्तबेदि शुक्रभागा° N 9b °स्तत्रोपजाताः N 9c म जट N 9d °द्दा गुरु° N 10a °नटीकिवध्यवर्मयोगे N 10b न्यनतः N

68, 11-13

वर्गोत्तमांशो हिबुके यदि स्याद्
  भागो ग्रहो वा तदुपाश्रितो वा।
f. 90 〈त〉स्मादपि स्त्रीप्रकृतिं विदध्यात्
  तद्भागराशिग्रहजैः स्वभावैः ॥११॥
निशीश्वरं चन्द्रमसं वदन्ति
  निद्राप्रभुं चन्द्रमसं च सन्तः।
सुप्तस्य चैतत्प्रभवा विकारा
  ये स्वप्नसंज्ञाः शशिसम्भवास्ते ॥१२॥
होरां दिनेशं यदि शीतरश्मिः
  पश्येद्गृहं भास्करमस्तगं वा।
विलग्नजामित्रगृहे शशी वा
  स्वप्नस्तदा दृष्ट इति प्रधार्यः ॥१३॥
〈यवनजातके〉 स्वप्नविधिः॥

Apparatus

11a स्या N  11b तदपाशृतो तद् N  11c °प्रकृतं N
11d स्वभाषैः N  12c विकारी N  13a दिनेशो N
13b °मष्टमं वा N  13c °गृहं N  13d स्वप्न तदा N
col. no space in N

69, 1–7

मेषे सुवर्णानलशैलशस्त्र-
क्षितीश्वरामात्यगणाधिपानाम् ।
श्वेतातपत्रव्यजनध्वजानां
स्याद्दर्शनं पार्थिवपट्टनानाम् ॥१॥
वृषे वनोद्यानफलौषधस्त्री-
गोक्षीरभोज्याभरणाम्बराणाम् ।
स्याद्दर्शनं बर्हिभुजङ्गमानां
चतुष्पदानां कृषिकर्म्मिणां च ॥२॥
नारीसुतक्रीडितवादितानां
सङ्गीतशिल्पश्रुतिमण्डितानाम् ।
स्याद्दर्शनं लग्नगते तृतीये
चापाश्वविक्रान्तविकर्म्मिणां च ॥३॥
नदीप्रपारामजलोद्धृतानां
स्त्रीतीर्थदेवायतनद्विजानाम् ।
पद्मोत्पलस्रग्मृगपक्षिणां च
स्याद्दर्शनं लग्नगते चतुर्थे ॥४॥
रौद्रोग्रकृत्स्रोतजलाश्मशैल-
मांसास्थ्यसृक्छस्त्रहतातुराणाम् ।
सुदुःश्रुतक्रन्दितविप्लुतानां
सिंहे वदेच्छ्वापददंष्ट्रिणां च ॥५॥
स्त्रीवस्त्रगन्धद्विजदेवसिद्ध-
तोयावतारप्लवपोतकानाम् ।
रत्नाङ्गनाभूषणवारिजानां
षष्ठे प्रियाणामपि दर्शनं स्यात् ॥६॥
हिरण्यनारीनृपनायकानां
महाद्विपानां द्विजवाहिनीनाम् ।
भृङ्गारबालव्यजनायुधानां
तुले वणिक्पण्यमहत्तराणाम् ॥७॥

Apparatus

1b °गुणा° N   3d चोपक्ष° N   5d °दंष्क्रिणां N
7d °ण्यगृहातुराणां N

69,8–12

वल्लीलतागुल्मबिलोरगाश्म-
विट्छर्दिकामस्करमैथुनादि।
सरीसृपस्त्रीबलिवर्दगोप-
विषाणि पश्यत्यशनं च कीटे ॥८॥
नृस्त्रीरतिक्रीडितगीतवाद्य-
द्विट्दन्तपक्षिद्विजदेवताश्वान्।
शास्त्रार्थविद्विप्रवरान् गुरूंश्च
f.70v यश्चान्तराश्चान्त|<वमे तु> पश्येत् ॥९॥
श्रेणेयसामन्तरणस्थवृद्ध-
कुस्त्रीजनप्रव्रजितातुरार्तान्।
पद्मोत्पलाम्भोरुहदामलोह-
धान्यान् मृगे पश्यति रोदितं च ॥१०॥
म्लेच्छान् पिशाचान् गिरिवारिजांश्च
व्याधादिचण्डालपरान्नदांश्च।
शैलाटवीश्वापदशौण्डिकांश्च
कुम्भे जलप्रव्रजिताः स्त्रियो वा ॥११॥
मीन<द्वये ल>ग्नगते म्लवानां
सुरप्रदीपाम्बुधरद्विजानाम्।
स्त्रीभूषणाक्रीडनकाम्बराणां
स्यात् कन्यकादर्शनपादुकानाम् ॥१२॥

Apparatus

8b °विट्छर्द्दितावष्कर° N 8c °बलिवर्धगोधा° N 9b °विद्वुन्त° N 9c शास्त्रास्त्रविद्भिः प्रवरा N 9d यश्चान्तरास्वैर्° N 10a श्रेनय° N 10b °तुरार्त्ताः N 11b व्योधयादि° N 11c °स्वापदस्वौर्णिकांश्च N 12a शोक गरतौ म्लवानां N

69, 13-14

यत् प्राग्विलग्नास्तगतर्व्वयोगं
    स्यात् स्वामिना लौकिकमिन्दुना च ।
तस्माद्बदेत् स्वप्नकृतं विधान-
    मुख्यं वयःस्थानबलान्विताख्य ॥१३॥
बलान्विते केन्द्रगते गृहांशे
    क्षेत्रं समापन्नफलैर्वदेत्स्यत् ।
तद्राशिजास्यप्रविकल्पितानि
    चिह्नान्यपि स्वप्नकृतानि विद्यात् ॥१५॥
⟨यवनजातके⟩ राशिस्वप्नविधिनः ॥

Apparatus
15b सुमपन्न° N   col. no space in N

70, 1–6

यद्राशिजं स्वप्नविधानमुक्तं
तद्राशिभागस्य तदेव वाच्यम्।
द्रेकाणभिन्नाकृतिवच्च वाच्यः
स्वप्नो गृहांशेषु विलग्नगेषु॥१॥
सुवर्णराजादिचतुष्पदानां
सूर्येण चन्द्रेण जलाङ्गनानाम्।
जीवेन मन्त्रिद्विजदेवतानां
शुक्रेण नारीनृविभूषणानाम्॥२॥
भौमेन चौरानलकांचनानां
बुधेन शिल्पार्थविपश्चितानाम्।
सौरेण बन्धास्त्रचतुष्पदानां
मेषाश्रितैः स्वप्नविदर्शनं स्यात्॥३॥
सूर्ये द्विपारण्यचतुष्पदानां
चन्द्रे तु वा स्त्रीनृपदेवतानाम्।
जीवे ऽश्वभद्राङ्कनवाजिनां च
शुक्रे ऽङ्गनाङ्गाम्बरभूषणानाम्॥४॥
सेनोरगव्याघ्रचतुष्पदानां
कुजे बुधे वैशवधूफलानाम्।
वृद्धाङ्गनालोहचतुष्पदानां
सौरे वदेत् स्वप्नविधिं वृषस्थे॥५॥
सूर्ये तु सस्यास्त्रविषाम्बराणां
चन्द्रे तपोधर्मगुणान्वितानाम्।
जीवे श्रुतज्ञानविदां द्विजानां
f.९१ |स्त्रीगीतगान्धर्वविदां च शुक्रे॥६॥

Apparatus

2c मन्त्र° N 3b शिल्पास्त्र° N 3d मेषाशृतैः N
4b चन्द्रेण वा N 4c स्वनद्राङ्कणवाजिनं N
6a °विसेम्बराणां N

70, 7–12

भौमे तु चौर्याहवकर्कशानां
बुधे कुमार्यार्यजनद्विजानाम्।
क्लीबालसद्यूतकराश्रयीनां
सन्दर्शनं स्यान् मिथुने ऽर्कसूनौ ॥७॥
सूर्ये ऽम्बुजक्रव्यभुगीश्वराणां
चन्द्रे तपोवृद्धनृपाङ्गनानाम्।
जीवे स्वधर्मस्थनरामराणां
शुक्रे वदेत् सूपगरांज(नानाम् ॥८॥
भौमे तु) हाराहिरणोद्यतानां
बुधे कुमाराम्बुजगण्डकानाम्।
सवृद्धयोषिद्द्विकलालसानां
सौरे वदेत् कर्किणि लग्नसंस्थे ॥९॥
सूर्येण दंष्ट्री कनकं नृपो वा
चन्द्रेण बन्धाभिहतातुराः स्युः।
जीवेन मन्त्रीश्वरचारणाद्याः
शुक्रेण लोहाम्बुगृहासवादि ॥१०॥
भौमेन शस्त्राणि नभोन्नतानि
सौम्येन वाग्विग्रहवैशसानि।
मृताहतव्याधितछिन्नभिन्ना-
न्यर्कात्मजे पश्यति पंचमर्क्षे ॥११॥
सूर्येण भिन्नक्षतशस्त्रमत्तां
चन्द्रेण मातृद्विजसंश्रितानाम्।
जीवेन धर्मश्रुतिदीक्षितानां
शुक्रेण नारीरजताम्बराणाम् ॥१२॥

Apparatus

7b °द्विनानां N 8d सूशगनाज N 9b °म्बुच-गण्डजानां N 9c स्ववृद्ध° N 10a द्रंष्टी N 10d °सवानि N 11a शस्त्राण नसौनतानि N 12a °शस्त्रमानां N 12b °संश्रतानां N

70, 13–18

बुधेन देवप्रतिमायतीनां
कुजेन विद्युच्छिखिस्थितस्कराणाम्।
सौरेण नष्टद्रुतरोदितानां
षड्वर्गैः स्वप्ननिदर्शनं स्यात् ॥१३॥
सूर्येण कान्तारचरान्नृमुख्यां-
श्चन्द्रेण नार्यो मणिभूषणं च।
जीवेन विप्रानजवाजिनो वा
शुक्रेण योषिद्द्विपणिप्रधानान् ॥१४॥
भौमेन युद्धायधपाणयः स्य-
र्भाण्डादिकोशार्थकृतो बुधेन।
सौरेण वृद्धा वनिता महान्तौ
दीक्षापरा वा परमास्तले च ॥१५॥
व्याडाग्निबध्याघ्नकराद्यौ ऽर्के
चन्द्रे मृतोपद्रुतरोदितानि।
जीवे भिषग्गोस्वौहिरण्ययानि
भोज्याङ्गनागोप्रकृतानि शुक्रे ॥१६॥
बुधे तु धान्यान्यधिजीवितानि
ताम्रासिहिंस्त्रां रुधिरं च भौमे।
बन्धं बधक्लीबमरत्यमार्कौ
f.91v स्वप्ने नरः पश्यति वृश्चिकस्थे ॥१७॥
प्रधानमुख्यान् रविणा द्विपान् वा
विप्रान् गुरूंश्चन्द्रमसा सुरान् वा।
जीवेन यच्चाद्विजवाजिनागान्
शुक्रेण चारान् वनिता गुरूंश्च ॥१८॥

Apparatus

13b विद्युत्सखि° N 13c °रौतितानां N 14c विप्रान्सज° N 14d °प्रधाना N 15d परमास्त्रलेन N 16a °बध्याघ्ननराद्यो N 17b ताम्राहिहिंस्त्रां N 18c यच्चाद्विज° N

70,19-25

भौमेन सेनाः कनकं नृपान् वा
 बुधेन विप्रांल्लिपिशिल्पिनश्च।
सौरेण वृद्धांस्तपसि स्थितांश्च
 धनुर्धरे पश्यति दीक्षितान् वा॥१९॥
कान्तारचौराटविजा रवौ स्युः
 प्रेष्यस्त्रियो वारिचराश्च चन्द्रे।
धान्यं धरा सस्यवती च जीवे
 कुस्त्री भृगौ लोहविभूषणं वा॥२०॥
भौमे नृपः शण्डचमूपतिर्वा
 स्त्रीभृत्यलोहाश्रयिणं च सौम्ये।
सौरे ऽर्चितप्रव्रजिताधिवासाः
 स्वप्ने मृगे स्युर्मृगदर्शनं वा॥२१॥
कुम्भे रवौ स्युर्नृपदंष्ट्रिनागाः
 प्रेताः शशाङ्के मदिरा जलं वा।
सुग्यानि यानानि गुरौ पुरं वा
 शुक्रेण वेश्यासवकर्मिणं च॥२२॥
सट्टं कुजे शस्त्रधनुःकरं वा
 बुधे ऽक्षधूर्ता विकटोत्कटा वा।
शनैश्चरे तापसबन्धवृद्धाः
 कुम्भे भवेयुः प्रचुराङ्गना वा॥२३॥
सूर्ये नृपस्त्रीप्रतिमा शिवा स्यात्
 चन्द्रे ऽङ्गनासाधुवराङ्गनाश्च।
जीवेन पण्यायतनद्विजांश्च
 शुक्रेण देवा निधयः स्त्रियो वा॥२४॥
द्विपाः कुजे भग्नमपक्षतं वा
 द्विजाः कुमारा यतयो बुधे वा।
प्रेताः पिशाचा जलराक्षसा वा
 स्वप्ने ऽन्त्यराशौ रविनन्दने स्युः॥२५॥

Apparatus

21c चिताप्र° N  22d °कर्मनं N  23a °धनाकरं N

70,26–29

एतद्विधानं विधिवद् विदध्याद्
  राशौ ग्रहस्य प्रकृतिं च सम्यक्।
स्व(स्थान्) विलग्नास्तगतोपगाभ्यां
  विद्याद् ग्रहाभ्यां सगृहांशकाभ्याम् ॥२६॥
स्वक्षेत्रभागे ऽभिमुखोदयस्थे
  स्वप्नः स्वराश्युक्तफलाश्रयः स्यात्।
अन्यर्क्षभागे तु विकल्पितो ऽर्थः
  परस्परार्थैर्विहितैर्विकारैः ॥२७॥
ग्रामाम्बुजारण्यत एकरात्र्यां
  चरस्थिरद्विप्रकृतींश्च बुद्ध्वा।
राशीन् ततः स्वप्नविधिं विदध्याद्
f.92 ग्रहानमित्रानपि | वाशत्रूंश्च ॥२८॥
यत् पापपूर्वोक्तविधानमुक्तं
  चिन्ताविधौ स्वप्न(मु)शन्ति तच्च।
शुभः शुभर्क्षेषु शुभैश्च स स्यात्
  पापैरनिष्टेषु गृहेष्वनिष्टः ॥२९॥
⟨यवनजातके⟩ स्वप्नविधिः समाप्तः ॥

Apparatus

26a विधास्ये N  26c °स्तमनो° N  26d °द्गृहाभ्यां N  27b स्वप्ने N  27d °रार्थै विहते वि° N  28c विदध्या N  28d ग्रहाणामित्रामपि मातृसूंश्च N  29b no space in N  29d गृहेषु निष्टः N  col. no space in N

71, 1–5

अतः परं लोकनिरूपितानि
द्रव्येषु नानाक्षरसङ्ग्रहाणि ।
इष्टप्रणीतानि विभावितानि
नामानि केन्द्रक्रमशः प्रवक्ष्ये ॥१॥
लग्नाम्बुसंस्थास्तनभःस्थितेषु
क्षेत्रेषु ये लग्नगता ग्रहांशाः ।
तेभ्यो ऽक्षराण्यात्मगृहाश्रयाणि
विद्याद् ग्रहाणां स्वगणक्रमेण ॥२॥
कवर्गपूर्वान् कुजशुक्रचान्द्रि-
जीवार्कजानां प्रवदन्ति वर्गान् ।
यकारपूर्वाः शशिनो निरुक्ता
वर्णास्त्वकारप्रभवा रवेः स्युः ॥३॥
द्रेकाणवृद्धा प्रवदन्ति नाम
त्रिपंचसप्ताक्षरमोजराशौ ।
युग्मे तु विद्याद् द्विचतुष्कषट्क-
नामाक्षराणि ग्रहदृष्टिवृद्धा ॥४॥
वर्गोत्तमे ह्यक्षरकं चरांशे
स्थिरे तु भागे चतुरक्षरं तत् ।
ओजेषु चैभ्यो विषमाक्षराणि
स्युर्द्विस्वभावेषु च राशिवच्च ॥५॥

Testimonia

This chapter is quoted by Utpala on Bṛhatsaṃhitā 95, 13.

Apparatus

1c °भाजितानि U 1d केन्द्रैः N 2b ग्रहांशा: N 2c °त्मग्रहा° N 2d विन्द्यात् U स्वगृहा° N 3b वर्गाः N 3d °स्त्वकाराः N 4a द्रेष्काण° U 4b तृ° N 4c विन्द्यात् N °षट्कं U 4d गृहदृष्टिव्याध्या N 5a चराशेः N 5b स्थिररक्षभागे U

71,6–10

द्विमूर्तिसंज्ञे च वदेद् द्विनाम
सौम्येक्षिते द्विप्रकृतौ च [रा]शौ ।
यावान् गणः स्वोदयगांशकानां
तावान् ग्रहः [सं]ग्र[हके] ऽक्षराणाम् ॥६॥
संयोगमादौ बहुलेषु विद्यात्
कूटेषु संयोगपरं वदन्ति ।
स्वोच्चांशके द्विष्कृतमंशयोगाद्
गुर्वक्षरं तद्भवनांशके स्यात् ॥७॥
मात्रादियुक् स्याद् ग्रहवत् त्रिकोणे
द्रेकाणपर्यायवदक्षरेषु ।
नभोबलेषूर्ध्वमधो ऽम्बुजेषु
ज्ञेयो विसर्गो ऽस्तबलान्वितेषु ॥८॥
शीर्षोदयेषूर्ध्वमुशन्ति मात्रा-
मधश्च पृष्ठोदयशब्दितेषु ।
तिर्यक् च विन्द्यादुभयोदयेषु
दीर्घेषु दीर्घामितरेषु ह्रस्वाम् ॥९॥
प्राग्लग्नतोयास्तनभःस्थितेषु
शेष्वंशकेभ्यो ऽक्षरसङ्ग्रहः स्यात् ।
क्रूरो ऽक्षरं हन्ति चतुस्तयस्थो
f. 92v दृष्ट्या च मात्रां च त्रिकोणगो वा ॥१०॥

Apparatus

6a °मूर्तिषु ज्ञे N  च N, तु U  6b °क्षितौ च प्र° N  no space in N  6c यवान् गुणो N  वेदयगेश° N  °गोंश° N  6d ग्रहगो N  no space in N  7a °मादौ N  विद्या N, विन्द्यात् U  7c सोच्चांशकैर्द्वि° N  °मंशयोगान् N, °मृक्ष-योगाद् U  7d यद्भवनांशकेषु N  8a °युक्के ग्रह° N  ग्रहयुक् U  8b द्रेष्काण° U  8c °बलेष्वूर्ध्वं° N, °बलेषूर्ध्व° U  8d दिसर्गो N  °सर्गस्तु U  9a °दयौषूर्ध्वं° N  9b °मधवश्च N  9c तीर्यक् U  °योदयानां दयानां N, °योदये तां U  9d दीर्घायु N  ह्रस्वात् N, यान्यां U  10b ते स्वांश° N  10c ऽक्षरा N  चतुष्ट° U  10d दृष्टा N  पि U  °णगे N

71,11–14

ग्रहः शुभस्तूर्जितवीर्यभागी
    स्थानांशतुल्याक्षरदः स चोक्तः।
पश्यन् स्थितः केन्द्रत्रिकोणयोर्वा
    स्वोच्चे ऽपि वर्ण[द्वि]यमात्मभागे ॥११॥
क्षेत्रेश्वरे क्षीणबलें ऽशके च
    मात्राक्षरं नाशमुपैति तज्जम्।
असम्भवे ऽप्युद्भवमेति तस्मिन्
    वर्गाद्यमुख्यांशसुज्ञीष्टदृष्टे ॥१२॥
केन्द्रे यथा स्थानबलप्रकर्षं
    क्षेत्रस्य तत्क्षेत्रप[ते]श्च बुद्ध्वा।
कार्यो ऽक्षराणामनुपूर्वयोगो
    मात्रादिसंयोगविकल्पना च ॥१३॥
तत्रादिराश्यादिचतुर्विलग्ना-
    द्याक्षराणि क्रमपर्ययेण।
ग्रहांशकेभ्यः स्वगणाक्षराणा-
    मन्वर्थने प्राप्तिरियं विधार्या ॥१४॥
<यवनजातके ऽक्षरविधिः॥>

Apparatus

11a शुभग्रहस्तू° U °मूर्जितवीर्यमार्गा N 11d no space in N 12b तर्जं N 12d वर्गोद्यमुंवांश° N 13a स्थानबले प्रकर्षे N 13b क्षेत्रं ततः क्षेत्र° N no space in N 13c °मवपूर्व° N 13d मात्रायय° N °त्पनाश्च N 14a °लग्ने N, °लग्न° U 14b आद्यक्षराणि N, °माद्यंशकादि U 14c स्वगणक्ष° N 14d मेध्वर्थ-ने N विधार्यात् N col. no space in N

72,1-5

मेषे ककारो हिबुके यकार-
स्तुले चकारो मकरे पकारः।
लग्ने छकारो हिबुके ऽप्यकार-
स्तुले झकारो मकरे फकारः॥१॥
मेषे टकारो हिबुके ठकार-
स्तुले तकारो मकरे थकारः।
मेषे रकारो हिबुके जकार-
स्तुले बकारो मकरे गकारः॥२॥
आकारमाद्ये ऽम्बुगते घकार-
मस्ते खकारो मकरे झकारः।
लग्ने ढकारं हिबुके दकारं-
मस्ते धकारो मकरे ढकारः॥३॥
लग्ने ञकारो हिबुके मकार-
स्तुले ङकारो [मकरे ल]कारः।
लग्ने ककारो हिबुके पकार-
स्तुले मकारो मकरे त्विकारः॥४॥
लग्ने नकारो हिबुके तकार-
स्तुले णकारो मकरे टकारः।
इत्येतदुक्तं चरसंज्ञकस्य
वक्ष्ये स्थिराख्यस्य चतुष्टयस्य॥५॥
चरसंज्ञकाभिधानः॥

Testimonia

This chapter is quoted by Utpala on Bṛhatsaṃhitā 95,13.

Apparatus

1c मेषे U छ° U, ह° N प्यकाकार° N 2c तु रेफो U 2d ब° U, ब° N 3a °मध्ये N 3b खकारं U झ° U, म° N °कारं U 3c ढ°] ह° N, ड° U 3d ट° U, फ° N °कारं U 4a ञ° U, स° N 4b ङ° U, ढ° N मकरे लकारः U, हिबुके मकरः N 4c केररो N, यकारो U त्वि° N, इ° U 5b न° N, ण° U ट° U, ध° N 5c °द्युक्तं N

72, 6–10

वृषे फकारो हिबुके ञकारः
    कीटे बकारो नृघटे छकारः।
आप्यंशकेभ्यो मतिमान् विदध्या-
    दनुक्रमेण स्थिरसंज्ञकेषु ॥६॥
लग्ने बकारो हिबुके जकार
    ईकारमस्ते ऽम्बरगे गकारः।
वृषे थकारो हिबुके ठकारः
    कीटे डकारो नृघटे टकारः ॥७॥
वृषे धकारो हिबुके थकारः
f. 93    कीटे झकारो नृघटे भकारः।
लग्ने ञकारो हिबुके ऽप्युकारः
    कीटे ङकारो ऽम्बरगे मकारः ॥८॥
लग्ने ढकारो ऽथ जले णकारो
    ऽस्तगे धकारो ऽम्बरगे नकारः।
वृषे षकारो हिबुके चकारः
    कीटे पकारो ऽथ घटे ककारः ॥९॥
ऊकारमाहुर्वृषभे जले ख-
    मस्ते फैमाकाशगते छकारः।
अन्त्ये वृषे टं तमुशन्ति सिंहे
    थमस्तगे ठं प्रवदन्ति कुम्भे ॥१०॥
स्थिरसंज्ञकाविधानः ॥

Apparatus

6a ञ° U, म° N  6b छ° U, ढ° N  6c विदस्या° N  7a ब° U, क° N  7c ठ] ट° U, धा° N  7d ड° U, ह° N  8b झ° U, स° N  8c ञ] ज° U, स° N  उकारः U  8d ङ° U, ट° N  नृघटे U  9a ढ° U, ग° N  णकार° U, ह्कारो N  9b ऽस्तमगे N, °ञास्ते U  धा° U, च° N  9c ष° U, म° N  9d नृघटे U  10a ऊ° U, ओ° N  10b फकारो नृघटे U  10c टं त° U, णान्त° N  हिंहे N  10d थं समगे U  ठं U, टं N

72, 11–15

द्विमूर्तिसंज्ञे मिथुने जकारः
  षष्ठे बकारः प्रथमें ऽशके स्यात्।
धनु[र्धी]रांशोपगते गकारो
  मीनद्वये चाम्बरगे सकारः ॥११॥
लग्ने धकारो हिबुके भकारो
  ऽस्तगे झकारो ऽम्बरमध्यगे ऽध्ये।
लग्ने टकारं हिबुके धकार-
  मस्ते डकारं विट्टुरम्बरे ढम् ॥१२॥
लग्ने मकारो हिबुके ङकारो
  ऽस्तगे हकारो ऽम्बरगे ञकारः।
लग्ने पकारो जलगे चकारं
  ऐकारमस्ते ऽम्बरगे ककारः ॥१३॥
[प्राग्लग्नगे नं जलगे णमाहु-
  रस्तङ्गते टं नभसि स्थिते तम्]।
प्राग्लग्नगे खं जलगे यमाहु-
  रस्तङ्गते छं नभसि स्थिते फम् ॥१४॥
लग्ने जमोकारमथाम्बुसंस्थे
  गमस्तसंस्थे विट्टुरम्बरे बम्।
ठं लग्नगे ऽन्त्ये हिबुकाश्रिते डं
  थमस्तयाते नभसि स्थिते दम् ॥१५॥
द्विस्वभावविधिः ॥

Apparatus

11b ब° U, ष° N प्रथमांशके U 11c धनुरांशो° N °धीरे ऽस्तो° U ग° U, प° N 12a घ° U, स° N 12a–b °कारश्चास्ते U 12b झ° U, म° N ऽन्त्ये N, ई U 12c टकारो NU 12d ड° U, ठ° N ढं U, डं N 13a म° U, प° N ङ° U, म° N 13a–b °कार-श्चास्ते U 13b ञ° U, म° N 13c प° U, ट° N 13d ऐ° U, स° N क° U, च° N 14a–b no space in N 14d फं U, सं N 15a जमाकार° N 15b बं U, हं N 15c ठं U, टं N °काश्रुते N डं U, ठं N 15d भमस्तधाटं N, थमस्तगे टं U नभस N दम्]धीं N, बै U

72,16–18

एवंविकल्पो ऽक्षरसङ्ग्रहो ऽयं
नाम्नां निरुद्दिष्टविधानसिद्धिः।
सर्वेषु लग्नेषु तु केचिदेव-
मिच्छन्ति पूर्वोक्तविधानतन्त्रम् ॥१६॥
केन्द्राणि वा केन्द्रगतांशकैर्वा
पृथक्पृथक् सङ्गुणितानि कृत्वा।
त्रिकृद्विभक्तं विदुरक्षरं तत्
होरेश्वरस्यांशपरिक्रमे स्वम् ॥१७॥
संचि[न्ति]तप्रार्थितनिर्गतेषु
नष्टक्षतस्त्रीरतिभोजनेषु।
स्वप्नर्क्षचिन्तापुरुषादिवर्गे-
ष्वेतेषु नामान्युपलक्षयेत ॥१८॥
〈यवनजातके नामविधिः॥〉

Apparatus

16b °विधान उक्तः U 16c च U किंचिदेव° N 16d °विधानवत्तु U 17a °कैः स्वैः U 17b सङ्गु° N 17c तृकृद्विभव्यी N तं N 17d °क्रमस्वं U 18a no space in N 18c °वर्गैः N 18d स्वैस्तेन N °लक्षनीत N col. no space in N

73,1–6

जन्मक्रमोद्दिष्टविकल्पदिष्टं
    सम्पन्नभाग्यं विजिगीषमाणम्।
नृपं नृपारामगुणोपपन्नं
f.93v ⟨समा⟩धि⟨प्र⟩याननिधिं विधास्ये ॥१॥
प्रसिद्धवाग्बुद्धिरुदारसत्त्वो
    गम्भीरधीरप्रकृतिर्नयज्ञः।
शूरस्तरस्वी मधुरो वपुष्मान्
    विख्यातकर्मा शमिरप्रमत्तः ॥२॥
दक्षः क्षमोपग्रहनिग्रहज्ञ-
    स्त्यागी गुणोपार्जितपौरभृत्यः।
जितेन्द्रियः सत्यपरः स्वतन्त्रः
    सुरद्विजेज्यो न भृतार्थकारः ॥३॥
राजा स एवं गुणपर्युपेतः
    कालप्रसिद्धां परिगृह्य यात्राम्।
रौद्रक्रियासाधनसारशक्तिः
    प्रसिध्यते कर्मणि मार्दवे च ॥४॥
इष्टग्रहोपस्थित(काल)पाके
    दशापतावग्र्यबले च तस्मिन्।
तज्जातकस्थानपतौ बलस्थे
    जन्मस्वनिष्टेषु न निष्ठितेषु ॥५॥
लग्ने तु लग्नोपचये शुभार्के
    चतुष्टये पापफलैरयुक्ते।
अद्धास्तगद्विद्विधनोदये वा
    चन्द्रे स्वजन्मोपचयाश्रिते च ॥६॥

Apparatus

1b संमान्य° com. to संपन्न्य° N   1c नृपारारगुण्येप° N   2a यज्ञोप्रद्धवाक्बुद्धि° N   5d °निष्टैरनुतिष्ठतेषु N   6a लग्नेषु   6c अद्धाष्टम° N

73,7-12

सौम्यग्रहांशेऽधिबलेषु सौम्ये-
ष्विष्टे तिथाविन्दुशरीरवृद्धौ ।
चतुष्टयस्थेषु शुभेषु यात्रा
प्रसिध्यते मन्दबले शशाङ्के ॥७॥
पापग्रहोत्पातहतानि हित्वा
स्थानान्यनिष्टान्यशुभेक्षितानि ।
यात्रासु सौम्यग्रहसङ्गतानि
शीर्षोदयानि प्रतिपूजयन्ति ॥८॥
दिग्गृहवर्गं चरति क्रमेण
चन्द्रे तु वर्ज्याः परिघाः प्रयातुः ।
उत्पातवातायनदिक्पतीनां
योग्या ग्रहाणां तु दिशश्च यात्रा ॥९॥
चरस्थिरोग्रार्जवमार्दवेषु
ज्योतिर्षु साधारणदारुणेषु ।
यथा गुणार्थं समुपैति सिद्धिं
शशाङ्कयोगोपचयेषु यात्रा ॥१०॥
यायाद् विशाखोत्तररोहिणीषु
राजा द्विराष्ट्रास्पदसंचयैषी ।
दिनापरार्धे बलकोशभूतिः
प्रागह्नि चैष्वेव न यानमिष्टम् ॥११॥
सावित्रपुष्याश्वयुगानिलेष
सम्पूर्णयात्रां विभ(वा)भिलाषः ।
व्यावर्तते लब्धयशःप्रतापो
महीपतिर्न त्वपराह्नि याता ॥१२॥

Apparatus

7b °ष्विष्टैस्तिथोबिन्दु° N 7d मन्दमबलैः N 8b °निष्टानि शुभे° N 8d °पूजियन्ति N 9b वर्ज्याः N 9c °दिक्प्रतीनां N 9d योज्याः N दिशाश्च N 11b द्विरात्रास्पद° N 11c °भूतैः N 12b °भिलेपः N 12c लम्बयशः° N 12d त्वपराह्नयातुः N

73, 13–17

f.९४ मित्रानुराधैन्द्रवरैवतीषु
त्वि(प्रं) प्रयातोऽरिबलं प्रशास्य।
प्रयाति यात्रां फलयोगसिद्धिं
न तु त्वपार्धे प्रथमे प्रयातः॥१३॥
प्राग्वैष्णवेषु त्रिषु चैषु यात्रा
पुनर्वसौ चेष्टफला च या स्यात्।
त्वपापरार्धं परिहृत्य याता
सौमुख्यमा(ना)दिगुणोपपन्नः॥१४॥
रौद्रैन्द्रमूलोरगदैवतेषु
द्रव्येषु रौद्राहरणेषु सन्धौ।
प्रातः प्रयाणं परिहृत्य यात्रा
प्रशस्यते दारुणि कर्मणि च॥१५॥
पूर्वेषु याम्ये पितृदैवते च
द्विर्दैशलाभोग्रफलाह्वयेषु।
त्वपापरार्धं परिहृत्य यात्रा
क्रियासु रौद्रासु च सिद्धिमेति॥१६॥
यात्रा परागारपुरप्रवेशे
श्रेष्ठानलेऽन्यत्र दिनापरार्धात्।
सावित्रपौष्ण(श्र)वणेषु यातृ-
र्निशि प्रयाणं परिवर्जयन्ति॥१७॥

Apparatus.

13a मित्रान्वराधै° N 14c यात्रा: N 14d °पन्ना: N
15b सन्तौ: N 15d कर्मणे N 16b द्विर्दैशलम्भो° N
17a °प्रदेहे N 17d प्रयाणां N

73,18–21

आग्नेयपूर्वाणि च सप्त सप्त
　　क्रमेण पूर्वादिषु दिक्षु भानि।
द्वाराभिमुख्येष्वनुकल्पितानि
　　तेषु प्रयाणेषु दिशां जयः स्यात्॥१८॥
प्राचीमु[दी]ग्द्वारिभिरप्युपेयात्
　　प्राग्द्वारिभिश्चोडुभिरप्युदीचाम्।
तथैव याम्यामपराश्रितैर्भै-
　　र्याम्याश्रितैश्चाप्यपरां प्रया[या]त्॥१९॥
अतोऽन्यथा यः परिघापभेदं
　　कुर्वन् जयैषी नृपतिः प्रयायात्।
स भूरिनागाश्वबलोत्कटोऽपि
　　सङ्ग्रामदुर्गाम्भसि नाशमेति॥२०॥
जन्मानुकूलेषु शशाङ्कभेषु
　　ज्योतिर्षु पापग्रहपीडितेषु।
तिथिष्वरिक्तासु न सम्प्रयातो
　　यात्राफलं कामिकमाददाति॥२१॥

Testimonia

18–20 are quoted by Viṣṇuśarman on Vidyāmādhavīya 12,2. 19 is quoted by Utpala on Yogayātrā 5,1 and by Govinda on Muhūrtacintāmaṇi 11,36.

Apparatus

18b भानि दिक्षु Vi. 18c द्वारेषु मुख्यान्यनु° Vi. 18d प्रयाणानुदिसं N 19a °रिद्दिर° N °भ्युपेयात् UVi, °त्र यायात् Go. 19b प्राग्द्वारिकैश्चो° UVi, प्राग्द्वारभैश्चो° Go. °श्चेन्दु° N 19c–d °श्रितैश्च याम्या° Vi. 19d °श्रयश्चाप्य° Go. 20a अथान्यथायं Vi. °घापुजेदं N 20b जयैर्षिन्दपतिः N °पतिर्न यायात् Vi. 20c सु° N 21c न]च N 21d °दयाति N

73,22–26

न चैव जन्मर्क्षगते शशाङ्के
    क्रियासु सामर्थ्यमुपैति पूर्तिम्।
अतोऽत्र यात्रा विफला श्रमार्तो
    भृशं हतारोग्यबलो बली चेत्॥२२॥
स्वजन्महोरारिपुनीचभस्थः
    पापेक्षितस्तत्सुनफादियुक्तः।
पापाहतः क्षीणतनुश्च यात-
    वैकल्यशोकक्षयकृच्छशाङ्कः॥२३॥
f.94v इष्टर्क्षसंस्थः परिवर्धमानः
    सौम्यो विलग्नोपचयेष्टदृष्टः।
केन्द्रं विना स्वे भवने प्रयात्-
    द्द्याज्जयारोग्यधनानि चन्द्रः॥२४॥
भद्राबली सिद्धजयाः सुनन्दा-
    श्चित्राः सधर्मास्तिथयः सुपूर्णा।
शुभैः स्थिरैर्नामसमैः फलैः स्युः
    परप्रवेशे प्रतिपच्च यातुः॥२५॥
रिक्तोग्रसेनोग्रमहाबलाशो
    यथानुसर्वं बलमाशु हन्यात्।
कुर्वीत कर्माणि च पापकानि
    तास्वेव शस्त्राग्निविषाश्रयाणि॥२६॥
⟨यवनजातके यात्रानक्षत्रतिथिफलम्॥⟩

Apparatus
22b मूर्तिं N 22c विफल N 22d देत् N 24c स्वं भवानां N 25a भद्रावला: N 25b मिश्राः N °धर्मा तिथय: N 26d शास्त्राग्नि° N col. no space in N

74,1-6

मेषोदये सैन्यपुरारिघात-
    स्तेयाहवार्थाः (प्रविशन्ति यात्राम्)।
वृषोदये भूमिहिरण्यगोस्त्री-
    कृषिप्रयोगस्वजनार्दनेषु ॥१॥
शस्त्रास्त्रयुद्धश्रुतिशिल्प(शिक्षा)-
    सत्त्वानुवेशादिविधौ तृतीये।
लग्ने चतुर्थे सुरसाधकारी-
    तीर्थोपसेवादि(षु) यानमिष्टम् ॥२॥
सिंहे पुरग्राममृगारिघात-
    सङ्ग्रामरौद्रोग्रविधौ प्रयायात्।
षष्ठे तु कन्याग्रहणप्रतेजः-
    प्रीतिप्रदानप्रसवेषु यायात् ॥३॥
वृद्धावरोधारिधनापकर्षे
    पण्यक्रयायासविधौ च यात्रा।
श्रेष्ठा तुले कर्मसु पापकेषु
    यात्राष्टमे नैकृतिकेषु चेष्टा ॥४॥
धनुर्धरे वाजिरथास्त्रयुद्ध-
    यज्ञामरेज्यासु (च) यानमिष्टम्।
मार्गाविरोधारिवधप्रमोक्ष-
    क्षुद्रोगशुद्धेषु मृगे प्रयायात् ॥५॥
शत्रोरवस्कन्दनकूटयुद्ध-
    च्छिद्रस्वभृत्यग्रहणेषु यायात्।
कुम्भे विलग्ने जलजद्वये तु
    पोतार्थरत्नाकरसंश्रयेषु ॥६॥

Apparatus

1a °घात° N 1b °स्ते आहवार्थाः N 2a शास्त्रा° N 3c °प्रतेज्या° N 4b पण्यक्रिया° N 5b यज्ञाप-रेज्यासु N 5c वर्गावि° N 5d °गसुद्धेषु N 6a °स्कन्धन° N 6c जलजो द्वयो N

74,7–9

प्रवाससिद्धिं वपुषः प्रसादं
 दाक्ष्यं प्रचेष्टास्वृजुमार्गतां च।
यात्राफलान्यल्पपरिग्रहाणि
 प्राप्नोति शीर्षोदयलग्नगामी ॥७॥
प्रतापदैन्यं पथिषु प्रसक्तिं
 निःस्मारकर्मस्थितिसत्त्वतां च।
अमत्वयाख्यां विजयं कथंचि-
 ल्लभेत पृष्ठोदयगो मनुष्यः ॥८॥
f.95 स्वलग्नजन्मोपचयात्मकेषु
 शुभं वदेत्तेषु शुभाशुभेषु।
एष्वेव राशिष्वशिवां समृद्धिं
 प्राप्नोति यात्राभिमुखेषु याता ॥९॥
⟨यवनजातके⟩ यात्रालग्नफलम् ॥

Apparatus
7b प्रचेष्टां त्वृजु° N 8a प्रशक्तिं N 9d यात्रा N
col. no space in N

75,1–6

इष्टेषु यात्राभिमुखेषु यात्रा
    ग्रहेषु तूर्णं समुपैति सिद्धिम्।
बलाधिकास्तु प्रतिलोमसंस्था
    ग्रहाः प्रयाणेष्वहिताः प्रयातुः॥१॥
ग्रहो बलस्थोऽभिमुखोऽदिगीशो
    यात्राफलप्राप्तिषु विघ्नकृत् स्यात्।
स्वदिक्स्थितः पृष्ठगतोऽस्त्रसिद्धिं
    क्रियासु सम्यक् च फलं ददाति॥२॥
यात्रानुलोमेऽल्पबलोऽपि राजा
    शुक्रे बलीयांसमपि द्विषन्तम्।
रणे सुनीतिप्रतिलब्धशक्ति-
    र्जित्वा क्रियाद्वारफलं निभुङ्क्ते॥३॥
सर्वग्रहेष्वप्यनुलोमगेषु
    प्रयाति कृत्वोरसि भार्गवं यः।
क्षिप्रं रणं प्राप्य समेति ⟨नाशं⟩
    सम्पन्नकोशाश्वरथद्विपोऽपि॥४॥
दिवाकरे पृष्ठगतेऽपि याता
    शुक्राभियोगोपगतोऽप्ययुक्तः।
अस्तङ्गते दैत्यगुरौ तु याता
    प्राप्नोति नाशं वरवाहनानाम्॥५॥
पापग्रहोत्पातविमर्दिते भे
    गच्छेद् दिशं च प्रतिलोमवाताम्।
पुरप्रभोपद्रवभिन्नसैन्यः
    प्राप्नोति तीव्रं भयमापदं च॥६॥

Apparatus

3a ल्पफलो N   4c no space in N   5a °गतो N
यातुः N   5b °पहतो N   5d वनवा° N   6c पुरप्र-
ताप° N   °सैन्यं N

75,7–12

सौसुख्यमाज्ञां महदर्थलाभ-
मूर्जोगुणस्यातिमुदारतां च।
वाग्बुद्धिकर्मप्रभवां च सिद्धिं
गुरोरवाप्नोति दिने प्रयाता ॥७॥
इष्टाङ्गनाभोजनमानमान-
स्रगम्बरस्थानसुखोपभोगान्।
प्राप्नोति शुक्रस्य दिने प्रयाता
रतिप्रमोदप्रभवांश्च लाभान् ॥८॥
विद्वत्सुहृत्सज्जनसम्पदत्वं
बुद्धिप्रसादं पटुवाक्यतां च।
प्राप्नोति याता दिवसे बुधस्य
शत्रुक्षयं प्रीतिकरांश्च लाभान् ॥९॥
क्षुत्तृड्दरिक्लेशमसाधुवैरं
भयं पथि व्याडचतुष्पदेभ्यः।
f.95v मार्गप्रणाशं हृदुपद्रवं च
प्राप्नोति सूर्य(स्य) दिने प्रयाता ॥१०॥
साध्वङ्गनापुष्पफलान्नपान-
द्रव्यैर्मनोज्ञैर्जलसम्भवैश्च।
संयुज्यते चन्द्रदिने प्रयाता
रतिक्रियार्थैरभिवांछितैश्च ॥११॥
विषाग्निशस्त्रक्षतशत्रुवैर-
चौरक्षयोपद्रवभङ्गभेदान्।
प्राप्नोति भौमस्य दिने प्रयाता
मोहक्लमच्छर्दिकृतांश्च दोषान् ॥१२॥

Testimonia

11 is quoted by Viṣṇuśarman on Vidyāmādhavīya 12,8

Apparatus

9d °क्षयाप्रीति° N    11d रति° $V_1$, न तु N

75,13-14

व्याधिं पथि क्षुद्रजनापमर्दं
कान्तारचौरारिभयं च तीव्रम् ।
लग्ने(त) सौरस्य दिने प्रयाता
बन्धं वधं वा विकलाङ्गनां च ॥१३॥
स्ववर्गसंस्था बलिनो दिनेशा
यातुर्यथोद्दिष्टफलप्रदाः स्युः ।
नीचे जिता ये ऽरिगृहे ऽल्पवीर्या-
स्ते घ्नन्त्यनिष्टेष्टफलप्रवृत्तिम् ॥१४॥
<यवनजातके यात्रा>वारविधिः ॥

Testimonia

14 is quoted by Utpala on Bṛhajjātaka 9,8.

Apparatus

13d विङ्कला° N  14a विशेषा U  14b ग्रहा यथो° U  14c जितास्त्वारि° U  col. no space in N वाराविधि N

76,1–7

मनस्विनामीप्सितवित्तलाभं
    सिद्धिक्रियार्थे स्वपरिश्रमेण।
सुहृज्जयं देहसुखं च शश्वत्
    स्वलग्नलग्ने लभते प्रयाता ॥१॥
अनिष्टसंयोगमनल्पकर्म
    श्रमार्दनं मानधनप्रणाशम्।
अप्रीतिदैन्योपहतात्मतां च
    प्राप्नोति लग्नादपरर्क्षयाता ॥२॥
भृत्यान् सहायान् यशसः समृद्धिं
    धनानि मित्राणि च वाहनांश्च।
प्राप्नोति सौमुख्यमरोगतां च
    लग्नात्तृतीयर्क्षविलग्नगामी ॥३॥
परिश्रमं वाहनबन्धुनाश-
    मभ्यर्दनं मार्गपरिभ्रमं च।
प्राप्नोति विस्रंसमधीरतां च
    लग्नाच्चतुर्थर्क्षविलग्नगामी ॥४॥
परोपजापं वहतो ऽप्रतापः
    क्रियाविधौ सम्भ्रमदीनशक्तिः।
लग्नाद्गतः पंचमराशिलग्ने
    व्यावर्तते विघ्नमसिद्धकार्यः ॥५॥
वपुष्मतां सत्त्वबलावबोधं
    ख्यातिं रणे ग्रामहितप्रणाशम्।
शत्रोर्बलस्थानपुराणि चान्ते
    प्राप्नोति षष्ठोदयगः स्वलग्नात् ॥६॥
मार्गश्रमं वाहनवित्तनाशं
f.96    तृड्दाहशीतं क्षुदुपद्रवं च।
स्वपक्षदैन्यं परपक्षवृद्धिं
    जामित्रलग्ने लभते प्रयाता ॥७॥

Apparatus
2b पानधन° N 2d °यात्रा N 4c विस्रम्भ्रम° N 5c लग्नागतः N 5d सिघ्न° N 6c °स्थानगतानि N 7b तृड्हा N

76, 8–13

व्याधिव्ययं क्षुद्व्यसनावपातं
    व्रणार्दनद्विड्बन्धनानि ।
क्षिप्रं स्वलग्नाष्टमराशिलग्ने
    व्यङ्गाङ्गना वा लभते प्रयाता ॥८॥
अनर्थमप्रीतिमधर्मचेष्टां
    मोषं परित्रासमसद्व्ययं च ।
प्राप्नोति होरानवमे विलग्ने
    याता स्वपक्षप्रतिकूलतां च ॥९॥
बलक्षयं क्षोभमनर्थमार्तिं
    वृषक्रियाद्यक्रमभाषितां च ।
विषादमात्रापचयं च याता
    लभेत लग्नाद् दशमे विलग्ने ॥१०॥
आरोग्यमोजोद्युतिसत्त्ववृद्धिं
    हिरण्यनारीधनधान्यलाभम् ।
प्राप्नोत्ययत्नां समकर्मसिद्धि-
    मेकादशक्षेत्रगतः स्वलग्नात् ॥११॥
रन्ध्रप्रयोगच्छलकूटचेष्ट-
    स्त्वतिव्ययोपायकृतैः प्रयत्नैः ।
भिन्नस्वपक्षो ऽप्युपयाति सिद्धिं
    लग्नान्नृपो द्वादशलग्नगामी ॥१२॥
लग्ने गुरौ वाहनयानमान-
    स्थानद्युतिज्ञानधनानि याता ।
प्राप्नोति विद्वद्गुरुसङ्गतं च
    सुहृद्बलस्यौपचयं जयं च ॥१३॥

Apparatus

8a व्याधिभ° N   8d लभवेत् N   9b °मसत्व्ययं N
10a बलक्षयो N   10b वृषाक्रिया° N   °भाषितां N
10c यात्रा N   11c °यत्नं N   12a रन्ध्र° N   °चेष्टा° N
12b °व्ययो° N   12c प्यपयाति N   13b यात्रा N
13c विद्वां गुरु° N

76,14–19

विशिष्टवस्त्राम्बरभूमिनारी-
क्रीडाविलासोत्सवगन्धमाल्यैः।
कुमारिणामाभरणान्नपानैः
सम्पद्यते भार्गवलग्नगामी ॥१४॥
वाग्बुद्धिसिद्धिं प्रियबन्धुयोषित्-
समागमस्थानयशोर्थलाभम्।
प्रतापमाज्ञामभिमानवृद्धिं
प्राप्नोति सौम्योदयगो बलस्थः ॥१५॥
क्षुत्तस्करव्याधिनृपारिशस्त्र-
भूताशनिव्याडविषानलेभ्यः।
प्राप्नोति बाधां पथि विद्रवं च
सौरारसूर्येन्दुविलग्नगामी ॥१६॥
नन्दाबसादारिबलाभिवृद्धिः
कुर्वन् छलान् कूटशठप्रयोगान्।
क्रूरग्रहाणां दिवसे ग्रहेषु
वर्गेषु चैषां समुपैति सिद्धिम् ॥१७॥
f.96v आरोग्यदीप्तिप्रतिभाप्रसाद-
हस्त्यश्वयोधायुधसत्त्वसम्पत्।
शुभेषु लग्नोपगतेषु यात्रा
ज्ञेया यथार्थोक्तिरथेतरेषु ॥१८॥
कुटुम्बकोशोपचयं समृद्धिं
द्वितीयसंस्थाः स्थिरभिन्नतां च।
यात्रासु कुर्वन्ति शुभाः प्रयातुः
पापा भयायासमसत्सुहृत्त्वम् ॥१९॥

Apparatus

14a °ष्टमात्राम्बर° N  15c °मद्धिमानबुद्धिं N  15d ज्वलस्थं N  17a °भिषद्धिः N  17b कुर्वन् रलो N  17c दिवसो N  18d यथोर्थोक्ति यथेन्तरेषु N  19a कुटुम्ब° N

76,20–25

तृतीयसंस्थाः सहजाश्रयोधा-
च्छायाबलस्थैर्यवपुःप्रदाः स्युः।
शुभाः प्रयाणेष्वशुभास्त्रशौर्य-
प्रतापसिद्धिं समरेषु कुर्युः ॥२०॥
स्वबन्धूपचयप्र(भा)वाश्रयोधा-
सेनाङ्गसम्पूर्णफलप्रवृत्तिम्।
कुर्युः शुभा लग्नचतुर्थसंस्थाः
क्रूरा भयोपद्रवदौर्मनस्यम् ॥२१॥
मन्त्रोपजापप्रियसम्प्रदान-
चारोपधाभेदविभीषणानाम्।
सिद्धिं प्रमोदं च शुभाः प्रकुर्यु-
स्त्रिकोणगाः क्लेशभयानि पापाः ॥२२॥
प्रमोदमिष्टद्रविणोपपत्तिं
स्वपक्षदर्पोत्कटतां जयं च।
कुर्युः शुभाः षष्ठगताः प्रयातुः
प्रतापवेत्रासनसिद्धिमन्ये ॥२३॥
हितप्रियाहारपरिश्रमाणां
स्त्रीमित्रसम्भोगसुखात्मकानाम्।
जीवैन्दवौ प्राप्तिकरौ फलाना-
मन्ये ऽस्तसंस्थाः क्षयभङ्गदाः स्युः ॥२४॥
नायुर्विनाशो निधनाश्रितेषु
सौम्येषु नातङ्करिपुप्रबाधाः।
भवेयुरन्येषु तु बन्धमृत्यु-
शस्त्रामयाग्निव्यसनावपाताः ॥२५॥

Apparatus
20a °संज्ञाः N   21a no space in N   21d °दैर्मनुष्य N
22b °णानां N   23a प्रमोद्य° N   23d °पनेत्रा° N
°मन्त्ये N   25b सौमेषु N

76, 26–31

बह्वन्नपानैर्वनशाकपुष्प-
सस्यासवैः प्राणितपक्षसैन्यः।
जयत्यपापैर्नवमर्क्षसंस्थैः
क्रूरैस्त्वपध्वस्तबलो ऽपयाति ॥२६॥
पराक्रमालब्धफलप्रसिद्धि-
मैश्वर्यवीर्योदयमर्थलाभम्।
कुर्वन्ति मेषूरणगाः प्रशस्ताः
सम्भेदकूटाहवसिद्धिमग्र्याः ॥२७॥
मनस्विनां नैकविधार्थलाभं
कोशर्द्धितं स्थानजयोदयं च।
f. 97 एकादशस्थास्तु शुभाः | प्रकुर्यु-
रन्ये जयं शत्रुबलार्थलाभम् ॥२८॥
नासद्भयं न स्खलरन्ध्रपातान्
न दुर्गमार्गं हि न विभ्रमं च।
कुर्युः शुभा द्वादशगा विलग्नात्
पापास्तु निर्दिष्टविपर्ययाः ⟨स्युः⟩ ॥२९॥
सौम्येषु कालादिबलाधिकेषु
केन्द्रेषु यात्मोपचयर्क्षगेषु।
पापैरपि श्रेष्ठनिरीक्षितेषु
यात्रा मता श्रेष्ठफलप्रयत्नी ॥३०॥
सौम्येषु लग्नेष्वशुभो बलीयान्
हरेत् परैः केन्द्रगतैः फलांशम्।
पापेषु तद्वत् पतितः शुभो ऽपि
चन्द्रो बलीयान् त्वशुभैः समानः ॥३१॥

Apparatus

26a °पानैर्द्धन° N   26b °सस्याबसुप्राणितवक्ष्यसैन्यः N   26d °स्तपध्वस्त° N   28a मनस्विनं N   28b कोषार्द्धनं N   °जयोदनं N   29b न²] व N   30a कालाधिभा° N   30b केन्द्रासुयात्माप° N   31a लग्नेषु शुभो N   31b °गतः N   31d स्वशुभैः N

76, 32-36

त्रिभिस्तु लग्नोपगतैरनिष्टैः
सौम्यैरमिश्रैरनवेक्षितैश्च ।
स्याद्व्यानमायुष्यहितं प्र(यात्)-
र्मिश्रा यथोक्तेषु शुभाशुभाः स्युः ॥३२॥
एको ऽपि सौम्येक्षणसङ्गमाभ्यां
विवर्जितः पापफलो ऽष्टमस्थः ।
मृत्युं विभज्य स्वकृतैर्विकारैः
शुभान्वितो व्याधिरुगार्तिकृत् स्यात् ॥३३॥
देशप्रयाणार्थमरिस्वभावं
कर्माणि लग्नादिचतुष्टयस्थैः ।
विद्याद् यथार्थैरघदानघैस्तु
ग्रहैरनिष्टेष्टफलं क्रमेण ॥३४॥
देहक्रियाकोशबलोपघाता
नायान्ति सौम्येषु बलाधिकेषु ।
एष्वेव पापा विसृजन्त्यनिष्टान्
स्वजन्मलग्नाधिपतावुदस्तात् ॥३५॥
इष्टौ मनोदेहगुणोपपत्तीन्
जन्मोदयेशौ कुरुतः प्रयातुः ।
कालस्थितिस्थानबलप्रधानौ
तथा त्वनिष्टौ विबलौ जितौ तौ ॥३६॥

Apparatus

32a स्त्रिभिस्तु N 32c प्र(यात्व) N 32d मिश्रा N
33c विभज्या N 33d °रुगर्त्ति° N 34a देह° N
34b लग्नानि N 34c °दानघैस्तानु N 35d
°पतिव्युदस्तात् N 36a इष्टे N °पत्ती N 36b
जन्मोदये सौ N 36c °प्रधाना N 36d तयोस्त्व-
निष्टौ N

76,37–41

देहो ऽर्थसारं बलवाहनानि
मन्त्रद्विडाधीषणरन्ध्रयोगाः।
स्युर्मानसं कर्म फलान्यसत्यं
लग्नादिसंस्थैर्नृपतेर्ग्रहैस्तु ॥३७॥
प्राप्नोति शत्रोररिराशिलग्ने
बन्धं रिपोरेव रणे वधं वा।
द्विड्धने स्वोपचये तु याता
पर्येत्यरिं चारिबलं च लब्ध्वा ॥३८॥
लग्ने स्वलग्नोपचये शुभर्क्षे
गुरौ (च) लग्नोपचयर्क्षसंस्थे।
f.97v |षष्ठाश्रिते ऽर्के भृगुजे ऽष्टमसंस्थे
योगे ऽत्र गत्वाशु परान्निहन्ति ॥३९॥
गुरुः स्वलग्नोपचये विल⟨ग्ने⟩
लग्नत्रिषष्ठावसितावनेयौ।
केन्द्रे भृगुर्द्युमदाश्रितो ऽर्को
योगे गतो ऽत्राहरति द्विषन्तम् ॥४०॥
बुधो जलस्थो भृगुजो विलग्ने
जीवः सुतर्क्षे दिनकृत् तृतीये।
षष्ठे कुजार्की दशमे शशाङ्कः
सर्वार्थसिद्धिर्नियतात्र योगे ॥४१॥

Testimonia

37a equals the first pāda of a verse of Bādarāyaṇa quoted by Utpala on Yogayātrā 4,1.

Apparatus

37a °वाहनादि N 37c °सन्त्या N 38c °धनैः N यात्रा N 39c षष्ठोशृते N 39d गन्धाशु पराणि हन्ति N 40b लग्ने N

76,42–47

एकादशस्थौ भृगुसूनुसौम्यौ
    षष्ठे कुजार्की दशमाश्रितोऽर्कः।
जीवोऽष्टमे यः क्षितिपोऽत्र योगे
    यायात् स सर्वारिबलं निहन्यात्॥४२॥
शुक्रो विलग्ने सहजाख्यगोऽर्क-
    श्चन्द्रोऽस्तगो भाद्रपदेऽर्कसूनुः।
गुरुस्त्रिकोणे दशमे धराजो
    योगेऽत्र यातुर्वशमेति शत्रुः॥४३॥
चतुर्थगौ शुक्रशशाङ्कपुत्रौ
    षष्ठे शशी भाद्रपदे च जीवः।
रौद्रास्तृतीयेऽत्र विजित्य योगे
    शत्रोर्धनं वा हरतेऽत्र याता॥४४॥
लग्ने गुरुश्चन्द्रसुतश्चतुर्थे
    षष्ठादिभस्था रविचन्द्रशुक्राः।
सौरावनेयौ सहजाख्यगौ च
    क्षिप्रं परान् हन्ति गतोऽत्र योगे॥४५॥
षष्ठे शशी शुक्रबुधौ चतुर्थे
    रविस्तृतीये दशमेऽसितारौ।
एकादशस्थो गुरुरत्र योगे
    पर्येति गत्वा स पुमान् जितारिः॥४६॥
गुरुर्यदि स्यान्न(व)मर्क्षसंस्थो
    मेषूरणैकादशयोश्च सर्वे।
योगेऽत्र गत्वारिबलं विजित्य
    पर्येति संहृष्टमनाः स्वदेशम्॥४७॥

Apparatus

42b दशमे सृतो N    43a °जाखगो N    44d यात्रा N
45c °जाख्यजौ N    45d परा N    46a षष्ठः N चतुर्थौ N    46d जिजारिः N    47a no space in N

76,48–53

द्रेकाणहोरांशपतौ विलग्ने
शुभानुकूलर्क्षगते शुभे च।
याता प्रसाध्यारिबलं प्रकामं
साराण्युपादाय रिपोरुपैति ॥४८॥
होरासु जीवोशनसेन्दवानां
भवत्यनातङ्कभयव्ययाधिः।
एषां गतो ऽशेष्वपरिक्षताङ्गः
पर्येत्यसङ्कीर्णबलः कृतार्थः ॥४९॥
शोभनार्थः ॥
स्वभृत्यविक्षोभमधिप्रमोष-
गात्रक्षतोत्पातविषादशोकान्।
होरासु सूर्यारशनैश्चराणां
f.98 प्राप्नोत्यपीत्वा कफवातरोगान् ॥५०॥
सूर्यांशके वाहननाशमाहु-
रङ्गारकांशे ऽग्निभयं प्रयातुः।
सौरांशके भृत्यमृजाविनाशं
मन्द्रांशके कर्मणि मन्दतां च ॥५१॥
असृग्यगास्येष्वितरेतरेषु
पूर्वापरार्धक्रमयोगिनो ये।
सौम्यग्रहाणां भवनत्रिभागाः
प्रायः प्रयाणेषु शुभप्रदास्ते ॥५२॥
दिनाश्रयं यद्गदितं ग्रै(ह)ाणां
फलं प्रयाणेषु शुभाशुभाख्यम्।
तदेव तज्जातकसङ्ग्रहेषु
स्थानेषु लग्नोपगतेषु वाच्यम् ॥५३॥

Apparatus

48a दिनर्क्षहोरांश° N विलग्नौ N 48b °कुलार्क्ष° N 48c यात्रा N प्रमथ्या° N 50d °पीत्य: N 52a °स्यं विकरेतरेषु N 53b प्रयोगेषु N

76,54-57

चन्द्रो ऽरिमर्दे ऽग्निकृटीप्सितो ऽर्कः
    प्रशस्यते चान्द्रिरूपप्रदाने।
जयं गुरुः साम भृगुश्च राज्ञो
    भेदक्रियामार्किरूपेक्षणानि ॥५४॥
मेषादिषु द्विड्विजिगीषमाणाः
    सामान्युपेक्षाण्यथ भेदनं च।
सिद्धिं त्रिकोणेषु पराक्रमस्थाः
    प्रयान्ति सूर्योदयतो हि कार्यम् ॥५५॥
दशाष्टवर्गादिहतात्मसिद्धिः
    कार्यापरो ऽपि क्षितिपो न यायात्।
रक्तस्वभृत्यः प्रतिबद्धदण्डः
    सम्पन्नभाग्यः सचिवप्रयोज्यः ॥५६॥
कार्याभिमानी त्वरितो यियासु-
    र्भाग्यान्वितो (वि)प्रतिकूलकालः।
शुभेष्टदृष्टानुपदृष्टमिष्ट-
    मृक्षं विलग्नं परि(गृ)ह्य (या)यात् ॥५७॥

Testimonia

57 is quoted by Utpala on Yogayātrā 4,5.

Apparatus

54a रिमर्दोग्रमभीप्सितो N   54c जयां N
54d °मर्कि° N   55a °माणः N   55b समान्यु° N
55c °क्रमस्थे N   56b कार्यात्मये N   56c
°बन्धभदण्डः N   57a कार्यादिपातात्त्वरितो N,
कार्यातिमानान्तरितो U   57b °भीवान्वितो
ऽपि U   57c °दृष्टानुप्रमिष्टमिष्ट° N, °दृष्टावपि
दृष्टमिष्टे U   57d मिष्टं U   परिहृत्य U

76,58-63

देवद्विजाग्र्यान् परिपूज्य सम्यक्
शुचिर्द्विजेज्याभिरपोढपापः ।
यायात्प्रसन्नो मुदितोऽनुमार्गं
सच्छत्रवर्मध्वजवाहनास्त्रः ॥५८॥
मनःप्रसादो द्युतिसत्त्वसम्पत्
सुस्वप्नलाभो विजयप्रसादः ।
रक्षन् निमित्तानि च सम्प्रयाणे
दैवाज्जयप्राप्तिषु सम्प्रयाति ॥५९॥
द्विड्जन्मराशेः सदृशा <ग्रहा>णां
तदाश्रयाणां वशमर्पयन्ति ।
<स>थानुबन्धैः क्रमशश्च राज्ञः
सन्दर्शनं सिद्धिकरं परं तत् ॥६०॥
तथाग्निदेवद्विजगोगजाज-
वाजिध्वजच्छत्ररथासनानाम् ।
भृङ्गारमाल्यव्यजनाम्बुकुम्भ-
f.98v सर्पिर्दधिक्षीरफलौषधीनाम् ॥६१॥
सुवर्णरत्नाभरणोत्पतेली-
पुंवर्द्धमानप्रवरोपमानाम् ।
<सुद>र्शशुक्लामलमाल्यमीन-
कन्यासुहृन्नन्दनरोचनानाम् ॥६२॥
पुण्याहवे चाध्वनि शंखभेरी-
मृदङ्गशब्दस्तुतिवन्दनानाम् ।
सन्दर्शनं हंसमयूरचाष-
कादम्बहारीतकसारसानाम् ॥६३॥

Apparatus

58b °द्विजातीभिर° N   59c राज्ञं N   59d संप्रतन्ति N   60b °मर्पणानि N   60c no space in N   61a °गजाजा° N   62a °भरणाप्यतीढ़ी° N   62b °प्रवरोप्रमाणां N   63a दध्वनि N   63b °वन्दिभ-तानां N   63d कादम्भ° N

76,64-66

एतानि सिद्धिप्रतिसूचिकानि
    दैवान् निमित्तान्युपगृह्य राजा ।
अभिप्रयाणे मुदितः प्रयायात्
    सिद्धिं ध्रुवामात्मनि सन्निवेश्य ॥६४॥
ग्रहाद् गृहाद्वाधिबलाद् विलग्नात्
    केन्द्राश्रितात् स्थानबलाधिकाद्वा ।
तात्कालिकोत्पातशुभाशुभानि
    दिव्यान्तरिक्षक्षि(ति)जानि विद्यात् ॥६५॥
विस्तीर्णयात्रोत्तमसिद्धिकारः
    कृत्वेष्टदेवग्रहपौरपूजान् ।
स्वभूमिसंस्थे ऽधिबले गृहस्थे
    स्थिरे च कुर्यात् स्वगृहप्रवेशम् ॥६६॥
<यवनजातके> यात्रासन्दर्शनविधिः ॥

Apparatus
64d सन्विवेश्य N   65a °बलाधिलग्नात् N   65b स्थानगुणाधि° N   66a °कार्यः N   66b °पौरुपूजान् N   col. no space in N

77,1-5

देवान् ग्रहाणां जलवह्निविष्णु-
प्रजापतिस्कन्दमहेन्द्रदेवीन्।
चन्द्रार्कचान्द्र्यर्कजभौमजीव-
शुक्राश्रयर्क्षेषु यजेत शश्वत्॥१॥
नृपप्रतिष्ठायुधयुद्धयोधा-
हैमाग्निगोमन्त्रभिषक्प्रयुक्तम्।
रवेर्दिने वान्यमृगार्दनादि
प्रशस्यते द्विड्भयकृच्च कर्म॥२॥
स्त्रीसङ्गमालङ्करणाम्बराणां
प्रतिक्रियां हर्षसुखाश्रयां च।
कुर्वीत चन्द्रस्य दिने प्रदान-
यज्ञोत्सवान् रत्नरसांजनं च॥३॥
बाधाविरोधानृतडिम्बभेद-
स्तेयाहवास्त्राग्निविषप्रयोगाः।
दिने कुजस्य ध्वजिनीनिवेशाः
कार्याः सुवर्णाजपशुक्रियाश्च॥४॥
स्वाध्यायसेवालिपिशिल्पलेख्य-
व्यायामनैपुण्यकलाविधानम्।
इषुक्रियाकांचनधातुसूक्ति-
वाग्बुद्धिसन्धिप्रकृता बुधाह्नि॥५॥

Testimonia
2-5 are quoted by Utpala on Bṛhatsaṃhitā 103,61.

Apparatus
1a वह्नियुक्ताविष्ण° N  2b °मूत्रभिषक्प्रयोगान् U
2c वन्य° U  2d प्रणस्यते N  3a-b °म्बरस्त्रक्प्रति-
क्रियहर्ष° U  3d °रसार्जनं U  4a बधावरोधा-
वृत° U  4b °स्तेयादिशस्त्रादि° U  °योगान् N
4c ध्वजनीविवेशाः N  5a °लिपिलेख्यशिल्प° N
5b °विशेषाः U  5c इष्टिक्रिया° U  5d °प्रसूता U
बुधांशे N, बुधे ऽह्नि U

77,6-9

गुरोर्दिने धार्मिकपौष्टिकेज्या-
बोधयाभिधेयश्रुतिमङ्गलादि।
f. ९९ क्रियेष्यते धान्यसुवर्णसद्म-
देहाश्रयास्त्राम्बरथक्रियाणाम्॥६॥
गान्धर्वविद्यामणिरत्नगन्ध-
गोभूमिशय्याम्बरभूषणानाम्।
स्त्रीपुण्यकोशोत्सवनन्दनानां
क्रियाविधिः शुक्रदिने प्रशस्तः॥७॥
विषाश्मशस्त्रत्रपुसीसलोह-
प्राकारबन्धानृतमारणानि।
सर्वं च पापात्मकमर्कजाह्नि
कर्मासवप्रव्रजनादिमिष्टम्॥८॥
क्रियाविधिर्यो यवनप्रधानैः
प्रोक्तः प्रजानां ग्रहवासरेषु।
स एव तद्वासरसंचरासु
होरासु तत्साम्यविधौ विधार्यः॥९॥

Testimonia

6 is quoted by Utpala on Bṛhatsaṃhitā 103,62.
7–8 are quoted by Utpala on Bṛhatsaṃhitā 103,63.

Apparatus

6a दिने गुरोर्धा° U  6b °बाधयाभिधेयक्रतु-मुण्डनादि U  °विधेयाश्रुति° N  6c क्रियाश्रिता धर्मसुवर्णवस्त्र° U  6d °यास्त्राम्बरथाश्रयास्त्र U  °देहाग्रहस्त्राम्ब° N  7a °गन्धा° N  7c स्त्रीमण्य° U  8b °बन्धावृत° U  8c °मर्कवह्नि N  8d कार्पासवप्रव्रजितानि U  9c सद्वासर° N  9d तत्मविविधौ N

77,10–14

यस्यानुवश्यं पठितं ग्रहस्य
    यद्भागजातं स्वगृहाश्रयं वा।
तस्मिन् बलस्थे तदुपैति सिद्धि-
    मारम्भमिष्टं प्रविगर्हितं वा॥१०॥
तस्मिंश्च कोशार्क्षगते वदेच्च
    सङ्ग्राह्यमस्तोपगते च देयम्।
निशापनीयं हि(बु)कर्क्षसंस्थे
    ग्राह्यं विलग्नोपगते च तस्मात्॥११॥
गुरौ विलग्ने द्विपदाख्यराशौ
    जीवेन्दुवक्षेत्रगते शशाङ्के।
श्रेष्ठं श्रुतारम्भमुशन्त्यनिष्टै-
    रवीक्ष्यमाणे शुभसङ्गते च॥१२॥
लग्नेषु जीवेन्दुबभार्गवेषु
    पश्यत्सु चैतेषु गृहर्क्षमंशम्।
राशावथो वा विचरे गृहस्थे
    गृहस्थयोर्वा भृगुनन्दनेन्द्वोः॥१३॥
जलाश्रये वा गृहमाश्रितेंऽशे
    गृहे स्वनाथाश्रितलक्षिते वा।
चन्द्रे गुरुस्थे च शुभानि विद्यात्
    वास्तुप्रवेशादिनिवेशनानि॥१४॥

Testimonia

13–14 are quoted by Utpala on Bṛhatsaṃhitā 97,16.

Apparatus

10a यस्यांचवश्यं N 10d °मारम्ब° N 11c निद्धाप° N 11d ग्राह्या N 12d °माना N 13b गृहर्क्षमृक्षं N 13c रिचरें N 13d गृहांशयोर्वा U 14a °श्रयोर्वा N, °शये वा U °मागतेशे U 14b गृहेष्वनाथ्यादिवल्ले-क्षितेवान् N 14c शुभस्थे U 14d °प्रवेशाविनि° N

77, 15–20

लग्नानुकूलेषु शुभेषु वादः
    क्रूरेषु षष्ठर्क्षगतेषु चेष्टः।
धर्मार्थमिन्दौ गुरुवर्गसंस्थे
    कुर्यात् स्ववर्गे च गुरौ विलग्ने ॥१५॥
स्वं मानुषाख्ये भवने ऽस्तसंस्थे
    दारं प्र(या)याद् भृगुजीवदृष्टे।
स्वभागसं(स्थे) ऽस्तमयङ्गते च
    तिर्यक्चरर्क्षं परिहृत्य शुक्रे ॥१६॥
शनैश्चराङ्गारकवर्गसंस्थे
    पराङ्गनोद्वाहन(म)प्रशस्तम्।
प्राग्लग्नपुंजर्क्षसुतर्क्षसंस्थे
    स्वलग्नगे वापि गुरौ सुतार्थम् ॥१७॥
f.99v लग्ने स्वकर्मार्थकुटुम्बराशौ
    कुम्भाहृते भा(र्ग)वजीवदृष्टे।
पण्यप्रयोगेष्वभिसिद्धिमाहु-
    रेष्वेव योगेषु तुले यदि (स्या)त् ॥१८॥
भावाश्रयं स्वे(श)रसौम्ययुक्तं
    तद्राशिलग्ने तदुपैति सिद्धिम्।
कुर्वीत जीवैन्दवशुक्रवर्गे
    कार्यं महद्यत् परसंचयं च ॥१९॥
उग्राणि कर्माणि रवौ बलस्थे
    चन्द्रे तु सौभम्यमृदूनि विद्यात्।
जीवे तु जीवस्थितिबुद्धिकर्म-
    पण्यार्थनारीरतिकर्म शुक्रे ॥२०॥

Apparatus

15a शुभैर्विवादः N  16a स्वान् N  16b दारां N  16c स्तमनङ्गते N  16d तिर्यक्त्ववर्क्षं N  17b °द्वाहनम्प्रशस्तं N  18b कुम्भाद्धृते N  19a श(स)र° N  20c °स्थिरबुद्धि° N

77,21

बुधे तु वाक्यश्रुतिशिल्पकर्म
    भौमे तु चौर्याहवभेदकर्म ।
सौरेऽनृतद्रोहवधादिकर्म
    प्रसिध्यते वीर्यपतिप्ररब्धम् ॥२१॥
‹यवनजातके कर्मारम्भः ॥›

Apparatus
21b भौमे] भेदे N   21d °पराब्धं corr. to °परब्धं N   col. no space in N

78, 1–6

चरस्थिरद्विप्रकृतिस्वभावान्
    राशींश्च राशिप्रभवांश्च भावान्।
क्रमेण चन्द्रे रविणा प्रकुर्यात्
    कर्माणि तत्तत्प्रकृतीनि तेषु ॥१॥
धर्मार्थकामाश्रयमेतदेवं
    कर्म व्यवस्थं प्रसमीक्ष्य विद्वान्।
क्षेत्राश्रयक्षेत्रगुणानुबन्धि
    यद्यस्य कुर्वीत तदेव तेन ॥२॥
नित्यं स्वलग्नोपचये विलग्ने
    शुभाश्रिते पापतमैरयुक्ते।
शुभानुकू(ल)र्क्षगते च चन्द्रे
    सिद्धिं क्रियाणां यवना निरूचुः ॥३॥
मेषे सुवर्णाग्निमशुक्रियास्त्र-
    सैन्याहवस्तेयनृपाश्रयार्थाः।
कार्या वृषे गोकृषिवित्तकोश-
    क्रीडासुहृत्स्त्रीशयनार्जनादि ॥४॥
सुताङ्गनार्थश्रुतिशिल्पमन्त्र-
    सम्प्रीतिगीतादिकलास्तृतीये।
कार्याश्चतुर्थे मणिमण्डनाम्बु-
    स्त्रीक्षेत्रशय्याकुसुमप्रकाराः ॥५॥
वधादिपापाहवशास्त्रचेष्टाः
    सिंहे प्रशस्ताग्निनृपाश्रयाश्च।
कन्याप्रदानोद्वहनानि षष्ठे
    सौभाग्यशिल्पश्रुतिकर्म चेष्टम् ॥६॥

Apparatus

2b द्विद्वान् N    3b °युक्तैः N    3c no space in N
4a °पशु° N    4c गोदृषि° N    4d °नार्दनादि N
5a सुतङ्गना° N    6a °पापाहिव° N    6d केष्टं N

78,7–11

तुले विदेशव्यवहाररत्न-
क्रियाः प्रशस्ताः क्रयविक्रयाश्च।
विषाग्निदानारिविरोधरोध-
धोद्वा विघाटादि च वृश्चिके स्यात्॥७॥
रथास्त्रशिक्षादमनेषु धन्वी
भिषग्व्रतेज्याध्ययनेषु चेष्टः।
मृगे तु धान्याम्बुजलोहवेत्र-
वारिक्रियेष्टा कपटानृते च॥८॥
f.100 कुम्भे तु भृत्यासवलोहदीक्षा-
यानप्रहाराहवकर्मशस्त्रम्।
रत्नक्रियाम्बुप्लवपोतयात्रा
मीने प्रशस्यन्ति धनार्जनं च॥९॥
इष्टैः शुभैश्चानवसन्नवीर्यै-
र्निरीक्षितेष्वेतदुपैति सिद्धिम्।
क्रियाफलं यद्यहितर्क्षसंस्थाः
पश्येयुरुद्वृत्तफलं न पापाः॥१०॥
दिवाकराब्दो रणविग्रहोग्र-
क्षितीश्वरस्तीव्रविषज्वराग्निः।
अवर्षशुष्कक्षुपशष्पसस्य-
प्रचण्डवातोग्रमृगाक्षिरोगः॥११॥

Testimonia

11 is quoted by Utpala on Bṛhatsaṃhitā 19,1-3.

Apparatus

7b प्रशस्त्रः N  8d °वरि° N  9c °पोत्रयात्रा N
9d धनर्जनं N  10d °फला N  11b °श्वरतीव्र° N
11c °शुष्कद्रुमशुष्कसस्य° U  11d °बह्वुग्रविषाक्षि° U

78,12–15

सम्पन्नसस्यद्रुमपुष्पशालिः
    प्ररूढगुल्मो (बहु)वर्षवारिः ।
रसौषधिस्नेहरसप्रसेक-
    सान्द्रो रतिस्त्रीमतिवर्धनो ऽब्दः ॥१२॥
रणप्रचण्डक्षितिपो ऽल्पसस्यो
    विशुष्कवारिद्रुमपुष्पवीरुत् ।
अङ्गारकाब्दः प्रचुरोरगाग्नि-
    रातङ्कचौरक्षुदरिष्टदुष्टः ॥१३॥
सन्धानदानप्रयतक्षितीशः
    स्वाध्यायतीर्थाध्वरविद्विजौघः ।
निराधिरुङ्मध्यमसस्यवर्षो
    बौधः सुहृत्स्नेहनिबन्धनो ऽब्दः ॥१४॥
सुवर्षयज्ञोत्सवसम्प्रदानो
    निरुग्व्यथो धर्मपरावनीशः ।
स्फीतान्नपानो बहुसस्यधान्यो
    गुरोः स्वधर्मप्रयतप्रदो ऽब्दः ॥१५॥

Testimonia

12 is quoted by Utpala on Bṛhatsaṃhitā 19,4–6. 13 is quoted by Utpala on Bṛhatsaṃhitā 19,7–9. 14 is quoted by Utpala on Bṛhatsaṃhitā 19,10–12. 15 is quoted by Utpala on Bṛhatsaṃhitā 19,13–15.

Apparatus

12a °सस्यर्क्षस° N °पशाष्प° U 12b °वर्षधारः U 12c रत्नौ° U °स्नेहमदु° U 12d °स्त्रीसुख° U 13b °द्रुमशाष्पशीर्णः (var. °द्रुमसस्यवीरुत्) U 13d °चौर्य° U 14b °भिर्द्विजौघः N, °ध्वनीद्विजौघः U 14d °त्स्नेहविवर्धनो U 15c फीता° N स्फीतान्नपानैर्ब° (var. स्फीतान्नपानैर्ब°) U °धर्मो N, °कर्मा U 15d गुरु N स्वकर्मप्रयतप्रजो U

78, 16–18

पर्याप्तसस्यस्फुटवर्षमेघः
    प्ररूढवल्लीनवपुष्पशष्पः।
कामप्रकामक्षितिपो मुदाढ्यः
    शौक्रो ऽङ्गनाहर्षवपुःप्रदो ऽब्दः ॥१६॥
दुष्टाल्पवर्षप्रबलानिलाग्नि-
    विपन्नसस्यस्खलितक्षितीशः।
मृत्युक्षयातङ्कभयोपसृष्टः
    शनैश्चराब्दः पशुशूद्रगोघ्नः ॥१७॥
अब्दाश्रयं लक्षणमीरितं यद्
    ग्रहस्वभावं विहितं प्रजानाम्।
तदेव तन्मासदिनर्तुषूक्तं
    तदीश्वरस्थानविकल्पितं च ॥१८॥
<यवनजातक आरम्भविधिः ॥>

Testimonia

16 is quoted by Utpala on Bṛhatsaṃhitā 19, 16–18. 17 is quoted by Utpala on Bṛhatsaṃhitā 19, 19–21. 18 is quoted by Utpala on Bṛhatsaṃhitā 19, 1–3.

Apparatus

16a पर्यास्त° N °सौख्यस्फुटसस्यमेघाः U 16b °वरशष्पपुष्पः U 17a दुष्टाश्म° N, तुष्टाल्प° U 17c मृत्युक्षुद्भया° U °यान्तेक° N °जुष्टः U 18a °मीरितो N 18b °स्वभावप्रभावं जनानां U col. no space in N

79,1-6

सर्वस्य (होरा)विधिसङ्ग्रहस्य
चक्षुः परं यद् विबुधा वदन्ति।
समासतस्तद्यवनोपदेशाद्
वक्ष्ये स्फुटं चरितं ग्रहाणाम्॥१॥
युगं महत् केचिदुशन्ति सौरं
सूक्ष्मं च तद्वद् ग्रहणार्थमाद्याः।
तदागमाद् बोधमिति प्रभेदाद्
f. 100v दृष्टेषु सव्याससमासबुद्धिः॥२॥
मुनेर्वशिष्ठ(स्य) मतानुवृत्त्या
केषांचिदिष्टं विधितत्पराणाम्।
यवनोत्तमानां
षष्टिः शतं पंचयुतं समानाम्॥३॥
तदाद्यतिथ्यादि युगादि सौरं
मेषादिभागस्थितयो रवीन्द्वोः।
मेषोदये प्रागृतचैत्रशुक्ले
प्रवृत्तिते मानगतिक्रमेण॥४॥
दिनं यतःषष्टिलवोनमाहु-
स्तिथिं प्रषष्ट्यन्त्यमहस्तु सर्वम्।
द्विषष्टिभागं नवतिः सहस्रं
युगे त्वृतूनाममशद्वशतम्॥५॥
क्रमेण चन्द्रः क्षयवृद्धिलक्ष्य-
स्तिथिस्ततुर्मानविधानबीजः।
षड्पंचकाग्रे द्विशते सहस्रं
तेषां युगे बिन्द्युतानि षट् च॥६॥

Apparatus

2b सूक्ष्मर्थं N 2d दृष्टषु N 3d षष्टशतं N 4b °स्थितियो रविन्द्वोः N 4c मेषादयो N 5b प्रशब्दान्त्य° N 5c त्रिषष्टिभागं नवतः N 5d युगे तु मानाममसमसषट्कं N 6b °जीवः N 6c °काग्रा द्विशती N 6d प्रधि विध्ययुतानि N

79, 7–12

त्रिंशन्मुहूर्तं दिनरात्रमुक्तं
    सूर्योदयात् कालबुधास्तदाहुः।
तेषां शते द्वे त्रिशदेककाग्रे
    षट् खायुतान्यर्कयुगं वदन्ति॥७॥
एकाधिकास्त्रिंशशतद्वयाग्राः
    पंचाशदष्टौ च सहस्रनिघ्नाः।
चन्द्रोदयाः स्युर्युगवर्षहीना-
    स्त्वर्कोदयोस्ते भगणोदयाः स्युः॥८॥
शते द्विशोने दशकाहते च
    युगाधिमासैश्च युतं तदेव।
शरत्रिशत् षड् द्विगुणं सहस्रं
    युगे स्युरर्केन्दुसमाससंख्याः॥९॥
यत् सावनार्केन्दवमासकालाद्
    विशिष्यते भास्करचन्द्रयोश्च।
त एकषष्टिः शशिनोऽधिमासा
    ज्ञेयाः स्वकालादिगुणक्रमेण॥१०॥
त्रिंशद्दिनाः सावनमास आर्क-
    स्त्र्यग्रैर्विशिष्टा दशभिर्मुहूर्तैः।
कलाचतुष्केण च पंचषट्कै-
    स्त्र्यग्र्यांशकैश्च द्विगुणैश्चतुर्भिः॥११॥
अह्नस्तु षट् पंचकमेकहीनं
    क्षणाष्टकौ द्वौ द्विकलाविहीनौ।
कलालवाः सप्त शतं विदिष्टः
    समासभिन्नः शशिनः स मासः॥१२॥

Apparatus

7c त्रिकृदष्टकाग्रे N   7d षद्वायु° N   8c °वर्षमिश्रा° N   9a द्विकोणे N   °हृतेका N   9c शतद्वयं षट् N   10a °केन्द्रव° N   10d °कालाधि° N   11b °स्त्र्यंशो वि° N   11c °षट्क° N   12a अह्ना तु N   12c शती द्विषष्टा N   12d स्वमासभिन्नाः N

79,13–16

आर्धस्तु कृत्तिर्द्विगुणस्तु कृत्स्न
व्रणाः व्रणार्धं च कलाश्च तिस्रः।
f.101 कलांशकानां च त्रिसप्तकाग्रं
शतं विभक्तो दलितैः समासैः ॥१३॥
गते षडेके ऽर्धशते समानां
कालक्रियातत्त्वमिदं शकानाम्।
रवेरुषे सूर्यदिने †प्रदे ऽर्के†
क्रमात्तदब्दादि युगादि भानोः ॥१४॥
गतेन साध्यर्धयुतेन युक्ता
व्येकेन कोषाणगताब्दसंख्या।
कालं शकानां परिशोध्य तस्मा-
दतीतवर्षा युगवर्षजाताः ॥१५॥
युगे गताब्दास्त्रिचतुष्कनिघ्ना-
स्तदब्दमासाधिकमासयुक्ताः।
त्रिंशद्गुणास्ते तिथिभिः समेताः
पृथग्युगाब्दैः सहिता व्यतीतैः ॥१६॥

Testimonia

15 is quoted by Utpala on Bṛhajjātaka 7,9.

Apparatus

13a अर्धस्तु N °द्विगुणास्तु N 13d विभक्तं N 14a षडग्रे N 14c रवेयुग्रं N प्रदेर्कः N 15a साध्यर्ध° U युक्त्या N 15b °प्येकेन U केषां न गता° U 15c कालः NU शको १०४४नांशविं-शोध्य U 15d °दतीतमन्ययुगवर्षयातं N, °दतीतवर्षाद्युगवर्षजातं U 16a युगं N

79,17–21

अहर्गणं छन्नफलं ततो यद्
गतावमास्ता दिनरात्रिशेषम्।
विहृत्य षट् पंचगुणैर्दिनानि
लब्धा मुहूर्तास्तिथिशेषगास्ते ॥१७॥
गतावमोनं तु गणं तिथीनां
विन्द्याद्युगातीतदिनानि तानि।
सम्पाङ्गमानं ग्रहवासराणां
तत्रार्थनायामनुमानमिच्छेत् ॥१८॥
एकादशैकाद(श)भागयुक्त्या
युगाद्गताब्दान् विहृतान् विभज्य।
षट्पंचकेनाधिकमासकास्ते
द्वि †हं (त्रि)णा:† सावनसूर्ययोस्तु ॥१९॥
तिथीस्तदब्दाधिकमासकै(श्च)
हृता: षडेकादशकेन भज्यात्।
पंचाष्टकैकेन युतेन युक्तं
ज्ञेयास्तु मासा द्विगुणं सहस्रम् ॥२०॥
मासास्तदब्दे रविभुक्तराशी:
संविद्धि ष(ट्प)चगुणास्तु भागान्।
होराधरै: सूर्ययुत: स भागो
लब्धो भवेन् मध्यमचारयोगे ॥२१॥

Apparatus

17a चतुर्घ्नेनच्छन्न° N  य° N  17b स्वहरात्रिसेषन् N  17c विशोध्य N  पंचगुणा: स्वहार: N  18a गुण(कं) N  18c यतर्त्वमान N  19a no space in N °युक्त्याद् N  19b °ब्दाद्युगनां विभेज्या N  20a °स्तदाब्दा° N  no space in N  20b हीना: N हन्यात् N  20d ज्ञेयो त्र होरा N  21a लंबास्त° N  21b सद्विद्वि N  21c होराहृता: N

79,22-26

तन्मासयातैस्त्रिचतुष्टनिघ्नै-
राद्वित्यभुक्तं तिथिभिर्युतं तत् ।
राशीः स्युरिन्दो रविभुक्तभागा-
स्तेभ्यो भवेदिष्टविमानमीक्ष्य ॥२२॥
त्रयस्त्रिकृत् षड्गुणितास्तु भुक्त्वा
लिप्ता द्विषैष्टिस्त्वधिकास्तु राशेः ।
चक्रार्धयोर्मा(सम)ध्ययास्यैः
क्रमोत्क्रमाभ्यां रविरेति राशिम् ॥२३॥
इन्दुर्हि लिप्ताः शतसप्त भुक्त्वा
f. 101v ा प्त च तु ।
चतुस्त्रयो विंशतिभागयुक्ताः
पादाधिकाः पंचम ॥२४॥
⟨क्र⟩मोत्क्रमाभ्यां प्रथमान्त्यभुक्ति-
श्चक्रार्धयोर्भेषु चरन् शशाङ्कः ।
भुक्ति विलिप्ताः सकलाः स्फटाख्याः
स्वोच्चांशलिप्तास्त्व†धिकैः कलांशैः† ॥२५॥
आद्यन्तराश्योरुदयप्रमाण-
माद्या मुहूर्तद्वयमादिशन्ति ।
क्रमोत्क्रमादभ्यधिपंचमं तत्
क्षेत्रप्रमाणं भगणद्वये स्यात् ॥२६॥

Apparatus

22c राशेः N 22d °विनान° N 23a °स्तृवृत् N भाव्या N 23b लिप्ता द्विसप्ता द्विसप्तत्यधि° N 23c °षड्द्वयास्यः N 23d रविरन्ति N 24a अद्यार्धलिप्ताः सतृसप्त भागे N 24c सप्तत्रयो N °युक्तां N 24d पादाधिकां N 25a-b °भाग्य-श्चन्द्रा° N 26b मुहूर्त्ता° N 26d भगनाद्वयोः N

79, 27-31

घट्यामथो कांचन⟨लो⟩हकायां
स्याद्दशांशको ऽङ्गुलतुल्यदीर्घः।
छिद्रं तदग्रेण समेति यत् स्याद्
वारि प्रमाणे तिथिनाडिकानाम्॥२७॥
त्रयः पलाः स्युः कुडवो ऽष्टमश्च
तन्नाडिकाख्यं विदुरेकषष्टिम्।
ताः षष्टिलिप्तापि च नाडिकाख्या
भवन्ति षष्टिर्द्युनिशा क्रमेण॥२८॥
कला निमेषाष्टशता दशोना
विदः कलास्त्रिंश⟨च्च⟩ नाडिका तु।
द्विनाडिकस्तु प्रथितो मुहूर्तो
मानप्रमाणादिविधिप्रसिद्धौ॥२९॥
रवेरुदग्मार्गगतिं मृगादौ
याम्यायनादिं तु चतुर्थभादौ।
विन्द्यादजादौ विषुवत्समाद्य-
मब्दे द्वितीयं ⟨तु⟩ तुलाधरादौ॥३०॥
रविः स्वमानेन भुनक्ति राशीन्
तद्विक्रमेणाहकृदिष्यते सः।
अहो द्युरात्रेश्च †फलो निरिष्ट†-
स्त्रिभा⟨ग⟩हीनो ऽयनयोः †कलैकः†॥३१॥

Apparatus

27a द्वाभ्यामथो कांचम  नकाभ्यां (न erased) N  27b समांशका N  °दीर्घाः N  27d वारो थ मानस्थितिनाडिकांशा N  28a फला N  28b °षष्टः N  28d श्रवन्ति षट च द्युनिशा N  29a काला N  29b कलास्तारशनाडिकास्तु N  30c विगुवत्त° N  30d no space in N  31a तुस्तुक्ति N  31b °मेण त्रिकृ° N  31c आहा N  31d कलैकाः N

79, 32-36

अहःप्रमाणार्धगुणस्य शङ्को-
    श्छायाङ्गुलैर्मध्यदिनाङ्गुलोनैः।
सशङ्कवैर्लब्धमहःप्रं त-
    दह्नो विशुद्धं त्वपराह्णि यावत्॥३२॥
मुहूर्तभागैरुदयप्रसिद्धि-
    र्ज्ञेयो गृहांशादिगणस्य सूक्ष्मा।
सूर्याश्रिताद्द्युगणात् प्रवृत्तिं
    सयोग्यलग्नोक्तविधिं निदध्यात्॥३३॥
सपंचषष्टिं त्रिशतं दिनानां
    व्यूनं द्विभिन्नं तु दिनांशकानाम्।
त्र्यूनं शतार्धं दिनकृत्समा स्याद्
    यया भवर्गं सविता भुनक्ति॥३४॥
f.102 शतं सषट्पंचक|
    त्रिंशद्विकैकोत्तरिका तथैकम्।
त्रिपंचकाग्रं च शतं युगानि
    गुर्वारसौरेन्दुबुधभार्गवानाम्॥३५॥
शतं सविंशद्दश पंचकाग्रा-
    स्त्रिंशत् त्रयः षट् त्रिचतुष्कनिघ्नाः।
स्वैः स्वैर्युगाब्दैरुदयाः स्युरेषां
    वितर्कयार्कादुदयान् वदन्ति॥३६॥

Apparatus

32a °गुणे स्य N  32c °महःपृतं N  32d °पराह्न N
33a-b °सिद्धैर्ज्ञेयो N  33b सूक्ष्म N  34a °षंट्का
त्रिसती N  गुणानां N  34b युगादिभिन्नं N
f. 102 is missing from the microfilm of N; the text from 35a to 58b depends on k and p  35b
द्विंस्वद्विक° p, om. k  36d वि – – – का° k
°दुदयो kp

79,37–41

स्वं स्वं युगं षष्टिशतं त्रयोघ्नं
गतोदयैः स्वैरुदया हृता ।
भवर्गभोगोद्धृतशेषमेषां
विद्याद् ग्रहाणां क्रमशः क्रमस्तात् ॥३७॥
युगात्तदब्देषु दश द्विकं च
षडेकहीनाश्च वपेदशीतिः ।
अतीतमेषां स्वयुगावशेषं
ज्ञेयं युगैकं क्रमशो ग्रहाणाम् ॥३८॥
षष्ट्यैः शतैः षड्गुणितैस्त्रिभिस्तु
आदित्यभुक्तैर्लवगणांशयुक्तैम् ।
हृतं पृथक् स्वैरुदयार्कभागै-
र्लब्धं क्रमघ्नं विदुरुद्गमं तु ॥३९॥
एकादशांशांश्चतुरांशभुक्त्या
गत्वा गुरुस्तांश्च शशाङ्कभुक्त्या ।
स्थित्वाष्टकं तत्र दशैकयुक्तं
दशांशभुक्तं समुपैति वक्रम् ॥४०॥
ततो गुरुस्तांश्च षडंशभुक्त्या
गत्वोर्(दयं सं)चरणं प्रयाति ।
भौमस्तु याति द्विशतं सषष्टिं
चतुस्त्रिकोणेन शतत्रयेण ॥४१॥

Apparatus

37a षष्टशतं त्रयघ्ना kp 37b ---य:--------k हृतादय: p 37d °णाद्ग्रमस: क्रमासात् p ग्रमस: k 38a युगान्त° kp 39a षष्टै: kp 39b °मुक्तर्लवगणांस्व° p, -र्लवगणांश° k 39d °र्लवृट्क्रम° k 40a °दशांश्च चत्° kp °भुत्क्य p 40b °भुत्क्य p 40c -ष्टकं k दशांसभुक्ते p 41a षडांश° kp 41b गत्वा ---k, तत्पंचता p चरमं kp 41c द्विसती kp सवस्तां k, सवस्त्रं p 41d सतत्त्रयेण k, सतत्रयेन p

79,42-46

स्थित्वांशकांस्त्रींश्चतुरंशभुक्त्या
समाधिकां विंशतिमेति वक्रे ।
तांस्त्रिंशभुक्त्या प्रतिगम्य याति
द्वात्रिंशतिं विंशतिमर्धषट् च ॥४२॥
गत्वाष्टवर्गेण चतुष्कमार्किः
सद्वादशाग्रेण शतेन याति ।
वक्रे तदित्वा च शतेन भूयो
यात्यष्टकं द्वादशभागभुक्त्या ॥४३॥
षडष्टकघ्नं द्विगुणाष्टकेन
गत्वाष्टकेन द्विगुणाष्टकं च ।
षड्भिश्चतुर्घ्नैस्तदुपेत्य वक्रे
द्विरष्टकेन प्रतियाति तच्च ॥४४॥
ततश्चतुःपंचकमेत्य सौम्यो
द्वात्रिंशतीभिस्त्रिच(तुर्थकै)श्च ।
शेषेण प्राच्यापरदर्शने तु
तेन †त्रितङ्क त्रिभिरेव वाच्यम्† ॥४५॥
शतेऽष्टकाग्रे ऽर्धशताधिके द्वे
गत्वाष्टवर्गेण शतद्वयेन ।
वक्रेऽष्टषट्केण चतुर्गुणं षड्
गत्वा दिनान् तिष्ठति पंच शुक्रः ॥४६॥

Apparatus
42c प्रतिगण्य kp 42d द्वात्रिंशतां kp विङ्कति° p °मर्द्धषद्च p, - - - - - k 43b °स्तद्वादशाग्रेण kp 43d यत्य° kp 44a °घ्नां kp 44c °श्चतुघ्नस्त° kp 45a °पंचमतीत्य kp 45b द्वात्रिंशकाभ्यां kp ति- - - - श्च k, त्रिच - - - - p 45c यात्यंगुरुदर्शने kp 45d जेन k त्रितद्धं p चोव्यं k 46a ष्टकेग्राध्यश्चता° kp 46c चतुर्गुणा kp 46d दिना kp

79,47–51

f.102v तान् पांच (षो)ड्डि: प्रतिगम्य षट्कै-
रष्टाभिरष्टौ द्विगुणैश्च गत्वा।
षड्भिश्चरन् सप्त —नक्ति शेषं
†सूर्याप कमेत्य† ॥४७॥
एषां च पंचांशकवर्ग—नुत्या
प्रागन्तरास्या गृह—नुक्तिरुक्ता।
अतो द्विरंशा—यधि—काधि—कं स्या(त्)
† पयोर—विद्वा—न्व—नुक्ति: ॥४८॥
अत: प्रवासोदयचक्रचारा
स्थितिक्रियाकेन गुणक्रमेण।
विद्याद् ग्रहाणामृजुवैकृतानि
संख्यानवृद्ध्या चरितानि सम्यक् ॥४९॥
शुक्रो ऽष्ट—भागान्तरसंस्थितो ऽर्का-
देकादशांशान्तरितश्च जीव:।
सन्दर्शने पंचदशान्तरस्था:
शेषा द्विषट्कान्तरितश्च सोम: ॥५०॥
अप्राप्तचारा: प्रतिलोमवक्रा-
स्तद्वक्र—स्था: प्रतिपूरयन्ति।
अत्क्रान्तचारा विषहन्ति वक्रं
टीनाधि—कं वक्रजमुत्तमं तु ॥५१॥

Apparatus

47a no space in kp प्रहिशत्य k, प्रहिषज्य p षट्प्र° k
47d सूर्यो --------- कं k, सूर्य्याप ----- कमंत्र्य p 48a
°वर्ण° p °—नुत्य k 48b प्रागन्तृ° k, प्रागत्रि° p °गृह° k
48c °धिरं kp 49c विद्यां kp 49d °नदृष्टा k, °नदृष्णा
p 50a शुक्रेष—भा° k, शुक्रेषु—भा° p °संस्थितर्का p,
सं--- k 50b एका kp °शांतरितश्च kp 51a °चार p
प्रतिलम्ब° kp 51c उत्क्रान्तचाराद्विष° kp वक्त्रा k,
वक्राद् p 51d °मुत्तरं तु p

79,52-56

सूर्येन्दुभौमैन्दवजीवशुक्र-
सौराः क्रमेणाह्ननिशाधिपाः स्युः।
अब्दाधिपास्त्वादिषु येऽधिपाः स्यु-
स्तदब्दपाद्यास्त्वृतुपा ऋतूनाम्॥५२॥
†उपान् विधानाऽ(ख्य)† समस्तिथीनां
गणस्तदब्दावमरात्रिहीनः।
यद्भुक्तसमग्रहभक्तमिष्टं
तदब्दपादि ग्रहवासरं तत्॥५३॥
रवीन्दुजार्किक्षितिसूनुशुक्र-
चन्द्राङ्गिरसः क्रमशोऽब्दपाः स्युः।
मासाधिपा विद्ध्ययनेश्वरौ तु
नित्यं रवीन्दू पठितौ समायाम्॥५४॥
आदित्यशुक्रैन्दवचन्द्रसौर-
जीवावनेयाः स्युरहोर्निशासु।
होरेश्वरास्तद्दिवसादिपानां
क्रमेण †नास्ते† तु चतुर्गुणाः षट्॥५५॥
प्रजाः सिसृक्षुः किल विश्वधाता
प्रजापतिः प्राग्व्रतमाचचार।
सर्वाद्भुशांशप्रभवात् स्वदेहाच्
छीर्षादितो वै भगणं ससर्ज॥५६॥

Apparatus

52b °ह्नाणिनर्तपाः स्युः p, ब्द निवर्त्तया- k 52c याधिपाब्या° kp 52d °स्तृतुपादृतेर्के k, °स्तृतुपादृतर्कात् p 53a उपा चिधाना p no space in kp समाति° kp 53b गुणा° kp °हीनात् kp 53c °भुक्त° k, °भुक्ति° p 53d °वासतं kp 54a °क्षिसूनु° k 54b °रौजार्क्रमशो ब्दमा k, °रोजार्कसमाब्दमा p 54d रविन्द्रो kp पथितौ p समायात् kp 55a °वक्रसौरा° p 55b °हेन्तिशासु kp, °हेक्षिशासु p 55c °साधियानि p 55d नास्त k 56a स्विसृक्षुः kp किल p, -- k 56b °मान्वचार k 56c सर्वादशां° kp °भवास्त्वदे° p

79,57–61

तेभ्यः स मेषादिगणं प्रजज्ञे
तेभ्यश्च तद्भेदविकल्पना स्यात्।
अतो भवर्गस्य विधिं प्रवेदे
प्रजाभवाभावविदीश्वरश्च ॥५७॥
सषेव धर्मान् सुगतिप्रणेयो
f. 103 भूता | ।
(सं)पन्नसंस्थित्युदयो यमाख्यो
विश्वात्मिको ऽयं विहितो ऽविकल्पः ॥५८॥
तपोभिरुग्रैर्विदुरश्विनौ तु
प्रजापतेः शास्त्रमिदं यतो ऽर्कः।
अतो ऽश्वयुग्मं विदधौ विधाता
शीर्षादि कालर्क्षशरीरचक्रे ॥५९॥
इति स्वभाषारचनाभिगुप्तां
विष्णुग्रहर्क्षे ।
महीपमुख्यैरनुदृष्टतत्त्वां
होरार्थरत्नाकरवाक्समुद्राम् ॥६०॥
सूर्यप्रसाद(ा)गततत्त्वदृष्टि-
र्लोकानुभावाय वचोभिराद्यैः।
इदं बभाषे निरवद्यवाक्यो
होरार्थशास्त्रं यवनेश्वरः प्राक् ॥६१॥

Apparatus

57a °गणान् p, °गनान् k  57b तद्भूदवि° p  57d °श्वरत्वं k  58a ससीत k  with f. 103 the text again depends on N directly  58c पंचशास्थित्यु-दयायसाख्यो N  58d विश्वात्मको N  59a °द्भुभिरश्विनौ N  59b प्रवापतुः N  र्कात् N  59c श्वयुग्भागिवदधौ विदधाता N  59d °चक्रं N  60c °तत्त्वात् N

79,62

स्फुजिध्वजो नाम बभूव राजा
य इन्द्रवज्राभिरिदं चकार।
नारायणाङ्केन्दुमिताब्ददृष्टं
कृत्स्नं चतुर्भिर्मतिमान् सहस्रैः ॥६२॥
यवनजातके हो⟨राविधिः⟩ समाप्तः॥

Apparatus
62c °मयादिदृष्टं N 62d सहस्रैरिति N after the col. N adds: उपेन्द्रवज्रावृत्त (space of 8 akṣaras)॥